* ॐ *

# समर्पणम् ।



धान्वन्तरमहाम्भोधि परपारजुषां सुधाम् ।
"सुखसागरी"ति प्रसिद्धिं भजतां धैर्यशालिनाम् ॥ १ ॥
"सिद्धयोग" महार्घौघ-निर्धूतातङ्करञ्जसाम् ।
पीयूषप्रतिमानेकरसरसायनकारिणाम् ॥ २ ॥
"ठाकुरदत्त"इतिनाम्नां धीमतां गुणशालिनाम् ।
टीकोपेतां कुन्दमालां मयाऽहमर्पयामि वः ॥ ३ ॥
यत्पदे, भवत्संसर्गलब्ध्वा मेधापुष्टिं विलक्षणाम् ।
इयं स्मृतिमिरं विहितायो शुभगमपद्धले ॥ ४ ॥

१२ । ११ । २०

समर्पकः
नृसिंहदेवः ।

|| ॐ ||

# द्वित्राः शब्दाः ।

माननीयाः प्रियपाठकमहाभागाः ! सुखबोधार्थिनो विद्यार्थिनश्च अनेकग्रन्थप्रकाशनबद्धपरिकराणां "मेहरचन्द लदमणदास" इत्येतेषां प्रेरणया अस्याः कुन्दमालायाः सरलसरलां मधुरमधुरां "सौभाग्यवतीं" नाम टीकां व्यरचयम् । एतद्विषये बहु न वक्तव्यं, यादृशीयमुपकारिणी युक्तार्था टीका वर्तते तत्सर्वमेतस्याः स्वयमवलोकनेन भवद्भिर्ज्ञास्यते, अत्रा परैष्टीकाकारैर्बहु स्खलितं, ये "गोमतीं" भागीरथीं न जानन्ति नाटककर्त्तुश्च प्रमादं वदन्ति । भवतु नाम पराक्षेपे अस्माकं न किञ्चित्प्रयोजनं विवेकिनो हंसाः स्वयमेव क्षीरं नीरञ्च पृथक् २ कर्त्तुं समर्थाः । एतस्या विस्तृतभूमिकालेखाय पुरा सङ्कल्प आसीत्, किन्तु चिरात्प्रचिताया अप्येतस्याः प्रकाशने प्रकाशकानां बहु प्रयत्नशैथिल्यमभूदिति सम्प्रत्यहं कार्यान्तरे दत्तावकाशोऽत्र शिथिलरसस्तत्समालोचनामुपैक्षिषि, कालान्तरे द्वितीयसंस्करणे तां प्रकाशयिष्य इति भगवत्कृपाप्रार्थी सन् श्रीमतः क्षमां याचे ।

अपिच—यथाकालं यथाबुद्धिबलोदयमेतस्याः संस्करणे यतमानेऽपि मयि मनुष्यबुद्धिनिसर्गहेतोरक्षरयोजकानाञ्चानवधानतया क्वचित् २ त्रुटयः सञ्जाताः । यथा—

| पृ० पं० | अशुद्धम् | शुद्धम् |
| --- | --- | --- |
| २८—१६ | अनेलेन | अनिलेन । |
| ११—१२ | सीतेवासरखण्डम् | सीतावदरखण्डम् । |
| १८४—११ | बान्धवः | सम्बन्धिनः=बान्धवाः । इति । |

अनयैव रीत्या यदि कचिद्वर्णमात्रादित्रुटय उपलभ्येरन् तदा कृपया शोधनेन मामनुकम्पयन्तु ।

किञ्च—टीकासमाप्तिपुष्पिकापाठे प्रायः सर्वेष्वङ्केषु—"शास्त्रिविरचितायाम्" इत्यस्य स्थाने "शास्त्रिणा विरचितायाम्" इति शुद्धं पठनीयम् ।

६० पृष्ठे अन्तिमायाः पङ्क्तेरग्रे—

"अथवा—"दिश" इति द्वितीयाबहुवचनम्
दिशो व्याप्नोतीत्यर्थः" इत्यधिकं पठनीयम् ।

कोऽयं "दिङ्नागो" ऽस्याः प्रणेता महाकविरित्यादिविषयजातमपि द्वितीयसंस्करणे सम्यङ्निरूपयिष्यामि । परं—दिङ्नागोऽयं बौद्धो वात्स्यायनप्रणीतन्यायभाष्यपराघातकर्ता तर्कप्रवरमतिरिति केषां धारणा ।

ता० ई० २८-१२-२६ } विदुषामनुचरः
नृसिंहदेवः ।

श्रीः

# कुन्दमाला

## दिङ्नागाचार्यप्रणीता

### प्रथमोऽङ्कः

जम्भारिमौलिमन्दारमालिकामधुचुम्बिनः ।
पिबेयुरन्तरायाब्धिं हेरम्बपदपांसवः ॥१॥

---

## ( सौरभोल्लासिनी=सौभाग्यवती )

( टीकाकृन्मङ्गलम् )

शब्दतत्त्वं परब्रह्म नित्यं नित्यमुपास्महे ।
वर्णः पदं तथा वाक्यं यद्विवर्त्तो विराजते ॥१॥
देवीं वाचं नमस्कुर्वे चतुर्धा स्थितिशालिनीम् ।
यत्प्रसादविहीनानां मूकता नैव नश्यति ॥२॥

इह खलु नाऽविदितं विदुषा यत् प्रेक्षावता प्रवृत्तिम्प्रतीष्टसाधनताज्ञानमेव कारणम्, नहि कोऽपि विद्वान् स्वेष्टसाधनमविज्ञाय कस्मिंश्चिदपि कर्मणि प्रवर्तमानो दृष्ट इति सर्वेषां नः प्रत्यक्षमेतत् । शास्त्रञ्च नानाप्रस्थानकं भिन्नं भिन्नं प्रयोजनमनुसन्धाय तत्तदधिकारपूर्वकमुपदिष्टं मुनिभिरित्यत्रापि सतां न सन्देहः । काव्यं नाम सहृदयहृदयावर्जकं रसप्रधानं शास्त्रमपि शास्त्रेष्वन्यतमम्, यस्यैवं प्रयोजनमाहुराचार्याः—

निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कविः कुर्वन् कीर्त्तिं प्रीतिञ्च विन्दन्ति ॥

इति सरस्वतीकण्ठाभरणे ।

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्त्तिं प्रीतिञ्च साधु काव्यनिषेवणम् ॥ इति रसप्रकाशे ।

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥

इति च काव्यप्रकाशे । तदिदमुक्तकीर्त्यादिप्रयोजनमन्यथा प्रभुस-शब्दं, सुहृत्सम्मितया व्याख्या एव पुरुषार्थेषु विशिष्टकाव्यकर्तृषु आत्मानं प्रवर्तयन्ते । तच्च काव्यं दृश्यश्रव्यभेदाद् द्विविधम् । इदमस्य द्वैविध्यमप्यधिकारिभेदनिबन्धनम् । तद्यथा—ये खलु नवं सुकुमारमतयो राजपुत्रप्रभृतयो वेदादिशास्त्राध्ययनेन धर्मार्थकाममोक्षाख्येषु चतुर्विधेषु पुरुषार्थेषु तत्साधनेषु च व्युत्पत्तिभाजो न भवितुमर्हन्ति तेषु केचिदुत्तमाः रसप्रधानैः श्रव्यैः काव्यैर्गोष्ठीमाचरन्तः, ततोऽन्येऽपि मन्दमतयस्तथोत्साहमप्रकटयन्तो नृत्यादिप्रसङ्गमारचयन्तः समयं यापयन्ति । ते सर्वेऽपि गुडजिह्विकान्यायमनुसृत्य कटुकौषधपानादाविव दृश्यकाव्यमभिनीय रसास्वादोत्पादनद्वारा “ माता कथं व्यवहर्तव्या ? पितुराज्ञा कथं पालनीया ? भ्रातृभिः सह कथं विभज्य व्यवहारः कर्तव्यः ? राजादिश्च कथमुपचरणीय ” इत्येवमादिशिक्षाद्वारेण सत्कर्मसु प्रवर्तनीयाः, रावणादिवच्च असद्भ्यः कर्मभ्यो निवर्तनीया भवन्तीति युज्यते काव्यानुशासनसमाचारः । यदुक्तम्—

स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुञ्जते ।
प्रथमं लीढमधवः पिबन्ति कटुकौषधम् ॥ इति ।

एतदुक्तं भवति—प्रथमाः श्रव्यात्मककाव्याधिकारिणः अन्तिमाश्च विशिष्य दृश्यकाव्याधिकारिणः । यदाह भरतः—

न तज्ज्ञानं न तच्छिल्पं न सा विद्या न ताः कलाः ।
नासौ योगो न तत्कर्म नाटके यन्न दृश्यते ॥

इत्येवं बुद्धिवृत्तिसमवधानेन व्युत्पाद्यमानास्ते स्वपरहिताय प्रभवन्तो लोकयात्रानिर्वहणक्षमा जायन्त इत्यालोच्य “ काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ” इति च सत्सरणिमनुसृत्य दिङ्नागनामा महाकविः “ नाटकान्तं कवित्वम् ” इत्युक्तिमपि सार्थकयन् प्रजारञ्जनपतिभक्तिपरायणत्वगुर्वाज्ञापालनाद्याचारादर्शमहत्त्वसमुद्बोधकं “ कुन्दमालाख्यं ” प्रबन्धं रिरचयिषुर्मन्यस्य निर्विघ्नसमाप्तिहेतवे श्रुतिबोधितकर्तव्यताकं शिष्टाचारपरम्पराप्राप्तं मङ्गलं ईप्सायाः-

आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥

इत्युक्तलक्षणा सकलप्रबन्धप्रत्यूहप्रशमनी पूर्वरङ्गस्य प्रधानाङ्गभूता विनायकस्मरणोपनिबद्धा * नान्दी प्रयुङ्क्ते—**जम्भारीति** । "हेरम्बपदपांसवोऽन्तरायाब्धिं पिबेयु"रिति योजना । हेरम्बो गणपतिरूपेणावतीर्णो भगवानेव, तस्य हेरम्बस्य विघ्नेश्वरस्य पदपांसवः = चरणरजांसि, अन्तरायाब्धिम् = अन्तराया विघ्ना एव अब्धिः समुद्रः तं पिबेयुः = शोषयेयुरित्यर्थः । तान् विशिनष्टि—**जम्भारीति** । जम्भ तन्नामाऽसुरविशेषः तस्य अरिः शत्रुरिन्द्रः, तस्य मौलौ किरीटे या मन्दारमालिका देवराजत्वाद् दैवैरेवार्पिताः

* नन्दन्ति अस्यां कुशीलवाद्या इति **नान्दी** । स्तुत्यर्थक-नदिधातोः पृषोदरादित्वात्साधुः । उक्तं हि—

स्तुत्यर्थे नदिधातौ वा समृद्धयर्थे च वा पुनः ।
पृषोदरादिपाठेन नान्दीसाधनमीरितम् ॥ इति ॥

अन्यत्र नाट्यप्रदीपे—

नन्दन्ति काव्यादि कवीन्द्रवर्गाः कुशीलवाः पारिषदाश्च सन्तः ।
यस्मादलं सज्जनसिन्धुहंसी तस्मादियं सा कथितेति नान्दी " इति ।

इयञ्च नान्दी चतुष्पदा बोध्या—

नान्दी पदैर्द्वादशभिरष्टभिर्वाप्यलङ्कृताम् ।
तां षोडशपदामेके केचिदाहुश्चतुष्पदाम् ॥

इति भरतादिशासनात् । "पद" पदेन कचित् सुप्तिङन्तात्मकपदस्य ग्रहणं कचिच्च श्लोकपादात्मकपदस्य । तदुक्तं नाट्यलोचनकारेण—"सुप्तिङन्तं पदमात्र श्लोकपादश्च वा पदम्" इति । किञ्च—

नमस्कृतिर्माङ्गलिकी आशीः पत्रावली तथा ।
नान्दी चतुर्धा निर्दिष्टा नाटकादिषु धीमता ॥

इत्यादिदशरूपकोक्तदिशा "पिबेयुरन्तरायाब्धिम्" इत्युक्तेरियमाशीरूपा नान्दी ज्ञेया । अधिकन्तु बालानुपयुक्तं मत्वा न लिख्यते ।

पारिजातपुष्पमालाः तासां यन्मधु मकरन्दः पुष्परस इति यावत्, तस्य मधुनश्चुम्बिनः संसर्गवन्तः। भक्तिप्रह्वेनेन्द्रेण यदा हेरम्बचरणयोः समौलि शिरो धृतं तदा तत्रस्थानां पारिजातकुसुममालानां मधु हेरम्बचरणपांसुभिः स्पृष्टमित्यहो तन्माहात्म्यमिति भावः।

"चुम्बिन" इत्यत्र वक्त्रसंयोगात्मकचुम्बिधातोर्मुख्यार्थोऽचेतनेषु पांसुषु तेन रूपेणाऽन्वयाऽसंभवाद्बाधितः सन् सामान्यविशेषभावसम्बन्धेन संयोगमात्रं लक्षयति, वाच्यार्थस्य चात्रात्यन्तं तिरस्कारः। महामहिमशालिभिरिन्द्रादिभिरपि दैत्यकृतविघ्नोपशमार्थमवश्याश्रयणीयत्वेन हेरम्बस्य भगवत उत्कर्षातिशयो व्यङ्ग्यः, स च नात्यन्तं गूढः, तेनास्य **गुणीभूतत्वम्**।

किञ्च—" पिबेयु " रितिपानार्थकात् पाधातोराशीर्लिङि पिबादेशे रूपम्। यद्यप्यत्र द्रवद्रव्यविगलाधःसंयोगात्मकव्यापाररूपः पाधातोरर्थो न घटते अचेतनानां पदपांसूनां गलात्मकविन्यासाद्यभावात्, तथापि पीतानामपां जाठरेण वह्निना शोषः सञ्जायते पुनरपि पिपासादर्शनात्, पांसुभिरपि चान्तरायालको जलमयोऽब्धिरन्तः क्रियते शोष्यते चेति मुख्यार्थपानासम्भवेऽपि लक्षणया शोषरूप एवार्थो बोध्यः, तेन सकलान्तरायध्वंसो विवक्षितः। फलञ्च हेरम्बपदपांसुषु लोकोत्तरसामर्थ्यातिशयबोधनम्। संयोगश्च सम्बन्धः।

एतेन विघ्नोपशमार्थिभिर्मर्त्यैरमर्त्यैः सर्वैरप्यवश्यमुपास्यो गणपतिर्भगवानित्यपि व्यक्तीभवति। अब्ध्यपेक्षया पांसूनां बहुत्वेन रूपतो मानतश्चाधिक्यं व्यज्यते। शोष्यमाणपानीयापेक्षया आधिक्ये सत्येव पांसुभिः शोषः क्रियेत। महतोऽपि महीयसोऽन्तरायाब्धेः कथं शोषः स्यादिति पांसुगतबहुवचनेन सा शङ्कापहृता भवति। अल्पाकारा अपि सङ्घीभूता महान्तमप्यभिभवन्तीति **वस्तुध्वनिः**। "अन्तराया एव अब्धि" रिति **रूपकम्**। "रूपकं रूपितारोपो विषये निरपह्नवे" इति तल्लक्षणात्। विषयपदेन उपमेयार्थग्रहणम्। अत्र—अन्तराया उपमेयभूताः। अब्धिश्चोपमानम्। उपमेयभूतान्तरायेषु उपमानभूतस्याब्धेरभेदारोपणाद्रूपकम्। रूपयति उपमानोपमेययोरभेदारोपणं करोतीति रूपकमिति व्युत्पत्तेः। "पिबेयु" रित्यर्थास्पत्वाद्दारीरलङ्कारोऽपि। कविनिष्ठहेरम्बविषय-

करतिभावस्याशीरूपवाक्यार्थस्याङ्गतया **प्रेयोऽलङ्कारश्च** । "अङ्गभूतो भाव प्रेयान्" इत्युक्ते । इन्द्रादिसकलदेवैश्वर्यापेक्षया हेरम्बविभूतेरतिशयतापि व्यज्यते, तेनोदात्तालङ्कारध्वनि । एवमत्र श्लोके वस्त्वलङ्कार (रस) भावध्वनित्वेन त्रिधा ध्वनिरिति ध्वनिविदा परामर्श ।

अत्र च रतिभावस्य हेरम्ब आलम्बनम्, हेरम्बनिष्ठसकलपुमर्थ प्रदानशक्तिमत्त्वादिकमुद्दीपनम् । तदीयस्मरणोत्तरजायमानरोमोद्गमादिकश्चानुभावा । तद्विषयकप्रवणतापूर्वकदीनोक्तिचिन्तास्मृतिहर्षाद्या व्यभिचारिण । एते सर्वे प्रधानतयाऽभिव्यज्यमाना हेरम्बविषयिणी रति सामाजिकहृदयेषु भावरूपतामापद्यते । यद्यप्यत्र विभाववदनुभावादीना नोपनिबन्धन तथापि तयोराक्षेपेणेष्टसिद्धि । उक्तञ्च दर्पणे—

सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत् ।
झटित्यन्यसमाक्षेपे तदा दोषो न विद्यते ॥ इति ॥

"जम्भारिमौली" इत्यादौ स्वरवैसादृश्येऽपि मकारादिव्यञ्जनसादृश्यात् 'अनुप्रास शब्दसाम्य वैषम्येऽपि स्वरस्य यत्" इत्युक्तलक्षणोऽनुप्रास । असावपि वृत्त्यनुगतत्वेन **वृत्त्यनुप्रास** । भकारमकारादीनाञ्च केषाञ्चिद्वर्णाना तुल्यस्थान उच्चार्यत्वात् **श्रुत्यनुप्रासोऽपि** । यदाह दर्पणकार —

उच्चार्यत्वाद् यदेकत्र स्थाने तालुरदादिके ।
सादृश्य व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते ॥ इति ॥

**वैदर्भी** चात्र रीति । "माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मिका । अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते" इति विश्वनाथोक्ते । **माधुर्यं गुण** । अत्र हि टठडढान् विना मूर्ध्नि वर्गान्त्यवर्णेन युक्ता "जम्भा" "मन्दा" "चुम्बि" "रन्त" "रम्य" इत्येवं वर्णा सन्ति । रचना च अन्त्यसमासा मधुराऽस्ति । एवम्—काव्यप्रकाशकारमतेनात्र उपनागरिका वृत्ति । द्राक्षापाकश्चायम् । "इक्षुपाक स कथितो बहिरन्त स्फुरद्रस" इति प्रतापरुद्रीये ।

अत्र प्राचां मतानुरोधेनापि केचिद् गुणा व्याख्यायन्ते । जम्भारीत्यादि बन्धस्य गाढत्वमोज । झटित्यर्थस्फुरणैर्बन्धशैथिल्यरूप प्रसादोऽपि ।

नच ओजोविपर्ययात्मा प्रसादो दोष एव कथं गुण इति वाच्यम्, संप्लवात्। संप्लवो मेलनम्। ओजसा गुणेन सह संप्लवात् प्रसादो गुण एव। नच विरुद्धयोः कथं मेलनात्मा संप्लव इति शङ्कनीयम्, रत्नादिविशेषविज्ञजनानुभवसदृशसहृदयानुभवैकवेद्यत्वात्। उक्तञ्च—

करुणप्रेक्षणीयेषु संप्लवः सुखदुःखयोः।
यथानुभवतः सिद्धस्तथैवोजःप्रसादयोः॥ इति॥

समता च। "अदूरव्यवधानन्तु समता परिकीर्त्तिता" इति। अर्थव्यक्तिरपि। वाक्यार्थस्य तावद्भिरेव पदैर्निराकाङ्क्षतया प्रतिपत्तेः। प्रतिपाद्यार्थप्रतिपादकाधिकपदाभावात् सम्मितत्वमपि गुणः। "यावदर्थपदत्वं संमितत्वमुदाहृतम्" इत्युक्तेः। हेरम्बविषयकरतिभावस्य व्यङ्ग्यत्वाद् गाम्भीर्यमपि। "ध्वनिमत्ता तु गाम्भीर्यम्" इत्युक्तेः। हेरम्बस्य विघ्ननिवारकत्वाद्यनेकार्थसाधकत्वव्यञ्जनात्प्रौढिरपि। "प्रौढिरुक्तेः परीपाकः" इति। उक्तेर्विलक्षणार्थाभिव्यञ्जकत्वमेव परीपाकः"। एवमेवान्यथापि अन्यान्यमतानुरोधितया गुणालङ्कारादिविवेचनं कर्त्तव्यम्। अन्यभूयस्त्वभिया बहु न प्रतन्यते। अग्रेऽपि यथोचितं व्याख्यास्यते, अनुक्तमनया दिशोहनीयम्।

कियासिषाटके धीरोदात्तो नायकः*। नायिका च स्वीया मुग्धा। रसो विप्रलम्भशृङ्गारोऽङ्गी। अन्ये करुणाद्या अङ्गभूताः। प्रसादो गुणः। वैदर्भीरीतिरित्यादिकं यथायथं वेद्यम्।

(व्या०) पिपेयुरिति—पा पाने। अस्माद्धातोः आशिषि लिङ्। "आशिषि लिङ्लोटौ" (३।३।१७३) इति। "पा घ्राध्मा"—

* अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।
स्थेयान्निगूढमानो "धीरोदात्तो" दृढव्रतः कथितः॥
प्रथमावतीर्णयौवनमदनविकारा रतौ वामा।
कथिता मृदुश्च माने समधिकलज्जावती "मुग्धा"॥

परमिदं लक्षणमेतस्यामवस्थायां सीतायां पूर्णतया घटते नवेति विज्ञाः स्वयं विवेचयन्तु।

( नान्द्यन्ते ततः प्रविशति सूत्रधारः )

---

( ७ । ३ । ७८ ) इति सूत्रेण पिबादेश । हे रम्बते इति हेरम्ब । रबि शब्दे । अस्माद्धातो पचाद्यचि ( ३ । १ १३४ ) " तत्पुरुषे कृति बहुलम् " ( ६ । ३ । १४ ) इति सप्तम्या अलुक् ।

( को० ) " हः शङ्करे हरौ हसे रणरोमाञ्चवाजिषु " इति नानार्थरत्नमाला । स्वामी तु ' हे उपसि रम्बते " इति व्युत्पादयाम्बभूव । " हेरम्बलम्बोदरगजाननाः" इत्यमर । हेरम्बः शौर्यगर्विते महिषे विघ्नराजे इति च कोषान्तरम्

" चूडा किरीट केशाश्च सयता मौलयस्त्रय " इत्यमरः । मौलि किरीटे धम्मिल्ले चूडायामनपुंसकम् । अशोकपादपे पुंसि " इति मेदिनी । " विघ्नोऽन्तराय प्रत्यूह " इत्यमर. । " रेणुर्द्वयो स्त्रिया धूलिः पांशु ( सु ) र्ना न द्वयो रजः " इत्यमर । " पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु " इत्यमर । " पदं शब्दे च वाक्ये च व्यवसायापदेशयोः । पादतच्चिन्हयो. स्थानत्राणयोरङ्कवस्तुनो. " इति विश्व. ।

अनुष्टुभि–" श्लोको " नाम छन्द. । तदुक्तम्—

श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् ।
द्विचतु पादयोर्ह्रस्व सप्तमं दीर्घमन्ययो ॥ इति

यद्यपि—" तो व्योमान्तलपुर्घनापहरणम् "—इत्युक्ते तगणस्य दुष्टफलत्वादादौ स न प्रयोक्तव्यः तथापि—

देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ।
ते सर्वे नैव निन्द्या. स्युर्लिपितो गणतोऽपि वा ॥

इति भामहोक्तेर्नैव दोष इत्यल बहु प्रसक्तानुप्रक्त्या ॥१॥

" नान्द्यन्त " इति । "आशीर्नमस्क्रियारूप श्लोकः काव्यार्थसूचक नान्दीति कथ्यते "-इत्युक्तलक्षणाया नान्द्या अन्ते नान्दीलक्षणमङ्गलक्रियाया अवसाने सूत्रधारः प्रविशतीत्यन्वयः ।

ननु—सूत्रधारपठनीया नान्दी, " सूत्रधारः पठेन्नान्दीम् " इत्युक्ते । नान्दीपाठानन्तरम् सूत्रधारप्रवेश अस्यैव च पाठावसरेऽन्य परस्पराश्रयो

ज्वालेयोर्ध्वविसर्पिणो परिणतस्यान्तस्तपस्तेजसो ।
गङ्गातोयतरङ्गसर्पवसतिर्वल्मीकलक्ष्मीरिव ।

---

दोष इति चेद् ? उच्यते—" नान्द्यन्ते " इत्यस्य नान्दीनामकसूत्रधारस्य अन्ते = निष्क्रान्तौ सूत्रधार इवापरः सूत्रधारः " स्थापक " नामा नटः प्रविशतीत्यर्थः । उक्तञ्च भरतेन—" अथ पात्राणि तत्रादौ नान्दी नान्दीन्तु यः पठेत् " इति । " नान्दीं प्रयुज्य निष्क्रामेत सूत्रधारः सहानुगः । स्थापकः प्रविशेत्पश्चात्सूत्रधारगुणाकृतिः ॥ पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः " इति च । शातकर्णोऽप्याह—

सूत्रधारगुणाकारः स्थापकः प्रविशेत्ततः ।
उपचारेण सोऽप्यत्र सूत्रधारोऽभिधीयते ॥ इति

साहित्यदर्पणे च—

* पूर्वरङ्गं विधायैव सूत्रधारो निवर्तते ।
प्रविश्य स्थापकस्तद्वत्काव्यमास्थापयेत्ततः ॥
दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः ।
सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा ॥

इत्युक्तम् । सूत्रं=प्रयोगानुष्ठानं धारयति प्रवर्तयतीति " सूत्रधारः " । कर्मण्यण् । तथाचोक्तम्—

नाट्योपकरणादीनि सूत्रमित्यभिधीयते ।
सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते ॥

पूर्वरङ्गस्य लक्षणन्तु साहित्यदर्पणे—

यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥ इत्यादि ।

ज्वालेयोर्ध्वविसर्पिणि—" शम्भोर्जटागहनतः यः पायाद् " इति सम्बन्धः । शम्भोः = महादेवस्य जटानां सटानां जटिलानां शिरोवालानां निलयः । गहनात् = गहनात् समुदायात् यः = तुष्यात् रक्ष्यात् गाम्भीर्यकात्

---

* पूर्वरङ्गं विधायैव = पूर्वरङ्गं सम्यक्परिपूर्णं कृत्वैवेत्यर्थः ।

**सन्ध्येवार्द्रमृणालकोमलतनोरिन्दोः सदास्थायिनी**
**पायाद्वस्तरुणारुणांशुकपिला शम्भोर्जटासन्ततिः ॥२॥**

---

पायात् = रक्षेत् उपद्रवेभ्य इति शेषः । प्रथमान्तैरूर्ध्वविसर्पिणीत्यादिभिः पदैर्जटासन्ततिं विशिनष्टि । या जटासन्ततिः परिणतस्य = परिपाकं गतस्य परां काष्ठां प्राप्तस्येति यावत्, अन्तस्तपस्तेजसः = अन्तस्तपः समाधिरेव तद्रूपस्य तेजसः अर्थात् वन्हेः ( अग्नेः ) " तेजो वाऽग्निः " ( तै० १ । १ । ४ । १ ) इति श्रुतेः । ज्वाला इव = अर्चिरिव ऊर्ध्वविसर्पिणी = ऊर्ध्वमभितः सञ्चारिणी ज्वालानामूर्ध्वविसर्पणं स्वभावः । अथवा — अन्तः = अभ्यन्तर एव परिणतस्य = सन्धुक्षमाणस्य तपस्तेजसः तपोवन्हेरिति व्याख्येयम् । सन्धुक्षमाणस्यैव वन्हेर्बलात् ज्वाला ऊर्ध्वमभितो विसर्पन्तीति वस्तुस्वभावः । **गङ्गेति**—तथा गङ्गा = सुरसरित् तस्याः तरङ्गा लहर्य्य एव सर्पा भुजङ्गाः तेषां वसतिः निवासस्थानभूता वल्मीकलक्ष्मीरिव = वल्मीकं वामलूरः तस्य लक्ष्मी. श्रीरिव, वल्मीकद्युतिरिव भासमानेत्यर्थः । सर्पा हि वल्मीके निवसन्ति । तथा—**सन्ध्येति**—आर्द्रमृणालकोमलतनोः = आर्द्रं सरसं यत् मृणालं बिसं तद्वत् कोमला मृद्वी तनुः शरीरं यस्य एवम्भूतस्य इन्दोः = चन्द्रस्य सदास्थायिनी = निरन्तरस्थितिशालिनी सन्ध्येव = सायंवेलेवेत्यर्थः । अन्या सन्ध्या नेन्दोः सदास्थायिनी, इयन्तु तनो विलक्षणेति भाव. । पुनः कीदृशी जटासन्ततिरित्याह—**तरुणेति** । तरुणः प्रौढो योऽरुणः सूरसूतः तस्य ये अंशवो मयूखाः तद्वत् कपिला कपिशा सुवर्णवर्णेत्यर्थः ।

**अत्रोत्प्रेक्षात्रयमाभाति**—तथा हि—"भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना । वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता" इति दर्पणोक्तमुत्प्रेक्षा-लक्षणम् । अस्यायमर्थः—प्रकृतस्य = प्रस्तुतस्योपमेयस्येति यावत् परात्मना = अप्रकृतस्वरूपेण उपमानरूपेण यत् तत्तादात्म्येन सम्भावना उत्कटकोटिकः संशयः सा "उत्प्रेक्षा" उत् = ऊर्ध्वं प्रेक्षा दृष्टिः ज्ञानं वा यस्यां सा तथाविधा तन्नामालङ्कार इत्यर्थः । "अन्यधर्मसम्बन्धनिमित्तेन अन्यस्यान्यतादात्म्य-सम्भावनमुत्प्रेक्षा" इति कथितम् । अत्र "जटासन्ततिः" उपमेयभूता प्रकृत-

आदिष्टोऽस्मि परिषदा—तत्रभवतोऽरारालपुरवास्तव्यस्य कवेर्दिङ्नाग-

---

स्यात् । प्रकृताया जटासन्ततेः अप्रकृततपस्तेजःसम्बन्धिज्वालातादात्म्येनो-ध्वविसर्पणं नाम क्रियोत्प्रेक्षा । तथा वल्मीकलक्ष्मीरिवेति स्वरूपोत्प्रेक्षा । "इन्दोः मन्दास्थायिनी सन्ध्येव" इत्यत्र तु क्रियास्वरूपोत्प्रेक्षे । सर्वत्र उत्प्रेक्षावाचकेव-शब्दप्रयोगाद् वाच्योत्प्रेक्षात्वं ज्ञेयम् । "गङ्गातरङ्गा एव सर्पा" इत्यत्र रूपकम् । "तद्रूपकमभेदो य उपमानोपमेययो" रित्युक्तेः । आर्द्रमृणालमिव कोमला इत्यत्र, "तरुणारुणांशव इव कोमला" इत्यत्र च वाचकलुप्तोपमा । "साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमाद्वयो" रिति "लुप्ता सामान्यधर्मादेरिति च ।" "पायाद्वः" इत्यत्र पूर्ववद् आशीरलङ्कारोऽपि । ऊर्ध्वविसर्पिणी परिणत इत्यादौ यथायथमनुप्रासोऽपीत्येवं तिलतण्डुलन्यायेनालङ्काराणां संसृष्टिर्ज्ञेया ।

( को० ) "वोढृर्येऽग्न्योर्जलकीलौ" "वामलूरश्च नाकुश्च वल्मीकं पुनपुंसकम्" "भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः" "मृणालं बिसम्" "सूर-सूतोऽरुणोऽनूरुः" "व्रतिनस्तु जटा सटा" इति सर्वत्रामरः ।

( व्या० ) "पायात्" इति रक्षणार्थकात् पाधातोः आशीर्लिङि प्रथमपुरुषैकवचने रूपम् ।

किञ्च—"श्लोकैः काव्यार्थसूचकै" रित्युक्तेः कथञ्चिदत्र नाट्यप्रति-पाद्यार्थसूचनापि नेतव्या । तथाहि—भगवत्पादस्पर्शमाहात्म्येन श्रीरामचन्द्र-श्रीरामचन्द्रेण गौतमीशापात्मोचितेति प्रथमपादेन सूचितम् । नानाविधदुस्तरदुःखा-तरङ्गाभिभूयमानतया विरहिणी भूमितनयावल्मीकस्य सूचनं द्वितीयपादेन । रघुवंशवर्धनहेतुकस्य कोमलतनुना धारितस्य सीता कदापि भगवतो न परित्यक्तेति तृतीयपादेन सूचितम् । वक्ष्यति चाग्रे—"भाने स्वप्नेऽपि भगवी मनु भावदेशस्य" इति ।

गस्य कृतिः कुन्दमाला नाम, सा त्वया प्रयोक्तव्येति । तद्यावदस्य सन्दर्भस्य प्रयोगसाचिव्यविधायिनीमार्यामाहूय रङ्गभूमिमवतरामि ।

---

रित्यर्थः । परितः सीदन्त्यस्यां वेदधर्मज्ञा इति परिषद् भवति । एवमिह परिषत्पदेन पक्षपातराहित्येन गुणग्राहित्वं व्यज्यते । परिषत्पदेनैव सभ्यप्रशंसापि सूचिता । उक्तञ्च भरतेन—

सभ्यास्तु विबुधैर्ज्ञेया ये हितान्विता जनाः ।
मध्यस्थाः सावधानाश्च वाग्मिनो न्यायवेदिनः ॥
अमन्दरसनिष्यन्दहृदया भूषणोज्ज्वलाः ।
सुवेषा भोगिनो वाथ मानामानविशारदाः ॥ इत्यादि ॥

परिषत्पदेन "प्ररोचना" नाम भारती वृत्तिरपि बोध्या ॥ उक्तञ्च—

प्ररोचना तु सा प्रोक्ता प्रकृतार्थप्रशंसया ।
सदस्यचित्तवृत्तीनामुन्मुखीकरणाय यत् ॥

भारतीवृत्तिलक्षणमपि भरतेनोक्तम्—

इयं नाट्यक्रियाहेतोर्भारती निर्मिता बुधैः ।
नाट्यादौ भारतीं वृत्तिं वृत्तिभेदेन योजयेत् ॥ इत्यादि ॥

एवञ्चास्माभिः सावधानैः सद्भिरेवाऽभिनेतव्यमित्यपि ध्वन्यते ।

तत्रभवतः=पूज्यस्य । अरारालपुरवास्तव्यस्य=अरारालपुरवासिनः । वसतीति वास्तव्यः । "वसेस्तव्यत्कर्त्तरि णिच्च" ( वा० ३ । १ । ९६ ) इति वार्त्तिकेन वसुधातोः कर्त्तरि तव्यत् । कवेः=काव्यकर्त्तुः । "कविर्वाल्मीकिशुक्रयो' । सूरौ काव्यकरे पुंसि स्त्रीलिङ्गे स्यात्तु योषिति" इति कोषान्तरात् । दिङ्नागस्य = दिङ्नागनाम्नः महाकवेः कृतिः = सन्दर्भरूपा "कुन्दमाला" नाम = कुन्दमालेति नाम्ना प्रसिद्धं नाटकं ( ख्यातवृत्तम् ) त्वया प्रयोक्तव्या = अभिनेयेत्यर्थः । तत् = तस्मात् कारणात् यावदस्य सन्दर्भस्य = सकलस्यास्य नाटकात्मनः दृश्यकाव्यस्य, प्रयोगसाचिव्यविधायिनीम् = प्रयोगोऽनुष्ठानं तस्य साचिव्यं साहित्यं सहयोगित्वं तद्विधायिनीम् अनुष्ठाने साहाय्याचरणकारिणीम्, आर्याम् = प्रियामाहूय, रङ्गभूमिम् = नाट्यशालाम्, अवतरामि = अभिनयार्थं प्रस्तौमि भवर्मेत्यर्थः । "यावत् तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः ।

( नेपथ्ये )

इत इतोऽवतरत्वार्या ।

सू०—कोनु खल्वयमार्यासमाह्वानेन सहायकमिव मे सम्पादयति । ( विलोक्य ) कष्टं भोः ! कष्टं भोः ! अतिकरुणं वर्तते—

**लङ्केश्वरस्य भवने सुचिरं स्थितेति**
**रामेण लोकपरिवादभयाकुलेन ।**

---

"**नेपथ्य**" इति । नेपथ्यं नाम रङ्गस्थलव्यतिरिक्तं जवनिकान्तरितं वर्णिकापरिग्रहणयोग्यं नटवर्गस्थानम् । "नेपथ्यं स्याज्जवनिका रङ्गभूमिः प्रसाधनम्" इत्यजयः ।

"**इत इत**" इति । रङ्गेत्यर्थः । अवतरत्वार्या । "पत्नी चार्येति सम्भाष्या" इति भरतवचनात् आर्या = पत्नी । "अवतरतु" इत्यामन्त्रणे लोट् । ( मम ) आर्या प्रवेशं लभतामित्यर्थः । प्रिये सर्वे सभ्या नाट्यदर्शनोत्सुकास्तव प्रवेशं प्रतिपालयन्तीति भावः । एतेन भवत्या विलम्बो न करणीय इत्यपि ध्वनितम् । ( सू० ) **अये ! कोन्विति** । अये ! इति सम्बुद्धिः । "नु खलु" इत्याश्चर्यं द्योतयतः । आर्यापदेन सूत्रधारः स्वभार्याह्वानं मन्यमानो वदति कोऽयमिति । आर्यासमाह्वानेन = आर्याया अभिमन्त्रणेन, सहायकमिव मे सम्पादयति = मम साहाय्यं करोतीत्यर्थः । अहमाशु कार्यसाधनायार्यामामन्त्रये अन्योऽपि तथैव तस्या आमन्त्रणेन मम साहाय्यमेव तनुत इति भावः । (विलोक्य) **कष्टमिति** "कष्टं भोः ! कष्टं भोः" इत्युक्त्या करुणमुपक्षिपति । अतिकरुणम् = अति-दैन्यं वर्तते । यथा चैवं तथा पात्रप्रवेशमुद्रां भावयन् पठति—"**लङ्के-श्वरस्ये**"ति ।

लङ्केश्वरः = लङ्काया ईश्वरो रावणः तस्य भवने = गेहे लङ्कायामिति यावत् सुचिरं = दीर्घकालं दशमासपर्यन्तं यावद्रावणो न हतः । "**कालाध्व-नो रत्यन्तसंयोगे**" ( २ । ३ । ५ ) इति द्वितीया । इति = हेतोः लोकानां प्रजानां कर्तृत्वेन प्रजासम्बन्धी यः परिवादोऽपवादः दोषारोपणमिति यावत् । ( परिवादोऽपवादे स्यात् इति मेदिनी ) तस्मात् यद् भयं भीतिर्भिन्दाऽपवादरूपा-

निर्वासितां जनपदादपि गर्भगुर्वीं
सीतां वनाय परिकर्षति लक्ष्मणोऽयम् ॥ ३ ॥

---

तेत्यर्थः तेनाकुलेन कातर्यं प्राप्तेन रामेण=दाशरथिना निर्वासिताम्=निष्कासितां, गर्भगुर्वीम्=गर्भेण गुर्वीं भारवतीं कठोरगर्भामित्यर्थः। एतेनासन्नप्रसवात्वं विशेषतया दयापात्रत्वं, तादृश्या अपि लोकरञ्जनार्थं परित्यागेन रामस्य धीरोदात्तधौरेयत्वञ्च व्यज्यते। एतादृशीं सीताम्=यज्ञार्थं भूमिकर्षणकाले लाङ्गलपद्धतित आविर्भूततयाऽऽजानशुद्धामपि जनकपुत्रीम्, अयं लक्ष्मणः=सुमित्रातनयः, वनाय=वनं नेतुं वने प्रवेशयितुमित्यर्थः।

**परिकर्षति**=रथादवतारयति। "उपसर्गाद्धात्वर्थो बलादन्यत्र नीयते" इत्युक्तेः। "वनाय" इत्यत्र—"**क्रियार्थोपपदस्य च कर्मणि स्थानिनः**" (२।३।१४) अप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी।

एवञ्च—अत्र "वस्तुप्रक्षेपणं कुर्यात् प्रसङ्गेनोपयोगिना" इत्युक्तनयेन सीतालक्ष्मणयोः प्रवेश उपक्षिप्तः। अयमिति शब्देन प्रयोगातिशयो दर्शितः। उक्तं दर्पणे—

यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयोजितः।
तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा॥ इति॥

अत्र नृत्यप्रयोगार्थं स्वभार्याह्वानमिच्छता सूत्रधारेण "सीतां वनाय परिकर्षति लक्ष्मणोऽयम्" इति सीतालक्ष्मणयोः प्रवेशं सूचयित्वा निष्क्रान्तेन स्वप्रयोगमतिशयान एव प्रयोगः प्रयोजितः। वसन्ततिलकावृत्तम्। "उक्ता वसन्ततिलका तभजा जगौ गः" इति तल्लक्षणात्। अत्र "मुखं" नाम सन्धिः। उक्तं हि दशरूपके—

मुखं बीजसमुत्पत्तिर्नानार्थरससम्भवा।
अङ्गानि द्वादशैतस्य बीजारम्भसमन्वयात्॥ इति॥

सन्धिरूपरूपो नामाङ्गं च। "बीजन्यास उपक्षेपात्" इति लक्षणात् "वनाय परिकर्षति लक्ष्मणोऽयम्" इत्यनेन सीताया वनप्राप्तिहेतुरुपक्षिप्तः॥३॥

( नेपथ्ये )

इत इतोऽवतरत्वार्या ।

सू०—कोनु खल्वयमार्यासमाह्वानेन सहायकमिव मे सम्पादयति । ( विलोक्य ) कष्टं भोः ! कष्टं भोः ! अतिकरुणं वर्तते—

लङ्केश्वरस्य भवने सुचिरं स्थितेति
रामेण लोकपरिवादभयाकुलेन ।

---

"नेपथ्य" इति । नेपथ्यं नाम रङ्गस्थलव्यतिरिक्तं जवनिकान्तरितं पर्याकापरिग्रहणयोग्यं नटवर्गस्थानम् । "नेपथ्यं स्याज्जवनिका रङ्गभूमिः प्रसाधनम्" इत्यजयः ।

"इत इत" इति । रङ्गेत्यर्थः । अवतरत्वार्या । "पत्नी चार्येति सम्भाष्या" इति भरतवचनात् आर्या = पत्नी । "अवतरतु" इत्यामन्त्रणे लोट् । ( मम ) आर्या प्रवेशं लभतामित्यर्थः । प्रिये सर्वे सभ्या नाट्यदर्शनोत्सुकास्तव प्रवेशं प्रतिपालयन्तीति भावः । एतेन भवत्या विलम्बो न करणीय इत्यपि ध्वनितम् । ( सू० ) अये ! कोन्विति । अये ! इति सम्बुद्धिः । "नु खलु" इत्याद्यर्थं द्योतयतः । आर्यापदेन सूत्रधारः स्वभार्याह्वानं मन्यमानो वदति कोऽयमिति । आर्यासमाह्वानेन = आर्याया अभिमन्त्रणेन, सहायकमिव मे सम्पादयति = मम साहाय्यं करोतीत्यर्थः । अहमाशु कार्यसाधनायार्यामामन्त्रये अन्योपि तथैव तस्या आमन्त्रणेन मम साहाय्यमेव तनुत इति भावः । (विलोक्य) कष्टमिति "कष्टं भोः ! कष्टं भोः" इत्युक्त्या करुणमुपक्षिपति । अतिकरुणम् = अति-दैन्यं वर्तते । यथा चैवं तथा पात्रप्रवेशमुद्रां भावयन् पठति—"लङ्केश्वरस्ये"ति ।

लङ्केश्वरः = लङ्काया ईश्वरो रावणः तस्य भवने = गृहे लङ्कायामिति यावत् सुचिरं = दीर्घकालं दशमासपर्यन्तं यावद्रावणो न हतः । "कालाध्वनो रत्यन्तसंयोगे" ( २ । ३ । ५ ) इति द्वितीया । इति = हेतोः लोकानां प्रजानां कर्तृत्वेन प्रजासम्बन्धी यः परिवादोऽपवादः दोषारोपणमिति यावत् । ( परिवादोऽपवादे स्याद् इति मेदिनी ) तस्माद् यद् भयं भीतिर्निन्दाऽगादिप्सु-

**निर्वासितां जनपदादपि गर्भगुर्वीं**
**सीतां वनाय परिकर्षति लक्ष्मणोऽयम् ॥ ३ ॥**

---

तेत्यर्थ तेनाकुलेन कातर्य प्राप्तेन रामेण=दाशरथिना निर्वासिताम्=निष्कासिता, गर्भगुर्वीम् = गर्भेण गुर्वीं भारवती कठोरगर्भामित्यर्थः । एतेनासन्नप्रसवात्व विशेषतया दयापात्रस्य, तादृश्या अपि लोकरञ्जनार्थं परित्यागेन रामस्य धीरे-दात्तधौरेयत्वञ्च व्यज्यते । एतादृशीं सीताम् = यज्ञार्थं भूमिकर्षणकाले लाङ्गलपद्धतित आविर्भूततयाऽऽत्मशुद्धामपि जनकतनयाम्, अयं लक्ष्मण = सुमित्रातनय, वनाय = वनं नेतुं वनं प्रवेशयितुमित्यर्थ ।

**परिकर्षति**=रथादवतारयति । "उपसर्गाद्धात्वर्थो बलादन्यत्र नीयते" इत्युक्ते । "वनाय" इत्यत्र-'**क्रियार्थोपपदस्य च कर्मणि स्थानिन** " ( २ । ३ । १४ ) अप्रयुज्यमानस्य तुमुन कर्मणि चतुर्थी ।

एवञ्च—अत्र "वस्तुप्रक्षेपेण कुर्यात् प्रसङ्गेनोपयोगिना" इत्युक्तनयेन सीतालक्ष्मणयो प्रवेश उपक्षिप्त । अयमिति शब्देन प्रयोगातिशयो दर्शित । उक्तं दर्पणे—

यदि प्रयोग एकस्मिन् प्रयोगोऽन्य. प्रयोजित ।
तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा ॥ इति ॥

अत्र नृत्यप्रयोगार्थं सभार्याह्वानमिच्छता सूत्रधारेण 'सीता वनाय परिकर्षति लक्ष्मणोऽयम्" इति सीतालक्ष्मणयो प्रवेश सूचयित्वा निष्क्रान्तेन स्वप्रयोगमतिशयान एव प्रयोग प्रयोजित । वसन्ततिलकावृत्तम् । "उक्ता वसन्ततिलका तभजा जगौ ग" इति तल्लक्षणात् । अत्र "मुख" नाम सन्धि । उक्तं हि दशरूपके—

मुखं बीजसमुत्पत्तिर्नानार्थरससम्भवा ।
अङ्गानि द्वादशैतस्य बीजारम्भसमन्वयात् ॥ इति ॥

मन्धिरुपक्षेपो नामाङ्ग च । "बीजन्यास उपक्षेपः' इति लक्षणात् "वनाय परिकर्षति लक्ष्मणोऽयम्" इत्यनेन सीताया वनप्राप्तिरूपबीजस्य क्षेपः ॥३॥

( इति निष्क्रान्तः )

## स्थापना

( ततः प्रविशति रथाधिरूढा सीता सारथिर्लक्ष्मणश्च )

"इति निष्क्रान्तः" इति । इति शब्दः समाप्तौ । प्रस्तावनां समाप्येत्यर्थः । "इति हेतुप्रकरणप्रकारादिसमाप्तिषु" इत्यमरः । "संसूच्य पात्रं निर्गच्छेत्सूत्रधारः सहेतरः" इत्युक्त्या पात्रं संसूच्य सूत्रधारो निष्क्रान्तः । अन्यत्राप्युक्तम्—

"एषामन्यतमेनार्थं पात्रं चाक्षिप्य सूत्रभृत् ।
प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रपञ्चयेत् ॥ इति ॥

"स्थापना" इति । प्रस्तावनेत्यर्थः । तल्लक्षणन्तु—

प्रस्तावना स्थापनेतद्द्विधा स्यादिदमामुखम् ।
विदूषकनटीपारिपार्श्वकैः सह संलपन् ॥
श्लोकवीथ्यङ्गसहितान्यामुखाङ्गानि सूत्रकृत् ।
बीजयेदत्र भाव्यर्थं सैषा प्रस्तावना मता ॥ इति ॥

प्रस्तावनां समाप्य सम्प्रति प्रकृते नाटकमुखसन्धिरङ्गरचारभ्यते—"ततः प्रविशती"त्यादिना । मुखसन्धिलक्षणन्तु—

यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा ।
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्तितम् ॥ इति ॥

अत्र सीताया वनप्रवेशप्रयोजनात्मकवाक्यार्थस्य तदुपयुक्तगहनलतादिकथनरूपवाक्यान्तरार्थसम्बन्धत्वेन प्रारम्भबीजसमुत्पत्तिसम्बन्धतया चायं मुखसन्धिरिति लक्षणसमन्वयः । ननु—प्रस्तावनान्ते मुखसन्धिमयोचः सम्प्रत्यङ्गारम्भे पुनर्वाचि ? सत्यम्, उभयथा सम्प्रदायं निरीक्ष्य *मतभेदप्रदर्शनं कृतं

* मतभेदप्रदर्शनं तु—नाट्यशास्त्रीयानेकग्रन्थदर्शनेन अनेकविधनाटकपाठदर्शनेन च सुबोधो भवति ।

ल—इत इतोऽवतरत्वार्या। एतानि गहनतरुलताप्रतानसरुद्धतया रथप्रवेशायोग्यानि भागीरथीतीरकाननानि। तदवतरत्वार्या।

सी—(१) वच्छ लक्खण, अदिप्पउत्ततुरगमवेअकम्पिअदेहा एत्थ ण पारेमि सठादु, किं पुण ओदरिदु।

(१) वत्स! लक्ष्मण! अतिप्रवृत्ततुरङ्गमवेगकम्पितदेहा न पारयामि सस्थातु, किं पुनरवतरितुम्।

यथा रोचेत तथा स्वाकर्तव्यम्, मम तु नैकत्राग्रह *। अङ्कलक्षण यथा दर्पणे—

भावाविधामसयुक्तोनातिप्रचुरपद्यवान्।

आवश्यकाना कार्याणामविरोधाद्विनिर्मित ॥ इत्यादिज्ञेयम्।

"रथाधिरूढे" इति। रथमधिरूढा "द्वितीयाश्रितातीत"—(२।१।२४) इति योगविभागात्समास.। "एतानि"—इति। गहना निबिडाश्च ते तरवो वृक्षा तथा लता प्रततय (वल्ली तु प्रततिर्लतेत्यमर) तासा गहनतरुलताना = घनीभूतवृक्षवल्लीना प्रतानै शाखापत्रसञ्चयै संरुद्ध तया व्याप्ततयाऽवकाशाभावात् रथप्रवेशस्य अयोग्यानि अनर्हाणि तदुपयुक्त सरणरभावात्, भागीरथ्या गङ्गाया तीरकाननानि = तीरे तटे काननानि वनानि तदसमापवर्तीनि वनानीत्यर्थ। तत् = तस्माद्धेतो, अवतरतु = अनैवा वरोहण करोतु। आर्या = पूज्या।

वत्सेति सस्कृतम्। अतिप्रवृत्तेति—अतिप्रवृत्ता = अत्यन्त चलिता प्रबलवेगा इति यावत् ये तुरङ्गमा अश्वा तेषा वेगेन द्रुतगत्या कम्पित वेपथुमान् देह शरीर यस्या सा एवम्भूताऽह, सस्थातुम् = सम्यक् स्थिति कर्तुं, न पारयामि = समर्था न भवामि किं पुन अवतरितुम् = अवरोढुमित्यन्वयार्थ। कोमलप्रकृतीना रथायारूढाना मस्तिष्क भ्रमणेन देह कम्पितो भवतीति स्वभाव। एतेन कठोरगर्भायास्तस्या सर्वथा परिश्रमाक्षमत्व ध्वन्यते। "सस्थातुम्" इत्यमङ्गलव्यञ्जकतयाऽश्लीलम्।

* रङ्गेऽद्य आधुनिकच्छात्राणां कृते विशेषतयोपयोगाभाव मत्वा नाट्यशास्त्र विषये न बहु प्रपञ्चितम्।

ल—सुमन्त्र ! ननु तुरङ्गमनियमने क्रियतां यत्नः ।

सु—क्रियमाणमपि यत्नमतिवर्तन्ते गान्धर्वप्रिया वाजिनः। तथा हि—

अमी पतद्भिः श्रवणेष्वमन्दं विकृष्यमाणाः कलहंसनादैः ।
अनाश्रवाः प्रग्रहसंयमस्य तुरङ्गमास्तूर्णतरं प्रयान्ति ॥४॥

---

" संस्थाप्य पाण्डुपुत्राणाम् " इत्यादौ संस्थां मृत्युमिति व्याख्यानदर्शनात्। " अवस्थातु " मिति युज्यते। अथवा स्वतन्त्राः कवयः । ऐदंयुगीनेन अम्बिकादत्तव्यासेनापि महाकविना " शिवराजविजय " गद्ये बहुधैतादृशं स्वातन्त्र्यमाश्रितम् । "अवतरितुम्" इत्यत्र "वृतो वा" (७ २ ३८) इत्यनेन पक्षे इटो दीर्घाभावे रूपम् ।

**तुरङ्ग**मेति—तुरङ्गमनियमने = तुरङ्गमाणां रथवोढॄणामश्वानां नियमने स्तम्भने । **क्रियताम्** = अनुष्ठीयताम् । यत्नः = उद्योगः । अश्वानां प्रग्रहः-संयमनीया येन ते मन्दवेगाः सम्भवेयुरिति भावः । क्रियमाणम् = अनुष्ठीय-मानम् । यत्नमतिवर्तन्ते=यत्नमतिक्रम्य वर्तन्ते। कुत इत्याह—"**गान्धर्वप्रियाः**" इति । गान्धर्वं गीतं तस्य प्रियाः मनोहरशब्दश्रवणकुतूहलिन इत्यर्थः । वाजिनः=वेगवन्तोऽश्वाः । उक्तमेव वर्णयति **तथाहीति**—

**अमीति**—कलहंसनादैः=कलहंसानां कादम्बानां नादैः शब्दैः अथवा कलाः मधुरा हृदयप्रिया ये हंसानां नादाः रवास्तैः । कीदृशैः श्रवणेषु=श्रोत्रेषु पतद्भिः=पावरद्भिः अमन्दम्=अधिकाधिकं यथा तथा विकृष्यमाणाः= उल्लास्यमानाः, अतएव—प्रग्रहसंयमस्य=प्रग्रहाणां रश्मीनां संयमस्य रोधनस्य अनाश्रवाः=न आश्रवा अनाश्रवाः अनायत्ताः प्रग्रहसंयममुपेक्षमाणाः, अमी= रथे नियुक्ताः तुरङ्गमाः=वाजिनः तूर्णतरम्=अतिशीघ्रं प्रयान्ति=गतिं कुर्वते । स्वभावोक्तिरलङ्कारः । "**स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्**" इति तल्लक्षणात् । कलहंसनादकर्तृकाकर्षणरूपपदार्थस्य प्रग्रहसंयमानधीनताम्प्रति-हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमपि । "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" इति तल्लक्षणात्। अनुप्रासश्च। उपेन्द्रवज्रावृत्तम् । "उपेन्द्रवज्रा जतजा स्ततो गौ" इति तल्लक्षणात् । वैदर्भी रीतिः, गुणः प्रसादः । "**प्रग्रहस्तु तुलासूत्रे वल्गा**

ल—सुमन्त्र ! अतिरभसप्रवृत्तवेगत्वादनालक्षितसमविषमास्तुरङ्गमा गङ्गाप्रपाते स्यन्दनं विनिपातयन्ति, तत् सर्वात्मना क्रियतां यत्नः ।

सु—( रज्ज्वाकर्षणमभिनयति )

ल—एष स्थितो रथः, तदवतरतु देवी ।

सी—( अवतीर्य परिक्रामति )

ल—सुमन्त्र ! दीर्घमार्गपरिश्रान्ता एते तुरङ्गमाः, तद्विश्रामयैतान् ।

सु—यदाज्ञापयति देवः । ( इति रथमधिरुह्य निष्क्रान्तः )

ल—( परिक्रम्य आत्मगतम् )

समादिष्टोऽहमार्येण, अथवा स्वामिना—वत्स ! लक्ष्मण ! देव्याः किल

---

नियमने भुजे । इत्यादिरश्मी रश्मी च सुवर्णाहरिपादप' इति मेदिनी । "ग्रहवृदृनिश्चिगमश्च" ( ३ । ३ । ५८ ) इत्यनेन प्रोपसृष्टाद् ग्रहेरप् ॥४॥

**अतिरभसेति**—अति=अत्यन्तं यो रभसः रथकर्षणे हर्षः ( अर्थादश्वानामेव ) तेन ( धावनहर्षेण ) प्रवृत्तः=प्रवृद्धो यो वेगो रयः तस्य भावस्तत्त्वात् । "रभसो वेगहर्षयो"रिति विश्वः । **अनालक्षितेति**—अनालक्षितमनालोचितं समविषममर्थात् समं विषमञ्च स्थानं यैस्ते तादृशाः तुरङ्गमाः= रथ्याः, गङ्गाप्रपाते=गङ्गायाः अतटप्रदेशे खातविशेष इत्यर्थः, स्यन्दनम्=रथं विनिपातयन्ति=विनिपातयिष्यन्ति भ्रंशयिष्यन्तीत्यर्थः । वर्तमानसामीप्ये लट् । तत्–तस्माद्धेतो यावत् विनिपातनं न जातं तावत्,सर्वात्मना=सर्वप्रकारेण सारथिचातुर्येणेत्यर्थः, क्रियतां यत्नः=उद्योगो विधीयतामित्यर्थः । रज्ज्वाकर्षणम्= रश्मीनां संयमनम् । अभिनयति=नाटयति । अवतीर्य=रथादिति शेषः । परिक्रामति=परिभ्रमति । **दीर्घेति**—दीर्घमार्गेण=दीर्घेण अतिलम्बमानेन मार्गेण अध्वना हेतुना परिश्रान्ताः म्लानाः । विश्रामय=विरमय ।

**समादिष्टोऽहमिति**—आज्ञप्तोऽस्मीत्यर्थः । "आर्येण" इत्युक्त्वा यत् पुनराह—"स्वामिने"ति तेन सीताप्रवासनं रामकृत्यं नोचितं मन्यते लक्ष्मण इत्याभाति । किञ्च—स्वामित्वात्तस्याज्ञा सर्वथाऽनुलङ्घनीयेति सूचयति । वत्सेति—देव्याः=कृताभिषेकायाः । "देवी कृताभिषेकायाम्"

**सीताया रावणभवनसंस्थानाच्चारित्रं प्रति समुत्पन्नविमर्शानां पौराणामन्यादृशाः प्रलापाः प्रवर्तन्ते, तन्न शक्नोमि सीतामात्रस्य कृते शरच्चन्द्रनिर्मलस्येक्ष्वाकुकुलस्य कलङ्कमुत्पादयितुम्। सीतया चाहं गर्भिणीभावसुलभेन दौहदेन भागीरथीदर्शनं प्रार्थितः। तस्मात्त्वमनेन गङ्गागमनव्याजेन**

---

इत्यमरः। "देवी कृताभिषेकायां तेजनीस्पृक्कयोरपि" इति हैमः। सीतायाः = जनकपुत्र्याः। रावणभवनसंस्थानात् = रावणो लङ्काधिपो राक्षसेश्वरः तस्य भवने गृहे संस्थानात् चिरकालपर्यन्तं निवासात्। हेतौ पञ्चमी। चारित्रम् = चरित्रमेव चारित्रं प्रकृते स्त्रियः पातिव्रत्यलक्षणव्यवहारम्प्रति, समुत्पन्नविमर्शानाम् = समुत्पन्नः सञ्जातो विमर्शो विरुद्धोमर्शो विमर्शः संशयो येषां तेषां परपुरुषगृहवासहेतोः सीता शुद्धा नवेति दोलायमानचेतसाम्, पौराणाम् = पुरे भवानां प्रजाजनानामित्यर्थः। अन्यादृशाः = अयोग्या अस्मत्प्रतिकूलाः सीतायां पापशङ्कारूपाः, प्रलापाः = अनर्थकानि वचांसि, प्रवर्तन्ते = जायन्ते अस्मच्छ्रुतिपथमायान्तीत्यर्थः। तत् = तस्मात् कारणात्। सीतामात्रस्य = केवलं सीतायाः कृते। **शरच्चन्द्रेति**—शरदि चन्द्रः शरच्चन्द्रः अतिनिर्मलः शशीत्यर्थः। शरच्चन्द्र इव निर्मलं शुद्धमिति शरच्चन्द्रनिर्मलं तस्य, इक्ष्वाकुकुलस्य = इक्ष्वाकुवंशस्य, कलङ्कम् = मलं पङ्केऽपवादमुत्पादयितुम् = जनयितुं, न = नैव शक्नोमि = समर्थो भवामि। जीवन् स्वकुलं कथमपि कलङ्कयितुं नेच्छामीति।

शरच्चन्द्रेत्यत्र लुप्तोपमा। अनया इक्ष्वाकुवंशस्य पाप्मसंसर्गाभावो ध्वनितः। इक्ष्वाकुरादिमो राघवकुलप्रवर्तकः कश्चन राजर्षिः सूर्यवंशीयः। उक्तञ्च श्रीमद्भागवतस्य नवमस्कन्धीयषष्ठाऽध्यायप्रारम्भे = "क्षुवतस्तु मनोर्जज्ञे इक्ष्वाकुर्घ्राणतः सुतः। तस्य पुत्रशतज्येष्ठा विकुक्षिनिमिदण्डकाः" इति। इयं पौराणिकी गाथाऽत्रानुसन्धेया। **सीताया चाहमिति**। गर्भिणीभावसुलभेन = गर्भिणीभावोऽन्तर्वत्नीत्वं तत्सुलभेन तदवश्यम्भाविना दौहदेन = दोहद एव दौहदम् तेन गर्भलक्षणेन, गर्भे सति जायमानेन स्त्रीणामभिलाषविशेषेण। **"दोहदो** गर्भलक्षणे। अभिलाषे तथा गर्भे" इति हैमः। भागीरथीदर्शनम् = भागीरथ्याः गङ्गायाः दर्शनं गङ्गायां पर्यटनमित्यर्थः। गङ्गागमनव्याजेन=

सुमन्त्राधिष्ठितं रथमारोप्य कस्मिंश्चिद्वनोद्देशे परित्यज्य निवर्तस्व—इति । तदहमपि स्वजनविस्रम्भनिर्विशङ्कां देवीमादाय गृहहरिणीमिव वध्यभूमिं वनमुपनयामि ।

सी०—(१) वच्छ लक्खण, अदिसइदगब्भभरुव्वहणपरिस्सन्ता ण प्पहवन्ति मे चलणा । ता अग्गदो भविअ णिवेदेहि कीसदूरे भअवई भाईरई वट्टदित्ति ।

ल०—मन्वासन्नैव भगवती भागीरथी, तदलं विषादेन, सम्प्राप्ता एव

(१)वत्स 'लक्ष्मण' अतिशयितगर्भभरोद्वहनपरिश्रान्तौ न प्रभवतो मे चरणौ । तदग्रतो भूत्वा निवेदय कियद्दूरे भगवती भागीरथी वर्तत इति ।

गङ्गायानाङ्कपटल । सुमन्त्राधिष्ठितम्=सुमन्त्रेण सारथिना अधिष्ठितम्, रथम्=यानम् । आरोप्य=रोहयित्वा । कस्मिंश्चिद्वनोद्देशे=निर्जने अरण्यविशेषे । परित्यज्य=अर्थात् सीतां विहाय । निवर्तस्व=प्रत्यायाहि । तदहमपि=तत्=तस्मात्स्वामिकृताज्ञाहेतोः अहं नाम लक्ष्मणोऽपि । स्वजनेति—स्वजने=मादृशे स्वबन्धौ यः विस्रम्भो विश्वासः तेन निर्विशङ्काम्=सर्वथा शङ्काविहीनां "वने त्यक्तुं मामयं नयती"ति शङ्काविरहिताम् । देवीम्=राज्ञीम् सर्वथैव पूजनीयाम् । गृहहरिणीमिव=गृहे पालितां मृगीमिव । वध्यभूमिम्=सूनास्थानं, वनम्=अरण्यम्, उपनयामि=प्रापयामीत्यत्र पूर्णोपमालङ्कारः ।

कियद्दूरे = कियति दूरे दूरवर्तिनि प्रदेशे । वत्सेति— 'वत्स. पुनादि वर्षयो । तर्णके नोरसि क्लीबम्" इति मेदिनी । प्रियेत्यर्थः । अतिशयितेति—अतिशयितोऽतिशयं प्राप्तः भठारो यो गर्भः तस्य भरोद्वहनेन भारधारणेन परिश्रान्तौ परितः श्रान्तौ अत्यन्तं क्लमङ्गतौ, मे = मम चरणावङ्घ्री । तत् = तस्मात्, अग्रतः = पुरतः भूत्वा, निवेदय = दर्शय । भगवतीति—प्रशस्तवत्त्वात् षड्विधैश्वर्यसम्पन्ना । भागीरथी = गङ्गा ।

नन्विति— निश्चितमिदमित्यर्थः । आसन्नैव-समीपवर्तिन्येव । तदलं

⊛ ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ इति ॥

वयम् । पश्य—

आदाय पङ्कजवनान्मकरन्दगन्धान्
कर्षन्नितान्तमधुरान् कलहंसनादान् ।
शीतास्तरङ्गकणिका विकिरन्नुपैति
गङ्गानिलस्तव सभाजनकाङ्क्षयेव ॥५॥

सी०—( स्पर्शं नाटयति ) (१) संपदं जणणीकरप्परिससुहसीअलस्स भाईरहीतरंगमारुदस्स परिसेण परिस्समस्स विअ

(१) सांप्रतं जननीकरस्पर्शसुखशीतलस्य भागीरथीतरङ्गमारुतस्य स्पर्शेन परिश्रमस्येव

विषादेन, विषादेन साध्यं नास्ति, विषादो न कार्य इत्यर्थः । विषादश्चित्तग्लानिः । "गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका" इति नियमेन तृतीया । "आदाय"—इति । पङ्कजवनात् = पङ्कजानां कमलानां वनात् उद्यानात्, मकरन्दगन्धान् = मकरन्दः पुष्परसः तस्य गन्धान् सौरभाणि, आदाय = गृहीत्वा, नितान्तमधुरान् = अतिहृद्यान् मनोहारिणः कलहंसनादान्=कादम्बानां नादान् कलरवान् कर्षन् = आराजयन् । प्रवान् वातः स्वानुगतायां दिशि शब्दमाकर्षयतीति स्वभावः । एवम्भूतो गङ्गानिलः = गङ्गाया अनिलः भागीरथीतोयसंसर्गी पवनः, तव = देव्याः सीतायाः, सभाजनकाङ्क्षया इव = आलिङ्गनकुशलप्रश्नादिनानन्दनकाङ्क्षया सत्कारकरणवाञ्छया इवेत्यर्थः । शीताः = शिशिराः, तरङ्गकणिकाः = वीचीबिन्दून्, विकिरन् = विक्षिपन् उपैति = प्राप्तो भवति । अन्योऽप्यागतं प्राहुणिकमेवं सभाजयतीति वस्तुध्वनिः—'सभाजनकाङ्क्षयेव" इति स्वरूपोत्प्रेक्षामूलकः । वृत्त्यनुप्रासश्च शब्दालङ्कारः । वसन्ततिलकावृत्तम् । लक्षणमुक्तं प्राक् (पृ० १३) । "आदाय" आङ्पूर्वकात् "दा दाने" इत्यस्माद्धातोः—"समासेऽनञ्पूर्वे क्त्वो ल्यप्" (७।१।३७) इति ल्यबादेशे रूपम् । "अथ द्वे आनन्दनसभाजने" इत्यमरः ॥५॥

स्पर्शमिति—नाटयति=अभिनीय दर्शयति । नाट्ये पात्रकृत्यमिदमुक्तम् । सांप्रतमिति-इदानीमित्यर्थः । जननीति–जनन्याः मातुर्यः करस्पर्शः पाणिलालनं तेन यत्सुखं तद्वत् शीतलस्य शिशिरस्य, भागीरथ्यास्तरङ्गाणां वीचीनां मारुतस्य = पवनस्य गङ्गानिलमिश्रितपयोः, स्पर्शेन = छुप्त्या, परिश्रमस्येव =

पावस्स परिक्खओ जाओ, तह वि दोहदकुदूहलं गंगावगाहणे मं समुस्साहेदि । ता इमादो तडप्पपादादो जह परिस्संता ओदरामि तह आदेसेहि मे मग्गम् ।

ल—( निर्दिश्य ) अत्यन्तविश्रान्तमनुष्यसञ्चारतया दुरवतारास्तट-प्रदेशाः । तस्मात्प्रपदमास्थाय सम्यक्—

**वामेन नीवारलतां करेण जानुं समालम्ब्य च दक्षिणेन ।**
**पदे पदे मे पदमादधाना शनैःशनैरेतु मुहूर्तमार्या ॥६॥**

पापस्य परिक्षयो जातः, तथापि दोहदकौतूहलं गङ्गावगाहने मां समुत्साहयति । तदस्मात्तटप्रपातात् यथा परिश्रान्तावतरामि तथादेशय मे मार्गम् ।

---

अध्वजनितग्लानेरिव पापस्य = कल्मषस्य, परिक्षयः = नाशो जातः । यथा गङ्गातरङ्गस्पर्शेन मार्गजनितश्रमो नष्ट तथा पापमपि नष्टमित्यर्थः । उक्तञ्च—

दृष्टा जन्मशतं पापं पीता जन्मशतद्वयम् ।
स्नाता जन्मसहस्राणां हन्ति गङ्गा कलौ युगे ॥ इति ।

**तथापीति**—"यत्तदोर्नित्यसम्बन्धः" इति नियमेन साम्प्रतमित्यस्य पूर्वं यद्यपि इत्यध्याहार्यम् । दोहदकौतूहलम्=गर्भोत्कण्ठा । "दोहदं गर्भलक्षणे। अभिलाषे तथा गर्भे" इति हैमः । गङ्गावगाहने = गङ्गायां सुरसरिति अवगाहने स्नानकरणे मां समुत्साहयति = उत्कण्ठयति । तत् = तस्मात्कारणात् अस्मात् तटप्रपातात् = तीरावतरणस्थलात्, परिश्रान्ता = खिन्ना सती अवतरामि (यथा) अवतरं कुर्याम् तथा मे = मह्यं मार्गम् = अध्वानम्, आदेशय=निर्दिशेत्यर्थः ।

निर्दिश्य = निर्देशं कृत्वा दर्शयित्वेत्यर्थः । अत्यन्तेति—अत्यन्तमतिमात्रं विश्रान्ता. श्रमिणो ये मनुष्यास्तेषां सञ्चारो भ्रमणं तस्य भावस्तत्ता तया तेन हेतुनेत्यर्थः । दुरवताराः=दु:खेनावतरीतुं शक्या:, अर्थात् श्रान्ताना पुरुषाणां कृते यत्रावतरणसौलभ्य नास्ति एवम्भूता विकटाः तटप्रदेशाः=तीरप्रपाताः सन्तीति शेषः । तस्मात् प्रपदम् = पादाग्रम्, आस्थाय = आश्रित्य । सम्यक्=समीचीनम् । सम्यगित्यस्याग्रिमपद्येनान्वयः "पादाग्रं प्रपदम्" इत्यमरः । प्रकृष्टं प्रारब्धं प्रगतं वा पदमिति प्रपदम् । "प्रादयो गताद्यर्थे-(वा० २।२।१८) इत्यनेन समासः ।

**वामेनेति**—वामेन = दक्षिणेतरेण करेण = पाणिना नीवारलताम् = वेतसवल्लीं समालम्ब्य = आश्रित्य, दक्षिणेन = वामेतरेण च जानुम् = ऊरुपर्व समालम्ब्य = आश्रित्य, मे = मम, पदे पदे = प्रतङ्घ्रि, पदम् = स्वचरणम्

सी—(यथोक्तमवतीर्य) (१) वच्छ सुट्ठु परिस्संतम्हि, एतस्सिं पाअव-च्छायाए मुहुत्तं उपविसिअ विस्समिस्सं ।

ल—यदभिरुचितं देव्यै ।

सी—( उपविश्य विश्रान्तिं नाटयति )

ल—अहो असंहार्यपरिच्छदाः सुकृतिनः । तथा हि—

(१) वत्स सुष्ठु परिश्रान्तास्मि; एतस्यां पादपच्छायायां मुहूर्तमुपविश्य विश्रमिष्यामि ।

आदधाना = ददती सती, आर्या = पूज्या भवती, मुहूर्तम् = क्षणं यथा स्यात्तथा क्रियाविशेषणम् । शनैः शनैः = मन्दमन्दम्, एतु = आगच्छतु । एवं निम्नोन्नतविकटतटप्रदेशात् पादस्खलनभीतिर्न भविष्यतीति भावः । "नीवारा-स्तृणधान्यानि" इत्यमरः । "स्यान्नीवारो वणिजके वास्तव्येऽपि च दृश्यते" इति विश्वः । "जानूरुपर्वाष्ठीवदस्त्रिया"मित्यमरः । अत्र "पदे पदे" "शनैः शनैः" इत्यनेकेषां व्यञ्जनानां सकृदावृत्तिदर्शनात् छेकानुप्रासोऽलङ्कारः । "छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा" इति लक्षणात् । इन्द्रवज्रा छन्दः—"स्यादिन्द्रवज्रा यदि तौ जगौ गः" इत्युक्तेः ॥६॥

वत्स ! सुष्ठु = अधिकमित्यर्थः । परिश्रान्तास्मि = श्रमयुतास्मि । एतस्याम् = पुरोवर्तिन्यां पादपच्छायायाम् = वृक्षस्य अनातपे । "छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरः । "छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः" इति मेदिनी । छो छेदने । अस्माद्धातोः—"माछाशसिभ्यो यः" ( १०४ । १०६ ) इत्यौणादिको यः । छ्यति श्रममिति छाया । मुहूर्तम् = घटिकाद्वयं, किञ्चित्कालं वेत्यर्थः ।

उपविश्य = आसित्वा, विश्रमिष्यामि = विरामं करिष्ये । यदिति—अभिरुचितम् = वाञ्छितम् । देव्यै = आर्यायै ।

"अहो" इत्याश्चर्ये । सुकृतिनः = पुण्यवन्तः । असंहार्येति—असंहार्याः अपहर्तुमशक्याः परिच्छदाः भोगोपकरणानि येषां तादृशाः । पुण्यभाजो यत्र यान्ति तत्रैव तेषां कृते पुण्यबलात् भोगसाधनान्युपनतानि भवन्तीति भावः । यथार्थतत् तथा वर्णयति—तथाहीति ।

तरङ्गा वीजन्ते सजलकणिकान् शीतमरुत-
स्तथैते सङ्गीतं दधति कलहंसाः कलगिरः।
सखीव च्छायेयं रमयति परिष्वज्य हृदयं
वने शून्येऽप्यस्मिन् परिजनवतीवाऽत्रभवती ॥७॥

सी—(१) जह भणिदं कुमारेण, सअणमज्झगदाए विअ एत्थ अहिरमदि मे हिअअं।

(१) यथा भणित कुमारेण, शयनमध्यगताया इवात्राभिरमते मे हृदयम्।

"तरङ्गा" इति। तरङ्गाः = वीचयः। सजलकणिकान् = जलकणिकाभिः पानीयबिन्दुभिः सह वर्त्तन्त इति तान् शीतमरुत = शिशिरपवनान् वीजन्ते = व्यजनयन्ति। तथा एते = पुरोवर्त्तिनः कलगिरः = कला मधुरा गिरश्चुङ्कार-शब्दा येषामेवम्भूताः कलहंसाः = कादम्बा सङ्गीत = गानं दधति = धारयन्ति गान कुर्वन्तीत्यर्थः। इयञ्च छाया=तरुच्छायामनातपः, हृदयम्=हृत्कमलं परिष्वज्य= आलिङ्ग्य, सखीव = आलीव, रमयति—सुरतयति। (एवम्प्रकारेण) अत्रभवती= आर्या, शून्येऽपि = परिचारकवर्गविरहिणि अपि अस्मिन् वने = जाङ्गले प्रदेशे परिजनवती = तत्तद्व्यजनादिसेवानियुक्तसेवकवर्गसहितेव "अस्ति" इति शेषः।

पूर्वस्मिन्पादद्वये लुप्तोत्प्रेक्षा। अपरत्र वाच्या। प्रसादो गुणः। वैदर्भीरीतिः। द्राक्षापाकः। शिखरिणीवृत्तम्। "रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति लक्षणात् ॥७॥

"वीजन्त" इति। "वीज व्यजने" इति व्यजननार्थकाद् वीजधातो लुटि प्रथमपुरुषैकवचने रूपम्। अथवा—विशेषेण ईजते इति "वीजते"। "ईज" गतिकुत्सनयोः। व्युपसर्गः। "रमयति" इत्यत्र मितां ह्रस्व (६।४।९२) इति ह्रस्व। भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचि" इत्यमरः। "कलहंसस्तु कादम्ब" "राजहंसे नृपोत्तमे" इति मेदिनी। "ध्वनौ तु मधुरास्फुटे कलः" इत्यमरः।

मुग्धस्वभावां सीताम्प्रति लक्ष्मणस्याश्वासनोक्तिरियम् ॥७॥

यथेति—भणितम् = उक्तम्। शयनमध्यगतायाः = आस्तरणोपरि निविष्टायाः। अत्र = जाङ्गले भागीरथीतटोपान्तवर्त्तिनि प्रदेशे। अभिरमते =

ल—( आत्मगतम् ) एषा विश्रान्ता सुखोपविष्टा च देवी, तदयमेवावसरो यथास्थितं व्यवसितुम् । ( प्रकाशम् ) ( सहसा पादयोर्निपत्य ) अयमनवरतप्रवासदुःखभागी निर्लक्षणो लक्ष्मणो विज्ञापयति-स्थिरीक्रियतां हृदयम् ।

सी—( ससंभ्रमम् ) (१) अवि कुसलं अय्यउत्तस्स ? ।

ल—( वनं निर्दिश्य ) एवं गते कीदृशं कुशलमार्यस्य ? ।

सी—(२) अज्जूए केकईए पुणो वि समादिट्ठो वणवासो ?

ल—समादिष्टो वनवासः, न पुनरम्बया ।

---

(१) अपि कुशलमार्यपुत्रस्य ।

(२) अम्बया कैकेय्या पुनरपि समादिष्टो वनवासः ।

---

प्रीतिं धत्ते । यथा शयने स्थिताया मम गृहे चित्तं लगति तद्वदत्रापीति भावः ।

( ल० ) आत्मगतमिति—स्वगतमित्यर्थः । "यत्तु श्रव्यं न सर्वस्य स्वगतं तदिहोच्यते" इति भरतोक्तेः । सर्वपदमत्र सामाजिकेतरजनपरम् । विश्रान्ता=कृतविश्रमा । सुखोपविष्टा=गतश्रमत्वादेव सुखं स्थिता । तत्=तस्माद्धेतोः अयमेव अवसरः=वेला । यथास्थितम्=देवाज्ञया यत्कर्तव्यम् । (तत्) व्यवसितुम्=अनुष्ठातुमित्यर्थः । प्रकाशमिति । सर्वश्रव्यमित्यर्थः । सहसा = क्षिप्रम् । पादयोर्निपत्य = देव्याश्चरणयोः शिरो धृत्वा । अयमिति । अनवरतो निरन्तरो यः प्रवासः वनवासः तद्दुःखस्य भागोऽस्यास्तीति तादृशः । निर्लक्षणः= दुर्भग इत्यर्थः । सीतात्यागे गृहीतांशस्य तद्दुःखमसहमानस्येयमुक्तिः । विज्ञापयति = निवेदयति । "ज्ञा नियोगे" इति चौरादिकस्य ज्ञाधातो रूपं धातूनामनेकार्थत्वान्निवेदनमर्थः । स्थिरीक्रियताम्=अचलं सम्पाद्यताम् । हृदयं=मनः ।

ससम्भ्रमम् = सावेगम् । पतिव्रताधौरेयत्वात् आर्यपुत्रस्यानिष्टशङ्कया पृच्छति—अपीति । कुशलम्=क्षेमं ।

वनं निर्दिश्य = वननिर्देशं कृत्वा । एवमिति-यद्यपि लोकापवादभीरुकेण त्यक्तासि तथापि चेतसि आर्यपुत्रस्यापि तव त्यागे महत्कष्टमित्याशयो लक्ष्मणस्य । सीता पृच्छति—अम्बया कैकेय्या इति । दशेन जीविते पितरि

सी—(१) केण उण समादिट्ठो ?

ल—आर्येण ।

सी—(२) कहं समादिट्ठो ? ।

ल—( बाष्पस्तम्भमभिनीय )

आर्यस्यादेश इत्येव वक्तुमिच्छामि यत्नतः ।
तथापि हृदये गत्वा ग्रन्थिं बध्नाति भारती ॥८॥

सी—(३) किं मम समादिट्ठो वणवासो ?

ल—न केवलं तव, आत्मनोऽपि ।

सी—(४) कहं विअ ?

---

(१) केन पुनः समादिष्टः ।

(२) कथं समादिष्टः ।

(३) किं मम समादिष्टो वनवासः ।

(४) कथमिव ।

---

यथाज्ञापालकत्वं श्रीरामस्य उपरतेऽपि विमातुराज्ञातत्परत्वं तथैवास्येति धीरोदात्तताधुरीणत्वमिति व्यज्यते । स्पष्टमन्यत् ।

बाष्पस्तम्भमिति । बाष्पाणामश्रूणां स्तम्भं रोधम्, अभिनीय= अश्रुरोधं नाटयित्वेत्यर्थः । आर्यस्येति । यत्नतः = महता समारम्भेण, आर्यस्याऽऽदेशः = आर्यपुत्रस्य आज्ञा । (तव वनवासे) इत्येव=एतावन्मात्रमेव वक्तुमिच्छामि । अथवा–यत्नतः वक्तुमनिच्छन्नपि "आर्यस्यादेश इत्येव यत्नतो यत्नेन वक्तुमिच्छामि" इति योजना । (यद्यपि) कथयितुं कामये, तथापि भारती=वाणी हृदयं गत्वा=हृदयादुत्पन्ना सती पुनस्तत्रैव प्रवेशं लब्ध्वा । "आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया" इत्याद्युक्तेः । ग्रन्थिम् = पर्व, बध्नाति = उत्पादयतीत्यर्थः । ज्येष्ठभ्रातुराज्ञायाः पालने तत्परस्यापि मम आर्याया दुःखं सोढुमशक्तस्य मुखाद् दुःखप्रदा वाणी न निःसरतीति भावः । अत्र लुप्तोत्प्रेक्षा । ग्रन्थ नानर्हस्यापि हृदयस्य तत्तादात्म्यसम्भावनात्याद्वाचकाभावाच्च ॥८॥

आत्मनोऽपीति । तव वनादेशे सत्यपि विरहजनितदुःखभागित्वे आत्मनोऽपि वनवास एवेति लक्ष्मणस्याशयः । सीता पृच्छति कथमिवेति ।

ल—प्रकामभुक्ते स्वगृहाभिमानात्
सुहृज्जनेनाहितयागवह्नौ ।
आर्यस्य रम्ये भवनेऽपि वास-
स्तव प्रवासे वनवास एव ॥९॥

सी—(१) वच्छ, परिप्फुडं कहेहि, अज्ज कहं मम वणवासो अंय-उत्तस्स वणवासोत्ति ?

ल—किमपरं कथयामि मन्दभाग्यः ।

त्यक्ता किल त्वमार्येण चारित्रगुणशालिना ।
मयापि किल गन्तव्यं त्यक्त्वा त्वामिह कानने ॥ १०॥

---

(१) वत्स ! परिस्फुटं कथय, अथ कथं मम वनवास आर्यपुत्रस्य वनवास इति ।

---

लक्ष्मणाशयमजानानाया मुग्धायाः "मम वनवासे तस्य कथं वनवास" इति । परिप्रश्नः । लक्ष्मण उत्तरयति—"प्रकामभुक्ते"इति ।

स्वगृहाभिमानात् = इदमस्माकमेव गृहमित्यात्माभिमानात् स्वतासम्बन्धात् प्रकामभुक्ते = प्रकामं यथेच्छं भुक्ताः कृतभोजना यत्र तादृशे, तथा सुहृज्जनेन = बन्धुवर्गेण पुरोहितादिना वा आहितो यागवह्निः आहवनीयादिरग्निर्यत्र एवम्भूते रम्ये = रमणीये चक्रवर्तिसम्पत्तिशालिनि भवने = राजगृहेऽपि आर्यस्य वासः = अवस्थानं, तव प्रवासे=त्वयि प्रेषितायामित्यर्थः, वनवास एव = वनवाससदृश एव । त्वद्विरहिणस्तस्य राजोपकरणानि कदापि सुखप्रदानि न भवितुमर्हन्तीति भावः ।

अत्र-लोकातिशयसम्पत्तिवर्णनादुदात्तालङ्कारः । "लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते" इति विश्वनाथः । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः । "अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति तल्लक्षणात् ॥९॥

आशयमजानाना सीता पुनरपि पृच्छति—"वत्स ! परिस्फुटम्" इति । ल० आह—"मन्दभाग्य" इति । भवतोर्द्वयोर्दुःखदर्शनादिति भावः ।

त्यक्तेति । चारित्रगुणशालिना=चारित्रगुणैः = प्रजारञ्जनादिसदाचारपरिपालनगुणैः शालते शोभते इति चारित्रगुणशाली तेन, आर्येण=राज्ञा श्रीरामेण

सी—(१) हा ताद, अय्य कोसलाहिप, अज्ज उवरदोसि ।

( मोहं गच्छति )

ल—( ससम्भ्रमम् ) कष्टं भोः ! कष्टं भोः ! निर्घातपातदारुणेनानेन परित्यागवार्ताश्रवणेन नूनमुपरता देवी । ( निर्वर्ण्य ) दिष्ट्या श्वसिति । तत्को नु खल्वस्याः प्रत्यानयनेऽभ्युपायः । ( विषादं नाटयति ) आश्चर्यमाश्चर्यम्—

भागीरथीशीकरशीतलेन सम्भाव्यमाना मृदुनानिलेन ।
मद्भाग्यशेषेण च बोध्यमाना प्रत्यागता राजसुता कथञ्चित् ॥११॥

(१) हा ! तात ! आर्य कोसलाधिप ! अद्योपरतोऽपि ।

किलेति निश्चये त्वं त्यक्ता = परिहृता यन्निमित्तोऽयं ते वनवास इत्यर्थः । मयापि च=ज्येष्ठभ्रातुर्गुरोराज्ञापालनपरेण, इह कानने=अस्मिन् निर्जने वनात्मके प्रदेशे त्वा त्यक्त्वा = विहाय, किल गन्तव्यं=गन्तव्यमेवेत्यर्थः। अयोध्याम्प्रतीत्यर्थलभ्यम् । एवञ्च सति तवात्र कोऽपि रक्षको नास्तीति सत्यमहं मन्दभाग्य एवेति भावः । इत्थं दारुणं वचनं श्रुत्वा सीता स्वश्वशुरं दशरथं स्मरति— "हा तात आर्यकोसलाधिप" इति। महति कष्टे वृद्धा अवश्यं स्मृतिपथमायान्तीति लोकस्वभावः । मोहं गच्छति = मूर्च्छां प्राप्नोति ।

ससम्भ्रमम् = ससाध्वसम् । "कष्टं भोः" इति । दारुणं दु खमापतितमित्यर्थः । निर्घातेति । निर्घातो वज्रं तस्य पात इव दारुणेन कष्टप्रदेन अनेन परित्यागवार्ताश्रवणेन । उपरता = मृता । निर्वर्ण्य = निरूप्य निरूपणं नाटयित्वेत्यर्थः । "दिष्ट्या" इति हर्षे वृद्धिवाचकमव्ययपदमिदम् । श्वसिति = प्राणिति । तत्कोऽन्विति-सम्भावनां प्रकटीकरोति । प्रत्यानयने = पुनः सञ्ज्ञाप्राप्तौ । यथेयं मूर्च्छां त्यक्त्वा चैतन्यं प्राप्नुयात् तत्र कः अभ्युपायः = प्रतीकारः । विषादम् = मनोग्लानिम् । आसन्नमृत्युं सीतां दृष्ट्वा आह— "आश्चर्य"मिति ।

भागीरथीति—भागीरथी गङ्गा, तस्याः शीकरैः अम्बुकणैः शीतलेन शिशिरेण । "शीकरोऽम्बुकणाः" इत्यमरः । अतएव मृदुना = मन्दगतिना

सी—(१) वच्छ, लक्खण, किं गदोसि ?

ल—आज्ञापय, तिष्ठाम्येष मन्दभाग्यः ।

सी—(२) किं उवालम्भिअ म्हि परिच्चत्ता ।

ल—कीदृशो देव्या उपालम्भः ?

सी—(३) अहो मे अधण्णत्तणं, किं उवालम्भमेत्तएण विणा णिग्गहिदम्हि । किं अस्थि किं वि देण संदिट्ठं ?

ल—अस्ति ।

सी—(४) कहेहि कहेहि ।

ल—तुल्यान्वयेत्यनुगुणेति गुणोन्नतेति
दुःखे सुखे च सुचिरं सहवासिनीति ।

---

(१) वत्स ! लक्ष्मण ! किं गतोऽसि ।

(२) किमुपालभ्यास्मि परित्यक्ता ।

(३) अहो मेऽधन्यत्वम्, किमुपालम्भमात्रेण विना निगृहीतास्मि । किमस्ति किमपि तेन सन्दिष्टम् ।

(४) कथय कथय ।

---

कोमलस्पर्शेनेत्यर्थः । अनलेन = वायुना, सम्भाव्यमाना = सेव्यमाना कृतस्पर्शेत्यर्थः । तथा च मद्भाग्यशेषेण = ममाऽवशिष्टेन शुभेन दिष्टेन अर्थात् ममानुकूलेन दैवशेषेण बोध्यमाना = उत्थाप्यमाना चेतनतामापाद्यमाना जागरं नीयमाना इति यावत्, कथंचित् = कष्टेन राजसुता = राजपुत्री प्रत्यागता = पुनः सञ्ज्ञां प्राप्ता । राजसुतात्वेन वनवासक्लेशस्य दुःसहत्वं व्यज्यते । "दैवं दिष्टं भागधेयं भाग्यम्" इत्यमरः । इन्द्रवज्रा वृत्तम् । "स्यादिन्द्रवज्रा यदि तौ जगौगः" इति तल्लक्षणात्। वृत्त्यनुप्रासोऽलङ्कारः ॥११॥

किमुपालभ्येति—केनोपालम्भेनेत्यर्थः । निगृहीतास्मि = दूषिताऽस्मीत्यर्थः । सन्दिष्टम् = सन्देशः

तुल्यान्वयेति—तुल्योऽन्वयो वंशो यस्याः सा उत्तमकुलभवत्वादस्मत्सम्बन्धयोग्येत्यर्थः, अनुगुणा=अनुकूला अस्मदिच्छा गुणाः सौन्दर्याद्या

जानामि केवलमहं जनवादभीत्या
सीते त्यजामि भवतीं न तु भावदोषात् ॥ १२ ॥

अयमार्यस्य सन्देहः ।

सी—(१) कह जणवादभयेणेत्ति किंवि वअणीअं मे अत्थि ?

ल—कीदृशमार्याया वचनीयम् ।

ऋषीणां लोकपालानामार्यस्य मम चाग्रतः ।
अग्नौ शुद्धिं गता देवी—

किन्तु—

(१) कथं जनवादभयेनेति । किमपि वचनीयं मेऽस्ति ।

यस्या सा, आज्ञापालनपरा असमत्स्वभावानुसारिणीति वेत्यर्थः । गुणोन्नता=गुणैः सौशील्यपतिसेवादिभिः उन्नता उत्कृष्टा, दुःखे=प्रतिकूलवेदनीयलक्षणे कष्टापरनामनि, सुखे च=अनुकूलवेदनीयलक्षणे आनन्दापरनामनि च, सुचिरम्=चिरकालं सहवासिनी=सह वस्तुं शीलमस्या एतादृशी, इत्येवरूपा पतिपरिचरणशीला भवतीत्यहं जानामि = अवबुध्ये (किन्तु) हे ! सीते ! केवलमहं जनवादभीत्या=लोकापवादभयेन भवतीं=त्वाम् त्यजामि=परिहरामि, भावदोषात्=(तव) हृदयदोषात् अथवा "मम हृदये त्वं दोषवती भासि" इत्येवं रूपात् भावदोषात् नतु=नैव त्यजामीत्यर्थः ।

अत्र जनापवादरूपहेतोर्हेतुमता=त्यागरूपेण कार्येण सार्धं वर्णनाद् "हेत्वलङ्कारः" । उक्तञ्च—जयदेवेन 'हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते" इति । वसन्ततिलकावृत्तम् । लक्षणमुक्तं प्राक् ॥ १२॥

सीताऽऽर्थेति—"कह जणवादे"ति । वचनीयम्=निन्दनीयम् । अमौ शुद्धाया अपि मम कथं वचनीयं चिन्तयत्यार्य इति दुःखातिशयो व्यज्यते ।

कीदृशमिति—आर्याया वचनीयं=निन्दनीयं कीदृशम्—सम्भावयितुमपि न शक्यमिति भावः । ऋषीणामिति । ऋषीणां=त्रिकालदर्शिनां सत्यवचसां मुनीनाम्, लोकपालानाम्=इन्द्रादीनाम्, आर्यस्य=राज्ञो रामचन्द्रस्य मम च अग्रतः=समक्षे देवी=दिव्यगुणोपेता राज्ञी, वसुन्धराप्रसूतत्वाद्वा देवी, अग्नौ=वह्नौ, शुद्धिं गता=दिव्यपरीक्षां प्राप्य निष्कलङ्का, येन लोकापवादसम्भावनैव न स्यादिति भावः । किन्तु=इत्यर्थे हे अमे कथने शङ्कां भीतिं वा धारयतीत्यन

सी—( लज्जां नाटयति ) (१) कहेहि, किंतु ।

लं०—लोको निरङ्कुशः ॥१२॥

सी—(२) अग्गिसुद्धिसंकित्तणेण पडिबोदिदम्हि रावणभवणउत्तंतो,

(१) कथय किन्तु ।

(२) अग्निशुद्धिसंकीर्तनेन प्रतिबोधितास्मि रावणभवनवृत्तान्तम्, पुनरप्यु-

एव सीता पृच्छति—"कहेहि किन्तु"–इति । लक्ष्मण उत्तरयति—किन्त्वियसि । किन्तु=तथापि लोकः=प्रजाजनः निरङ्कुशः=निर्गत अङ्कुशात् परकीयस्तुतिनिन्दायां बद्धवाङ् न भवति । स्तुत्यमपि निन्दति, निन्दनीयमपि स्तौतीत्यहो समुच्छृङ्खलभावो लोकानां न केनापि वारयितुं शक्य इति भावः । अतएव भवभूतिनापि उत्तररामचरिते नटोक्तावुपनिबद्धम्—"नटः"—अतिदुर्जन इति वक्तव्यम् ।

देव्या अपि हि वैदेह्याः सापवादो यतो जनः ।
रक्षोगृहस्थितिर्मूलमग्निशुद्धौ त्वनिश्चयः ॥ इति ।

( व्या० को० ) ऋषीणामिति—"ऋषी गतौ" धातुः । ऋषन्ति जानन्ति त्रैकालिकं वृत्तमिति "ऋषयः" । इगुपधात्कित्" (उ० ४ । १२०) इत्यौणादिक इन् प्रत्ययः । "ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयम्" इति मेदिनी । "ऋषयः सत्यवचसः" इत्यमरः । लोकपालास्तु—"इन्द्रो वह्निः पितृपतिर्निर्ऋतिर्वरुणोऽनिलः । धनदः शङ्करश्चैव लोकपालाः पुरातना" इत्यष्टौ लोकपालाः" इति ज्ञेयम् ॥१३॥

अग्निशुद्धिसङ्कीर्तनेनेति—अग्निशुद्धिवृत्तान्तकथनेनेत्यर्थः । "रावणभवनवृत्तान्तम्प्रतिबोधितास्मी"त्यन्वयः । प्रतिबोधितास्मि=ज्ञापितास्मि । रावणभवनवृत्तान्तम्=रक्षःपतिगृहनिवासोदन्तम् । यदि "रावणभवनवृत्तान्तः" इति प्रथमान्तमेव पदं मन्तव्यं तदा "प्रतिबोधितास्मि" इत्यत्रावान्तरवाक्यसमाप्तिर्ज्ञेया । "रावणभवनवृत्तान्त" इत्यग्रे योजनीयम् । तथाहि—रावणभवन-

पुणोवि उव्वादिग्रदि सीदाए वि णाम एव्व सभावीग्रदित्ति । सव्वहा ग्रल महिलत्तणेण ! । एव्व परिचत्ता गु परिचत्तम्मि किं ण खु जुत्त मम अग्रउत्तपरिचत्त ग्रत्ताण परिचइद्दु, किं ण खु तस्स एव्व गिरनुकोसस्स ममाणो एसो पसग्रो पेरिवदव्वोत्ति वग्रणीग्रक्टकोपहिद जीविद परिरक्वामि ।

ल — ग्रनुगृहीतोऽस्मि । ( उत्थाय प्रणमति ) इदमपरमार्येण सन्दिष्टम् ।

सी—(१) किं गु खु भविस्सदि ।

---

द्वाधयति सीताया अपि नाम एव सभाव्यत इति । सर्वथाल महिलात्वेन । एव परित्यक्ता । ननु परित्यक्तास्मि किं न खलु युक्त ममार्यपुत्रपरित्यक्तमात्मान परित्यक्तु किं न खलु तस्यैव निरनुक्रोशस्य समाम एप प्रसव. प्रेक्षितव्य इति वचनीयकण्टकोपहित जीवित परिरक्षामि ।

(१) किं नु खलु भविष्यति ।

---

वृत्तान्त पुनरपि=भूयोऽपि उद्वाधयति=पीडयति । 'सीताया अपि नाम सम्भाव्यत" इति । अद्य पि सीता जीवतीत्यर्थ । परपुरुपगृहवास सम्वन्धेन जायमानमपवादमपेक्ष्य स्त्रीणा कृते मरणमेव श्रेय इति भाव ।

सर्वथेति—सर्वप्रकारेण । महिलात्वेन अलम्=महिलात्व स्त्रीभावो न स्यादित्यर्थ । किं न खलुयुक्तमिति । आर्यपुत्रेण परित्यक्तमात्मान परित्यक्तुम्=हन्तु, जीवित परिहातु किं न खलु युक्तम्=अपि तु युक्तमेव । मम मरण युक्तमेवत्यर्थः । पत्या परित्यक्ताया स्त्रिया जीवनापेक्षया मरणमेवौचितमिति भाव ।

तस्यैव=आर्यस्य, निरनुक्रोशस्य=निर्दयस्य । एप प्रसव.=गर्भ । प्रेक्षितव्य = अपेक्षणीय' । इति=हेतो । वचनीयेति—वचनीय निन्देव कण्टक तेनोपहित विद्धमपि जीवित परिरक्षामि=प्राणान् धारयमीत्यर्थः । यदेष गर्भ प्रतिवन्धो न स्यात्तदाऽवश्यं म्रिये इति भाव ।

अनुगृहीतोऽस्मि = गर्भपरिपाये स्वजीविताऽपरित्यागकथनेने त्याशय । अपरमिति—सन्देशान्तर कथयितुमाह । सीता चिन्तयति—"किं गु"

ल—त्वं देवि ! चित्तनिहिता गृहदेवता मे
स्वप्नागता शयनमध्यसखी त्वमेव ।
दारान्तराहरणनिःस्पृहमानसस्य
यागे तव प्रतिकृतिर्मम धर्मपत्नी ॥ १३ ॥

सी—(१) एव्वं संदिसन्तेण अय्यउत्तेण परिच्चाअदुक्खं मयि निरवसेसं

---

‡ एवं सन्दिशतार्यपुत्रेण परित्यागदुःखं मयि निरवशेषमपनीतम्,

---

इति । लक्ष्मणस्तदेव कथयति—"त्वं देवि" इति । हे ! देवि ! आर्ये ! त्वं मे=मम चित्तनिहिता=चित्ते मानसे निहिता हृदयस्थिता, गृहदेवता=गृहलक्ष्मीः असीति शेषः । स्वप्नागता = "करणेषूपसंहृतेषु जागरितसंस्कारजः प्रत्ययः सविषयः स्वप्नः" इत्युक्तलक्षणे स्वप्ने आगता प्राप्ता, शयनमध्यगता = मया सह ममास्तरणनिविष्टा सखी = वयस्या त्वमेव नान्या कापि । यदि विरहित्वात्स्वप्ने पश्यामि तर्हि त्वामेव नान्यामित्यर्थः । एतेन सीतेवासरखं रामस्याप्येकस्त्रीव्रतत्वं व्यज्यते । दारान्तरेति—अन्ये दाराः दारान्तरं स्वद्भिन्ना स्त्रीत्यर्थः । दारशब्दो नित्यं बहुवचनान्तः, तस्य आहरणं ग्रहणं पाणिपीडनम् "अनाश्रमी न तिष्ठेत् क्षणमेकमपि द्विजः" इति स्मरणात् । स्त्रीं विना गृहस्थस्य यागादिकर्मानुष्ठानानुपपत्तेः, तथापि दारान्तराहरणे=स्त्र्यन्तरस्वीकारे निःस्पृहमानसस्य = निःस्पृहं मानसमन्तःकरणं यस्य सः, तस्यैवम्भूतस्य मम यागे = अनुष्ठीयमानेऽश्वमेधाख्ये यज्ञे, तव प्रतिकृतिः = प्रतिमा धर्मपत्नी = सधर्मिणी मत्कर्तृकयज्ञस्य फलभोक्त्री भविष्यतीति शेषः । दम्पत्योः सहाधिकारादिदि भावः ।

"पत्युर्नो यज्ञसंयोगे" ( ४ । १ । ३३ ) इति सूत्रेण पतिशब्दस्य नकारादेशो ङीप् च । अत्र "पत्नी"त्येतावदुक्तेरिष्टार्थलाभात् धर्मेण पत्नी "धर्मपत्नी" इति समस्तपदेन तस्याः कायिकादिभेदेन त्रिविधमपि पातिव्रत्यमखण्डमेवेति सूचितम् । "वसन्ततिलका" वृत्तम् । लक्षणमुक्तं प्राक् ॥१३॥

एवमिति । उक्तार्थोऽयमर्थः । सन्दिशता = सन्देशं ददता । आर्यपुत्रेण मयि निरवशेषं=समग्रमेव परित्यागदुःखं=स्वत्यागजन्यदुःखमशेषं कृतम् , अपनीतम्=

अवर्यादं, णहि तह अण्णासत्ता पइणो, इत्थिआजणस्स दुक्खं उप्पादेदि जह अण्णासत्तो।

ल—कः प्रतिसन्देशः?

सी—(१) कस्स?

ल—आर्यस्य।

सी—(२) एव्वं गदेवि पडिसंदेसो। अज्जूणं उण मम वअणादो पादवंदणं कदुअ विण्णवेहि-एव्वं अहं णीरक्खा सावदसमाइण्णे वणे

---

नहि तथान्यासक्ता पत्युः, स्त्रीजनस्य दुःखमुत्पादयति यथान्यासक्तः।

(१) कस्य।

(२) एवं गतेऽपि प्रतिसन्देशः!। श्वश्रूणां पुनर्मम वचनात्पादवन्दनं कृत्वा विज्ञापय—एवमहं नीरक्षा श्वापदसमाकीर्णे वने प्रतिवसन्ती च

---

दूरीकृतम्। तत्कुत इत्याह—नहीति। "अन्यासक्ता (स्त्री) पत्युस्तथा दुःखं नह्युत्पादयति (यथा) अन्यासक्तः (पुमान्) स्त्रीजनस्य = अबलाजनस्य दुःखमुत्पादयति" इति योजना विज्ञेया। अर्थस्तु स्पष्टः। एतेन पुरुषापेक्षया स्त्रीजनस्य विरहदुःखमप्यधिकमित्यमूक्तं, तथा सम्भोगजनितं सुखञ्चाधिकमिति गूढं व्यज्यते।

लक्ष्मणः स्वधर्मं पालयन् पृच्छति—"कः प्रतिसन्देश" इति। सीता तदभिप्रायमजानानेव कथयति "कस्स" इति। लक्ष्मण आह—"आर्यस्य" इति। आर्यं प्रति भवत्याः कः सन्देश इत्याशयः। सीता रामस्य कठोरहृदयतामनुभवन्ती प्रतिसन्देशानर्हतां मत्वाऽऽह—"एव्वं गदेवि"। एवङ्गतेऽपि= एतस्यामवस्थायामपीत्यर्थः। प्रतिसन्देशः = प्रतिवचनम्। प्रतिवाचिकमिति यावत्। अतिकठोरहृदयं प्रति मम न किञ्चित्सन्देष्टव्यमिति भावः। श्वश्रूणाम्= स्वाभिमातॄणाम्। पादवन्दनम्=पादयोर्नतिम्। विज्ञापय=निवेदय। नीरक्षा= रक्षाशून्या। श्वापदसमाकीर्णे=श्वापदैर्हिंस्रैः सिंहादिभिः समाकीर्णे व्याप्ते। "व्याघ्रादयो वनचराः पशवः श्वापदा मताः" इति। "शुनोदन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः" (वा० ६।३।१२६) इति दीर्घः।

पडिवसंती अ सव्वहा हिअएण अज्जाहिं अणुगहीदव्वेत्ति ।

ल—प्रतिगृहीतेयमाज्ञा । आर्यस्य न किञ्चित्सन्दिष्टम् ?

सी—(२) तह णिट्ठुरो णाम संदीसीअदित्ति अप्पडिहदवअणदा एसा लक्खणस्स, ण सीदाए धण्णत्तणं । तह मम वअणादो तं जणं विण्णवेहि—मंदभाइणीं अणुसोअंतो वण्णस्समपरिवालणं अहिग्घंतो अत्ताणं ण बाधेहि, सधम्मे ससरीरे सावधाणो होहित्ति । वच्छ लक्खण,

---

सर्वथा हृदयेनार्याभिरनुगृहीतव्येति ।

(२) तथा निष्ठुरो नाम सन्दिश्यत इत्यप्रतिहतवचनतैषा लक्ष्मणस्य, न सीताया धन्यत्वम् । तथा मम वचनात्तं जनं विज्ञापय—मन्दभागिनीमनुशोचन् वर्णाश्रमपरिपालनमभिघ्नन्नात्मानं न बाधय, सधर्मे स्वशरीरे

---

सर्वथा=सर्वप्रकारेण । हृदयेनेति । मनसेत्यर्थः । अनुग्रहीतव्या=अनुकम्पनीया । तयाऽऽशीर्देया यथा च भवतां वंशतन्तुर्न नश्येदिति गूढोऽभिप्रायः सीतादेव्याः । "तथा निष्ठुर" इति । तथा=तत्प्रकारतया निष्ठुरः=कठोरमनाः सहसैवालौकिकप्रीतिपरित्यागात्, नामेति प्रसिद्धम् । सन्दिश्यते=अर्थात् एवम्भूतः कठोरहृदयोऽपि यन्नामः सन्दिश्यते=प्रतिवचनीक्रियते इति, सत् एषा लक्ष्मणस्य अप्रतिहतवचनता=न प्रतिहतं वचनमप्रतिहतवचनं तस्य भावस्तत्ता, लक्ष्मणस्य वचनं भर्त्सनीयं न भवेदिति सूत्रेण रामप्रति-सन्देष्टव्यं, परमार्थतस्तु—"न सीताया" इति । सीतायाः तादृशं धन्यत्वम्=भाग्यं न=नास्ति येन स्वरमणम्प्रति किञ्चित्सन्देष्टव्यं स्यात् । अस्मार्थे उपपत्ति-स्त्वियम् । एतादृशमृदुहृदयाय न किञ्चिदपि सन्देष्टव्यमिति भावः । "मम वचनात्तं जनं विज्ञापय" इति दुःखेनाऽनादरसूचिकेयमुक्तिः । मन्दभागिनीम्=दुर्भागिनीम् । अनुशोचन्=अनुतप्यन् । वर्णाश्रमेति । वर्णाश्रमपरिपालनम्=वर्णाः ब्राह्मणादयः आश्रमाः ब्रह्मचर्यादयः, तेषां परिपालनम्=परितः पालनं सर्वथा रक्षणम् अभीतिबोधावरणप्रकारपूर्वकं रक्षणम् अभिघ्नन्=नाशयन् आत्मानं न बाधय=आत्मानं मा पीडय । धर्मातिक्रमणादात्मा पीडितो भवति । "धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः" इति स्मृतेः । सधर्मे स्वशरीरे चेति ।

कि उवालभामि महाराअं ?

ल—किमेतावत्यपि न प्रभवति देवी ?

सी—(१) एव्वं वि तं जणं विण्णवेहि—ण जुत्तं तव णिरपराहं इमं जणं सपदि हिअआदो णिव्वासिदुं, किं उण विसआदोत्ति ।

ल—सन्देष्टव्यमार्यया सन्दिष्टम्—

**आर्या निर्वासिता नाम हृदयात्प्रभविष्णुना ।**
**कथं गृहाद् गृहं नाम कथं जनपदादपि ॥१४॥**

---

सावधाना भवति । वत्स ! लक्ष्मण ! किमुपालभे महाराजम् ?

(१) एवमपि तं जनं विज्ञापय—न युक्तं तव निरपराधमिमं जनं सपदि हृदयतो निर्वासयितुं किं पुनर्विषयत इति ।

---

सावधाना=दत्तमना, पूर्वं धर्मरक्षणं तदनु शरीररक्षणं कुर्वित्यर्थः । धर्मे पीडिते स्वशरीरमपि नापेक्षस्वेति भावः । एतेन सीताया अत्यन्तधर्मप्रियत्वं भर्त्तुरपकीर्त्यसहत्वादिकञ्च व्यज्यते । उद्धूतहार्दा सत्याह—"वत्से"त्यादि । किमुपालभे-धर्मप्रियोऽसौ नैवोपालम्भयोग्य इत्यर्थः ।

यद्यप्यार्येण निर्वासितासि स्वविषये गृहे वा निवासार्थं न ते स्वातन्त्र्यं तथापि सन्देशे तु भवत्याः स्वातन्त्र्यमस्त्येवेत्याह—**किमेतावत्यपीति** ।

**किमेतावत्यपीति**-एवंविधोपालम्भप्रदानेऽपि देवी=आर्या न प्रभवति= समर्था न भवति । अपितु योग्यैवोपालम्भन इति भावः ।

**णिरपराधमि**ति—निरपराधम्=निर्दोषम् । निर्दोषत्वाभे पापश्रवणात् । विषयतः=देशात् ।

लक्ष्मण आह—**"सन्देष्टव्यम्"** इति । उचितमेव सन्दिष्टमित्यर्थः । **"आर्या"** इति । प्रभविष्णुना=शक्तिमता स्वतन्त्रेण राज्ञा रामेण आर्या= पूजनीया भवती हृदयात्=अन्तःकरणात् निर्वासिता=निष्कासिता नाम=इति कथञ्चिदभ्युपगम्यैतापि । किन्तु—कथं=केन हेतुना गृहात्=भवनात् निर्वासिता, दम्पत्योः केनापि कारणेन परस्परं मनःकालुष्ये सत्यप्येकस्मिन्भवनेऽपि निर्वाहस्य कर्त्तुं शक्यत्वादिति भावः । गृहं नाम = गृहं नामेति किं वक्तव्यम्,

सी—(१) एव्वं वि मम वअणादो विण्णविदव्वो—सा तपोवणवासिणी सव्वहा सीमन्तणिहिदेण अंजलिणा विण्णवेदि जइ अहं णिग्गुणा चिरपरिचिदेत्ति वा, अणाहेत्ति वा, सीदेत्ति वा सुमरणमेत्तएण अणुग्गहिदव्वेत्ति।

---

(१) एवमपि मम वचनाद्विज्ञापयितव्यः—सा तपोवनवासिनी सर्वथा सीमन्तनिहितेनाञ्जलिना विज्ञापयति, यद्यहं निर्गुणा चिरपरिचितेति वा, अनाथेति वा, सीतेति वा स्मरणमात्रकेणानुगृहीतव्येति।

---

एकस्माद् गृहान्निष्कासिताया अपि अन्यस्मिन्गृहे परित्यागस्य सम्भावितत्वात् किन्तु जनपदादपि = देशादपि राजधानीतोऽपीत्यर्थः कथं निर्वासिता नामेति महान् विस्मयः। अत्र—"नाम" पदमनुरञ्जनीयम्। एवञ्च ममापि लक्ष्मणस्यैतस्मिन्विषये महाञ्छोको, विस्मयश्च। परमगुणायाः कठोरगर्भाया आर्यायाः परित्यागे आर्यचरितं कलुषितमिवाभातीति भावः।

"नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने" इत्यमरः। "नाम कामे (कोपे)ऽभ्युपगमे विस्मये स्मरणेऽपि च। सम्भाव्यकुत्साप्राकाश्यविकल्पेष्वपि दृश्यते" इति मेदिनी ॥ १४ ॥

सीता प्रत्युत्तरमाह—एवमपीति। विज्ञापयितव्यः=निवेदनीयः। सा=पूर्वं भुक्ता तव वनदुःखे सहैव दुःखिता, यामिदानीमेव त्वमेव त्यजसि। तपोवनवासिनी=तपस्विनी। चक्रवर्तिनं स्वस्वामिनं जीवत्यपि सहैवदास्यपोषणक्षम इति महान् खेदः प्रकटीकृतः, देवस्य इत्थं लज्जास्पदत्वं प्रदर्शितम्। सीमन्तनिहितेन=सीमन्ते केशवेशे अर्थात्—ललाटे निहितेन धारितेन अञ्जलिना=करकुड्मलेन। निर्गुणा=गुणैः रहिता। तथापि—चिरपरिचिता इति हेतोः वा=अथवा अनाथा=अशरणा किंवा सीता-विश्वम्भरोत्पन्ना इति हेतोः स्मरणमात्रकेण=केवलं स्मरणेन, अनुगृहीतव्या=दयनीया। यथाहं गृहान्निर्वासिता तथा मनसः न निर्वासनीया। "सीमन्तः केशवेशे" इति, "ते युतावञ्जलिः पुमान्" इत्यमरः।

ल०—इमं सन्देशमाकर्ण्य क्षते क्षारमिवाहितम् ।
दशामसह्यां शोकस्य व्यक्तमार्यो गमिष्यति ॥१२॥

सी—१ अदिमहिदे वि सअमंडले कहं तुमं सोंति एत्तिआ दुक्ख-सहाया, संपदं मए विणा तए एक्केण एसो चिंतिदव्वो । तुमं भादुस्सरीरे सावहाणो होहिस्सि ।

ल—अनुरूपमेतन्महानुभावतायाः ।

---

१—अतिमहितेऽपि स्वमण्डले कथं ते सन्ति, स्त्रियो दुःखसहायाः, सांप्रतं मया विना त्वयैकेनैष चिन्तयितव्यः । त्वं भ्रातुः शरीरे सावधानो भवेति ।

---

"इमम्" इति । क्षते = व्रणे आहितं = दत्तं क्षारं = लवणमिव इमं भवत्याः सन्देशं = वाचिकम्, आकर्ण्य = श्रुत्वा आर्यः व्यक्तं = स्फुटं यथास्यात्तथा शोकस्य = मन्योः (मन्युशोकौ तु शुक्स्त्रियाम्" इत्यमरः ।) असह्यां = सोढुमशक्यां दशाम् = अवस्थां गमिष्यति = प्राप्स्यति । "क्षते क्षारमिवे"त्युपमालङ्कारः । पुनलमानन्दकारमतेन लोकोक्तिरलङ्कारोऽपि । "लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते" इति लक्षणात् । "गमिष्यति" इत्यत्र "गमेरिट् परस्मैपदेषु" (७।२।५८) इतीट् ॥१२॥

अतिमहितेपीति । अतिप्रशस्तेऽपि अत्यन्तं समृद्धेऽपि स्वमण्डले = स्वदेशे । "मण्डलं द्वादशराजके च देशे च बिम्बे च कदम्बके च । कुष्ठप्रभेदेप्युपसूर्यकेऽपि भुजङ्गभेदे शुनि मण्डलः स्यात्" इति विश्वः । कथम् = केन प्रकारेण । ते सन्ति = स्त्रीविरहिणः कथं वर्तन्ते । ननु-सन्तीतरे बान्धवाः सेवकाश्च "अतिमहिते मण्डले" इत्युक्तं यतः, माभूवन स्त्रियः का क्षतिरित्याह—"स्त्रिय" इति । स्त्रिय एव हि दुःखसहायाः=दुःखे यथा सेवाकारिण्यो न तथेतरे, ते हि केवलं सुखार्था एव, दुःखे नैव सहाया भवन्तीति भावः । भवेति । चिन्तयितव्यः = परिचरणीय इत्यत्र तात्पर्यम् । "भ्रातुः शरीर इति । तस्य शरीरे यथा किमप्यहितं न स्यात् तथा यतस्व इत्याशयेनाह—"सावधानो भव" इति ।

सी—१ वच्छ लक्खण, पणमिदव्वा तुए मम वअणादो राहव-उलराअधाणी भअवदी अयोज्झा, सुस्सूसिदव्वो पडिमागदो महाराओ, साहिदव्वा सस्सूणं आसासि, समस्सासिदव्वा पिअंवदा मम पिअसहीओ, सुमरिदव्वा सव्वकालं मंदभाइणी। (इति रोदिति)

ल—( सोद्वेगम् ) आर्यां स्वहस्तेन वने विमोक्तुं
श्रोतुं च तस्याः परिदेवितानि।
सुखेन लङ्कासमरे हतं मा-
मजीवयन्मारुतिरात्तवैरः ॥१६॥

---

१ वत्स! लक्ष्मण! प्रणमितव्या त्वया मम वचनात् राघवकुलराजधानी भगवत्ययोध्या, शुश्रूषितव्यः प्रतिमागतो महाराजः, साधयितव्या श्वश्रूणामाशीः, समाश्वासयितव्याः प्रियंवदा मम प्रियसख्यः, स्मर्तव्या सर्वकालं मन्दभागिनी।

---

"अनुरूपम्" इति। योग्यमित्यर्थः। महानुभावतायाः = महाशयतायाः सत्कुलीनतायाः ( पतिभक्तातायाः ) इत्यर्थः। सीता हार्दं शोकं प्रकटयन्ती आह—वत्स! लक्ष्मणेत्यादि। भगवती = पूज्या अयोध्या तीर्थस्थानत्वात् पूजार्हेत्यर्थः। राघवकुलराजधानी = रघुकुल-राज्यसिंहासनस्थानम्। शुश्रूषितव्यः = सेवनीयः। प्रतिमागतः=प्रतिकृतिरूप-म्प्राप्तोऽपि किमु पुनः साक्षादिति भावः। श्वश्रूणामाशीरिति। श्वश्रूणां या सेवामहमकार्षं सापि त्वयैव साधनीयेति भावः। आशीः = आशा। समाश्वासयितव्याः=सान्त्वनीयाः। प्रियंवदाः=प्रियभाषिण्यः। "प्रियं"–इत्यत्र। "प्रियवशेवदः खच्" ( ३। २। ३८ ) इति। सर्वकालम् = अशन-पानादिव्यवहारकालेष्वित्यर्थः।

सोद्वेगम् = सोद्भ्रमम्। "उद्वेग उद्भ्रमे" इत्यमरः। अतिशोकेन विह्वलतायामित्यर्थः। "आर्याम्" इति। आर्याम् = देवीं सीतां स्वहस्तेन = स्वयमेवेत्यर्थः, वने = अरण्ये विमोक्तुम् = परित्यक्तुम्, तस्याः परिदेवितानि = विलपितानि श्रोतुम् = आकर्णयितुम्, आत्तवैरः = गृहीतवैरः मारुतिः = हनूमान् लङ्कासमरे = लङ्कायां रावणराजधान्याः समरे सङ्ग्रामे, सुखेन अनायासेनैव मेघनादशक्त्या हतम् = मृतं मामजीवयत् = सञ्जीवनौषधोपचारेण प्राणसञ्चार-

(विलोक्य)

एते रुदन्ति हरिणा हरितं विमुच्य
हंसाश्च शोकविधुराः करुणं रुदन्ति ।
नृत्तं त्यजन्ति शिखिनोऽपि विलोक्य देवीं
तिर्यग्गता वरममी न परं मनुष्याः ॥१७॥

सी—१ वच्छ लक्खण, आसण्णात्थमयो सूरो । दूरे अ इदो माणुस सम्पादो । उड्डीणा पक्खिणो । सञ्चरंति सावदा । गच्छ, ण जुत्तं परिलम्बिदुम् ।

१—वत्स ! लक्ष्मण ! आसन्नास्तमयः सूर्यः । दूरे चेतो मानुष सम्पातः । उड्डीनाः पक्षिणः । सञ्चरन्ति श्वापदाः । गच्छ न युक्तं परिलम्बितुम् ।

करोत् । यद्यसौ मा नाजीवयिष्यत् तदा एतादृशं सीतादुःखमहं नान्वभविष्यमिति मारुतेर्हितकरणमपि मत्कृतेऽहितमेव जातमतोऽसावावत्त्वैरं इति दुःखोक्तिर्नोऽयुक्ता । सीतादुःखाऽनुभवापेक्षया मम मरणमेव श्रेयः इति भावः । इन्द्रवज्रोपेन्द्रवज्रयो रुपजाति ॥१६॥ विलोक्येति । समन्ततो वनं दृष्ट्वेत्यर्थः । "एते" इति । एते = समीपतरवर्तिनो हरिणाः = मृगाः । हारितम् = हरिद्वर्णं बालघासं, विमुच्य = परित्यज्य रुदन्ति = विलपन्ति । शोकविधुराः =शोकेन शुचा विधुराः परिभूताः वैक्लव्यं गता इत्यर्थः, हंसाश्च = कादम्बा अपि, करुणम्=सदैन्यं यथा स्यात्तथा रुदन्ति । शिखिनः = मयूरा अपि देवीम् = सीतां विलोक्य नृत्तम् = नर्त्तनं त्यजन्ति = परिहरन्ति । अमी तिर्यग्गताः = तिर्यञ्चो जीवाः वरमुत्कृष्टाः परकीयदुःखाऽसहिष्णुताप्रकटनात् परदुःखे दुःखितत्वाच्च परं = तदपेक्षया मनुष्याः अस्मादृशाः कृष्ट्योनयो नराः न वरम् = नैव श्रेष्ठाः । विलपन्तीं परित्यज्य गमनाभिमुखत्वादिति भावः । उत्प्रेक्षा । वसन्ततिलकावृत्तम् ॥१६॥

लक्ष्मणहितैषिणी सीता तमाह—"वत्से"ति । आसन्नास्तमयः =आसन्न समाप्तः अस्तमयोऽस्तगमनं यस्य स तादृशः सूर्यः । मानुषसम्पातः = मनुष्यसञ्चारः । उड्डीनाः = स्वनीडम्प्रति गन्तुं उत्पतमानाः पक्षिणः=पतत्रिणः । श्वापदाः = हिंस्रा भल्लूकादयः । परिलम्बितुम् = विलम्बं कर्तुम् । सायङ्काल भवनावश्यकमेयम् ।

सी—(१) अदि सिलाहरिज्जाइं अक्खराइं सुणीअंदि ।

ल—रामाह्वयस्य गृहिणी मधुसूदनस्य ।

सी—(२) कुतो मे तादिसो भाअधेयो ?

ल—निर्वासिता पतिगृहात्—

सी—(कर्णौ पिदधाति)

ल—विजने वनेऽस्मिन्—

एकाकिनी वसति रक्षत रक्षतैनाम् ॥२०॥

सीता—(गर्भं दर्शयति)

ल—एनामपि भगवती भार्गीरथ्याः कृते विज्ञापयामि—

जातश्रमां कमलगन्धहृताधिवासैः

काले स्वमप्यनुगृहाण तरङ्गवातैः ।-

---

(१) अतिरिक्तावर्णनीयान्यक्षराणि श्रूयन्ते ।

(२) कुतो मे तादृशो भागधेयः ।

---

याऽसाविति "वधूः" । रामाह्वयस्य=रामेत्याख्यस्य मधुसूदनस्य=मध्वरेः साक्षा- द्विष्णोरवतारत्वाद्विष्णोरेवेत्यर्थः, गृहिणी=गृहस्वामिनी शक्तिरित्यर्थः । अस्मिन् विजने=जनशून्ये वने=अरण्ये पतिगृहात्=भर्तृभवनात् निर्वासिता=निष्कासिता मम च एकाकिनी=निःसहाया "वर्त्तते" इतिशेषः । (अतः) एनाम्=ईदृगवस्थां निःसहायां रक्षत रक्षत । आदरार्थं द्विरुक्तिः । आमीक्ष्ण्ये वा द्विर्वचनम् । वसन्ततिलकावृत्तम् ॥२०॥

एतदाकर्ण्य सीता गर्भं दर्शयति । गर्भ एव रक्षणीयोऽस्ति मादृग्- गर्भरक्षार्थमेव जीवनमिदं मम नान्यथेति भावः ।

**एनामपि** भगवती विज्ञापयामीति सम्बन्धः । वक्ष्यमाणमित्यर्थः । **जात- श्रमामिति** । हे ! भागीरथि ! भगीरथस्येयं तत्सम्बुद्धौ भागीरथि ! "तस्येदम्" (४।३।१२०) इत्यण् । गर्भे जातश्रमाम्=श्रमेण स्वशरीरोपचारं कुर्वन्त्या जात उत्पन्नः श्रमः क्लमो यस्याः ताम् । कमलेति—कमलानां पद्मानां गन्धेन सौरभेण हृतः प्रसृतोऽधिवासः सुरभिभावो यैस्तैः ... तरङ्गवातैः=वीचिवातैः तरङ्गान् स्पृष्ट्वा ... मरुद्भिः पवनैरित्यर्थः । काले=समये, समये, त्वमपि अनुगृहाण=अनु-

देवी यदा च सवनाय विगाहते त्वां
भागीरथि ! प्रशमय क्षणमम्बुवेगम् ॥२१॥
ये केचिदत्र मुनयो निवसन्त्यरण्ये
विज्ञापयामि शिरसा प्रणिपत्य तेभ्यः ।
स्त्रीत्युज्झितेत्यशरणेति कुलागतेति
देवी सदा भगवतीत्यनुकम्पनीया ॥२२॥

---

न्वय । यदा च=यस्मिन् काले देवी=आर्या सवनाय=अभिषेकाय स्नानं कर्तुं त्वामवगाहते=विलोडयते प्रविशतीत्यर्थः, तदा अम्बुवेगम्=स्वीयं जलवेगं क्षणम्= यथा तथा प्रशमय=लघूकुरु । अन्यथा भवत्याः प्रबलेन वेगेन कदाचिदस्याः प्लावेनानिष्टमेव न स्यादिति भावः ॥२१॥

भागीरथीमभ्यर्थ्य अरण्यवासिनोऽभ्यर्थयते—ये केचिदत्रेति । ये केचित् = अनिर्दिष्टनामानोऽपरिचिता वा अत्र = अस्मिन् अरण्ये = वने मुनयः = मननशीला ऋषयः निवसन्ति तेभ्यः = तान्प्रतीत्यर्थः, शिरसा = उत्तमाङ्गेन प्रणिपत्य = प्रह्वीभूय विज्ञापयामि = प्रार्थये। स्त्री इति = अबलेति, उज्झिता इति = परित्यक्तेति, अशरणा इति = अनाथेति, कुलागता इति = सत्कुलीनेति चतुर्भिर्हेतुभिर्भगवती=पूजनाया देवी=राज्ञी रामस्य महिषी सदा= "सर्वं वाक्यं सावधारणम्" इति न्यायेन सर्वदैवेत्यर्थः। अनुकम्पनीया–दयनीया अस्यै आश्रयो दातव्य इति भावः । स्त्री चेत् तत्स्वामी रक्षतीतिशङ्कां वारयितुमुज्झितेति विशेषणम् । तथापि त्वं सहायोऽसीति शङ्कायां अशरणेति परित्यज्य मम गतत्वात्। दोषवती स्याद्भर्तुस्त्यागादिति शङ्कायां कुलागतेति। कुलीनाया व्यभिचारशङ्काऽभावादित्युत्तरोत्तरं गमकतया विशेषणोपादानं बोध्यम् ।

अत्र–अनुकम्पनीयत्वे स्त्र्याद्यनेकपदार्थानां हेतुत्वात् "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते" इति लक्षणलक्षितः काव्यलिङ्गमलङ्कारः । किञ्च— विशेषणानां साभिप्रायत्वात्—"उक्तिविशेषणैः साभिप्रायैः परिकरो मतः" इति परिकरालङ्कारोऽपीत्यनयो संसृष्टिः ॥२२॥ मुनीनभ्यर्थ्य वनदेवता प्रार्थयते–

ल—(अञ्जलिं बध्वा) सर्वपश्चिमोऽयं लक्ष्मणस्य प्रणामाञ्जलिः। तत्सावधानं परिगृह्यताम्।

सी—(१) णिच्चावहिदा क्खु अहं।

ल—विज्ञापयामि देवीम्—

आर्यं मित्रं बान्धवान् वा स्मरन्त्या
शोकादात्मा मृत्यवे नोपनेयः।
इक्ष्वाकूणां संततिर्गर्भसंस्था
सेयं देव्या यत्नतो रक्षणीया ॥१८॥

---

१ नित्यावहिता खल्वहम्

---

सर्वपश्चिमः=अन्तिम इत्यर्थः। सावधानम्=एकाग्रमनसेत्यर्थः। क्रियाविशेषणमिदम्। नित्यावहिता=सदैव दत्तावधाना। अतिप्रियत्वात्तव वचसि कदापि मयोपेक्षा न कृतेति भावः। "आर्यम्" इति। मित्रम्=सुहृद्भूतमार्यम्=श्रीरामचन्द्रमित्यर्थः। लोकापवादमसहमानतया सीता त्यक्ताप्यार्यः मित्रमेव यतो हृदयात्तो न पर्यस्याद्यादिति भावः। वा=अथवा बान्धवान्=इतरान् बन्धुवर्गान्तर्गतान् अस्मदादीन् स्वपित्रादीन् वा स्मरन्त्या=तेषां सर्वेषां लज्जां पालयन्त्या भवत्या शोकात् = अतिदु सहदुःखहेतोर्जनिताधिवशक्तिविशेषात् आत्मा = स्वशरीरम् मृत्यवे=मरणाय मृत्युदेवाय यमाय वा नोपनेयः=नैवार्पणीयः। कथमपि प्राणा भवत्या न परिहातव्या इत्यर्थः। ननु दुःसहशोकसन्तप्ताया मम मरणमेवोचितमिति किमर्थं प्रतिषेधसीत्याह—इक्ष्वाकूणामिति। "यतः" इत्यध्याहर्तव्यम्। यत इक्ष्वाकूणां सन्ततिः=सन्तानः वंशतन्तुः गर्भसंस्था=गर्भे संस्था स्थितिर्यस्याः सा गर्भे वर्तमाना अस्तीति शेषः, अतः आत्मा मृत्यवे नोपनेयः। तव मरणे इक्ष्वाकुवंशोच्छेद एव स्यादिति भावः। सेयम्=सन्ततिः देव्या=भवत्या कुलीनया आर्यया यत्नतः=यत्नेन रक्षणीया=पालनीया। कुलीनाः वंशरक्षार्थे स्वात्मानमपरयं पालयन्तीति भावः। शालिनी वृत्तम्। "शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः" इति तल्लक्षणम् ॥१८॥

सी—(१) अप्पडिहदवअणो खु सोमित्ती।

ल—इयमपरा विज्ञापना,

सी—(२) का अण्णा ?

ल—ज्येष्ठस्य भ्रातुरादेशादानीय विजने वने।
परित्यक्तासि देवि ! त्वं दोषमेकं क्षमस्व मे ॥१६॥

सी—( ससंभ्रमम् ) (३) जेट्ठवअणाणुवत्ति तुमंत्ति परितोषकाले को दोसो आसङ्कीअदि ?

ल—(सप्रदक्षिणं प्रणम्य परिक्रामति)

सी—( रोदिति )

सी—(दिशोऽवलोक्य) भो ! भो ! लोकपाला ! शृण्वन्तु भवन्त —
एषा वधूर्दशरथस्य महारथस्य।

(१) अप्रतिहतवचन खलु सौमित्रिः।
(२) काऽन्या
(३) ज्येष्ठवचनानुवर्ती त्वमिति परितोषकाले को दोष आशङ्क्यते

अप्रतिहतवचन =अप्रतिहतमत्याज्य वचन यस्य सः, खलु = निश्चयेन सौमित्रि =लक्ष्मणः। अवश्य तवोक्तिर्मया पालयिष्यत इति भाव.।

ज्येष्ठस्येति। हे देवि ! ज्येष्ठस्य=वृद्धस्य भ्रातु =सहोदरस्य आदेशात्= आज्ञादेशेः विजने=जनशून्ये वने=जङ्गले आनीय=आदाय परित्यक्ताऽसि "आज्ञा गुरूणा ह्यविचारणीया" इति वचनात्, वस्तुतो नात्र मम कोऽप्यपराध, तथापि एक मे=मम दोषम्=अपराध त्व क्षमस्व=मर्षय परित्यागरूपमित्याशय ॥१६॥

ससम्भ्रमम्=सोद्वेगम्। ज्येष्ठवचनानुवर्ती=ज्येष्ठाज्ञापालनपरः। "परितोष काल" इति। एवङ्गुणस्थाने मादृश्या दोषशङ्कैव नोदेतीति भाव॰।

एषा वधूरिति। महारथस्य="एकोदशसहस्राणि योधयेयस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च विज्ञेयोऽसौ महारथ" इत्युक्तलक्षणस्य दशरथस्य सम्राज "वधू =स्नुषा। "समाः स्नुषाजनीवध्व." इत्यमर। "वधू पत्न्या स्नुषानार्योः, स्पृक्कासारिवयोरपि। नवपरिणीतायाश्च" इति हैम। वधूरिति "वहेर्धश्च" (३०।१।८३) इत्यौणादिके ऊप्रत्यये साधु। वहति उह्यते

सी—(१) अदि सिलाहणिज्जाइं अक्खराइं सुणीअंदि ।
ल—रामाह्वयस्य गृहिणी मधुसूदनस्य ।
सी—(२) कुदो मे तादिसो भाअधेओ ?
ल—निर्वासिता पतिगृहात्—
सी—(कर्णौ पिदधाति)
ल—विजने वनेऽस्मिन्—
एकाकिनी वसति रक्षत रक्षतैनाम् ॥२०॥
सीता—(गर्भं दर्शयति)
ल—एनामपि भगवतीं आर्यायाः कृते विज्ञापयामि—
जातश्रमां कमलगन्धधृताधिवासैः
काले त्वमप्यनुगृहाण तरङ्गवातैः ।

(१) अतिश्लाघनीयान्यक्षराणि श्रूयन्ते ।
(२) कुतो मे तादृशो भागधेयः ।

याऽग्नाविति "वधूः" । रामाह्वयस्य=रामेत्याख्यस्य मधुसूदनस्य=मध्वरेः साक्षाद्विष्णोरवतारत्वाद्विष्णोरेवेत्यर्थः, गृहिणी=गृहस्वामिनी शक्तिरित्यर्थः । अस्मिन् विजने=जनशून्ये वने=अरण्ये पतिगृहात्=भर्तृभवनात् निर्वासिता=निष्कासिता अथ च एकाकिनी=निःसहाया "वर्तते" इतिशेषः । यतः, एनाम्=ईदृगवस्थां निःसहायां रक्षत रक्षत । आदरार्थं द्विरुक्तिः । आभीक्ष्ण्ये वा द्विर्वचनम् । वसन्ततिलकावृत्तम् ॥२०॥

एतदाकर्ण्य सीता गर्भं दर्शयति । गर्भ एव रक्षणीयोऽस्ति नाहम्, गर्भरक्षार्थमेव जीवनमिदं मम नान्यथेति भावः ।

देवी यदा च सवनाय विगाहते त्वां
भागीरथि! प्रशमय त्तणमम्बुवेगम् ॥२१॥
ये केचिदत्र मुनयो निवसन्त्यरण्ये
विज्ञापयामि शिरसा प्रणिपत्य तेभ्यः।
स्त्रीत्युज्झितेत्यशरणेति कुलागतेति
देवी सदा भगवतीत्यनुकम्पनीया ॥२२॥

अन्वय। यदा च=यस्मिन् काले देवी=आर्य्या सवनाय=अभिषेकाय स्नानं कर्तुं त्वामवगाहते=विलोडयते प्रविशतीत्यर्थः, तदा अम्बुवेगम्=स्वीयं जलवेगं क्षणम्= यथा तथा प्रशमय=लघूकुरु। अन्यथा भवत्याः प्रबलेन वेगेन कदाचिदस्याः प्लावेनानिष्टमेव नः स्यादिति भावः ॥२१॥

भागीरथीमभ्यर्च्य अरण्यवासिनोऽभ्यर्थयते—ये केचिदत्रेति। ये केचित् = अनिर्दिष्टनामानोऽपरिचिता वा अत्र = अस्मिन् अरण्ये = वने मुनयः = मननशीला ऋषयः निवसन्ति तेभ्यः = तान्प्रतीत्यर्थः, शिरसा = उत्तमाङ्गेन प्रणिपत्य = प्रह्वीभूय विज्ञापयामि = प्रार्थये। स्त्री इति = अबलेति, उज्झिता इति = परित्यक्तेति, अशरणा इति = अनाथेति, कुलागता इति = सत्कुलीनेति चतुर्भिर्हेतुभिर्भगवती=पूजनीया देवी=राज्ञी रामस्य महिषी सदा= "सर्वं वाक्यं सावधारणम्" इति न्यायेन सर्वदैवेत्यर्थः। अनुकम्पनीया=दयनीया अस्यै आश्रयो दातव्य इति भाव.। स्त्री चेत् तत्स्वामी रक्षतीति शङ्कां वारयितुमुज्झितेति विशेषणम्। तथापि त्वं सहायोसीति शङ्कायां अशरणेति परित्यज्य मम गतत्वात्। दोषवती स्याद्भर्तुस्त्यागादिति शङ्कायां कुलागतेति। कुलीनाया व्यभिचारशङ्काऽभावादित्युत्तरोत्तरं गमकतया विशेषणोपादानं बोध्यम्।

अत्र-अनुकम्पनीयत्वे स्त्र्याद्यनेकपदार्थानां हेतुत्वात् "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते" इति लक्षणलक्षितः काव्यलिङ्गमलङ्कारः। किञ्च—विशेषणानां साभिप्रायत्वात्—"उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः" इति परिकरालङ्कारोपीत्यनयोः सङ्कृष्टिः ॥२२॥ मुनीनभ्यर्च्य वनदेवतां प्रार्थयते–

एषोऽञ्जलिर्विरचितो वनदेवतानां
विज्ञापनां क्षणमिमामवधारयन्तु।
सुप्ता प्रमादवशगा विषमस्थिता वा
यत्नादियं भगवतीभिरवेक्षणीया ॥२३॥
भो ! भो ! हिंस्रा ! भूमिरेषा भवद्भि-
र्वर्ज्यो देशो न प्रवेश्यः परेषाम्।
मृग्यो ! मृग्यो ! विप्रवासे सखीनां
यूयं सख्यो मा क्षणं मुञ्चतैनाम् ॥२४॥
सख्यो नद्यः स्वामिनो लोकपाला !
मातर्गङ्गे ! भ्रातरश्शैलराजाः !।

---

"एषोऽञ्जलि" इति । वनदेवतानाम् = वनस्वामिनीनां देवताना "पुरत" इति शेषः। एषोऽञ्जलिर्विरचित = विहितः । इमाम् = मदीयां विज्ञापनाम्=निवेदनां क्षणं यावत् अवधारयन्तु = अवधानेन शृण्वन्त्वित्यर्थः। भगवतीभिः = ऐश्वर्यशालिनीभिर्भवतीभिः सुप्ता = निद्रागता, प्रमादवशगा = प्रमादोऽनवधानता तस्य वशङ्गता अनवधानं प्राप्ता, वा=अथवा विषमस्थिता= विषमे प्रकृतिविरुद्धे देशे काले वा स्थिता वर्तमाना, इयम् = आर्या यत्नात् = प्रयत्नात् यत्नं प्राप्य सावधानमित्यर्थः, अवेक्षणीया = द्रष्टया पालनीया । रक्षणीया चेत्यर्थः । अत्र सर्वत्र वसन्ततिलकावृत्तम् ॥२३॥

"भो भो" इति । भो भो हिंस्राः-घातुकाः सिंहाद्याः ! भवद्भिः एषा भूमिः यत्र सीता निवसति सा वर्ज्या = त्याज्या। परेषाम् = अन्येषां देशः = स्थानं न प्रवेश्यः=नैव प्रवेशनीयः सभरणार्थं न स्वायत्तीकर्तव्यः । हे ! मृग्यः ! मृग्यः ! आदरार्थं द्विरुक्तिः। सखीनाम्=आलीनां विप्रवासे=वियुज्य वासे वियोग एवेत्यर्थः, यूयं सख्यः=अस्याः सीतायाः वयस्याः भवतेति शेषः। प्रकरणात् सीताया इति । एनाम् = सीतां क्षणम् = क्षणमपि मा मुञ्चत = कदापि न त्यजतेत्यर्थः ॥२४॥

"सख्यो नद्य" इति । "हे" इत्यप्याहर्तव्यं प्रकरणस्वारस्यात् । हे ! सख्यः ! वयस्या नद्यः=सरितः, हे ! स्वामिनः-रक्षका लोकपालाः ! हे मातर्गङ्गे !

भूयो भूयो याचते लक्ष्मणोऽयं
यत्नाद्रक्ष्या राजपुत्री गतोऽहम् ॥२१॥

(प्रणम्य निष्क्रान्तः)

सी—(१) कहं सच्चं एव मं एआइणीं परिच्चइअ गदो लक्खणो, ( विलोक्य ) हद्धी हद्धी ! अत्थमिदो सूरो, सरेण वि लक्खणो ण दीसइ हरिणा वि सअं आवासं आअन्ति, उड्डीणा पक्खिणो, संचरंति सावदा, आच्छादीअदि अंधआरेण दिट्ठी, णिम्माणुसं महारण्णं, किं करेमि मंदभाआ, कीस अरण्णाहिं पव्वजामि एआइणी अदेस असलका वि णां मि मि ( ? ) किण्णु मए पावं किदं, जस्स दाणिं एव विरहं सव्वहा अणुभाविदोम्हि, कहं देहपित्तोनालि ( ? ) कहं दाव लक्खणाणिउत्ताअ-

(१) कथं सत्यमेव मामेकाकिनीं परित्यज्य गतो लक्ष्मणः । (विलोक्य) हा धिक्, हा धिक् ! अस्तमितः सूर्यः, स्वरेणापि लक्ष्मणो न दृश्यते, हरिणा अपि स्वयमावासमायान्ति, उड्डीनाः पक्षिणः, सञ्चरन्ति श्वापदाः, आच्छाद्यतेऽन्धकारेण दृष्टिः, निर्मानुषं महारण्यम्, किं करोमि मन्दभाग्या, कीदृशमरण्यैः प्रव्रजाम्येकाकिनी, ..............................................................

किन्तु खलु मया कृतं पापं, यस्येदानीमेव विरहं सर्वथानुभावितास्मि, कथं......

हे भ्रातरः ! = सहोदराः शैलराजाः उत्तमाः पर्वताः अयं लक्ष्मणो भूयो भूयः = पुनः पुनः याचते=प्रार्थयते । किं तदित्याह—यत्नादिति । इयं राजपुत्री यस्मात् रक्ष्या = पालनीया यतोऽहं गतः = यात एवेत्यर्थः । शालिनीवृत्तम् । लक्षणमुक्तं प्राक् ॥२१॥ "प्रणम्य निष्क्रान्त" इति ।

निर्गते लक्ष्मणे सीता विलपति = "कहं सच्चम्" इति । कथं सत्यमेवेत्यादि संस्कृतम् । सत्यमेव = वस्तुत एव । मामेकाकिनीम् = अशरणाम् । अरण्यैः = अरण्यनिवासिभिः । प्रव्रजामि = सङ्गता भवामि । यस्येति=यस्य पापस्य फलभूतं विरहम्=वियोगं सर्वथाऽनुभावितास्मि । कथमिति—लक्ष्मणनियुक्ता = मद्रक्षणार्थमभ्यर्थिता वनदेवता मया सह कथं व्यवहरिष्यन्तीत्यर्थः ।

देवता ····················, कहं दे राहवकुलक्कमागदा वसिट्ठवंमीइप्पमुहा महाप्पहावा महेसिणो ते दाणिं मं परिच्चा अ अभिदेहिंति ( ? )

(ततः प्रविशति वाल्मीकिः)

वा (ससम्भ्रमम्)

> आकर्ण्य जह्नुतनयां समुपागतेभ्यः
> सन्ध्याभिषेकविषये मुनिदारकेभ्यः ।
> एकाकिनीमशरणां रुदतीमरण्ये
> गर्भातुरां स्त्रियमतित्वरयागतोऽस्मि ॥२६॥

····················कथं तावल्लक्ष्मणानियुक्त वनदेवता ····················कथं ते राघवकुलक्रमागता वसिष्ठवाल्मीकिप्रमुखा महाप्रभावा महर्षयस्त इदानीं मां परित्यक्त्वा ······ (इति मोहं गच्छति)

एवमेव वसिष्ठप्रभृतीन् ऋषीनपि चिन्तयति–कथं ते राघवकुलक्रमागता" इत्यादिना । रघुवंशपरम्पराप्राप्ताः । एतेन तेषामातिविश्वस्तत्वं दुःखे चात्यन्तसाहाय्यकारित्वादिकं व्यज्यते । महाप्रभावाः = अलौकिकतपोबलसम्पन्नाः । महर्षयः = त्रिकालदर्शिन इत्यर्थः ।

पात्रान्तरप्रवेशं सूचयति—"**ततः प्रविशति**" इति । ससम्भ्रमम् = सोद्वेगम् । सत्वरमिति यावत् । "**आकर्ण्य**" इति । सन्ध्याया अभिषेकः स्नानं तस्य विषयेऽनुष्ठानाय सन्ध्याङ्गभूतस्नानमनुष्ठातुं जह्नुतनयाम् = जान्हवीं गङ्गा समुपागतेभ्यः=प्राप्तेभ्यः मुनिदारकेभ्यः = ऋषिकुमारकेभ्यः स्त्रियम्=अबलाम्, आकर्ण्य=श्रुत्वा अतित्वरया=अतिशीघ्रतया आगतोऽस्मि=प्राप्तोऽहमित्यर्थः। कीदृशीं स्त्रियम्–एकाकिनीम्=असहायाम् । तथा अशरणाम्=अनाथाम् । अरण्ये निर्जने प्रदेशे रुदतीम् = विलपन्तीम्, गर्भातुराम् = गर्भेण आतुरां कठोरगर्भां निकटवर्तिप्रसवामित्यर्थः । "रुदतीम्" इत्यत्र "उगितश्च" (४ । १ । ६) इति सूत्रेण ङीप् । शप्श्यनोर्भावान्नुमभावः ॥२६॥

सी—(प्रत्यागम्य) (१) को एस मे विज्जई। (विचिन्त्य) ण कोवि, आय्यत्तिकरलरररयाविराणत्तिआ अणिचरित्ति भअवई भाईरई तरंगाए मामणुगह्लादि।

वा—अयमन्धकारसमृद्धतया दृष्टिसञ्चारस्य न दृश्यते, अतः शब्दापयिष्ये। अयमहं भोः!।

सी—(सहर्षम्) (२) वच्छ लक्खण पडिणिउत्तोसि?

वा—नाहं लक्ष्मणः।

सी—(अवकुण्ठं नाटयति) (३) अच्चाहिदं, अण्णो एसो को वा परपुरुसो कहं दाणिं वारइस्सं महाहिदं (विचिन्त्य) एव्वम्-इत्थिआहं एआइणी अ।

---

(१) क एष मा वीक्षते, (विचिन्त्य) न कोऽपि, आज्ञप्तिकरलक्ष्मणविज्ञप्त्या अनुचरन्ती भगवती भागीरथी तरङ्गैर्मामनुगृह्णाति।

(२) वत्स! लक्ष्मण! प्रतिनिवृत्तोऽसि?।

(३) अत्याहितम्, अन्य एष को वा परपुरुषः, कथमिदानीं वारयिष्यामि महाहितम्? (विचिन्त्य) एवम्—स्त्री अहमेकाकिनी च।

---

प्रत्यागम्य=प्रत्यावृत्य। विचिन्त्य=विचार्य। **आज्ञप्तीति**। आज्ञप्तिकरः याच्नाकरो यो लक्ष्मणः तस्य विज्ञप्त्या = प्रार्थनया अनुचरन्ती = अनुयान्ती भगवती=महामहिमशालिनी भागीरथी=गङ्गा तरङ्गैः = वीचिभिः मामनुगृह्णाति= अनुकम्पयते, मम साहाय्यमातनोति, यथा एकाकिन्या ममात्र भयं न स्यादिति भाव।

वाल्मीकिराह-**अयमिति**। अन्धकारस्य तमसः समृद्धिः अतिशयस्तस्याभावस्तत्ता तया प्रबलान्धकारहेतुनेत्यर्थः। दृष्टिसञ्चारस्य=चक्षुःप्रचारस्य, न दृश्यते=नालोक्यते। अतो हेतोः शब्दापयिष्ये—आकारयिष्ये। सीता लक्ष्मणं भावयित्वा सहर्षमाह-"वच्छ" इति। प्रतिनिवृत्तोऽसि—प्रत्यागतोऽसि। वा० आह-**नाहमिति**। अवकुण्ठम्=मुखावगुण्ठनं नाटयति = अभिनयति। अत्याहितम्= महाभीतिः। आगतमिति शेषः। "अत्याहितं महाभीतिः कर्मजीवानपेक्षि च" इत्यमरः। "परपुरुष" इति कथनेन अत्याहितं समर्थितं भवति। कथम्= केनोपायेन। वारयिष्यामि = प्रतिकरिष्यामि। महाहितम् = महाभीतिर्।

वा—एष स्थितोऽस्मि। वत्से! तवाप्यलं परपुरुषशङ्कया, दिवसावसानसवनाय भागीरथीं समुपास्य प्रतिनिवृत्तेभ्यो मुनिदारकेभ्यस्त्वद्वृत्तान्तमुपलभ्य तपोधनोऽहं त्वामेवाभ्युपपत्तुमुपागतः। पृच्छामि चात्रभवतीम्—

धर्मेण जितसङ्ग्रामे रामे शासति मेदिनीम्।
कथ्यतां कथ्यतां वत्से! विपदेषा कुतस्तव? ॥२७॥

सी—(१) तदो एव्व पुण्णचंदादो मे असणिपादो।

वा—कामं रामादेव हि विपत्तिमुपागता?

सी—(२) अहं इं।

---

(१) तत एव पूर्णचन्द्रान्मेऽशनिपातः
(२) अथ किम्

---

वाल्मीकिस्तद्वचः श्रुत्वा आत्मनो विश्वस्ततां बोधयन् तस्या अत्याहितशङ्कां वारयति—"एष स्थितोऽस्मि" इति। वत्से! पुत्रि! । यथा त्वं पितुः पुत्री तथैव मम पुत्रीति परपुरुषत्वशङ्का न कर्तव्येति स्पष्टं कथ्यते। दिवसावसानसवनाय=दिवसावसाने सायङ्काले सवनाय सन्ध्याधानं कर्तुम्। समुपास्य=सेवित्वा, प्रतिनिवृत्तेभ्यः=प्रत्यायातेभ्यः। त्वद्वृत्तान्तम् = त्वदुदन्तम्। उपलभ्य=आकर्ण्य। तपोधनः = तपस्वी। एतेन त्वया मत्तः कथमपि अत्याहितशङ्का न कर्तव्येति ध्वन्यते। त्वामेव अभ्युपपत्तुम्=निभालयितुम्, उपागतः=प्राप्तः। तपोधनकथनेन जितेन्द्रियत्वादिना विश्वासपात्रताऽपि व्यज्यते। अत्रभवतीम् =. पूज्याम्। "अत्रभवती"ति कथनेन वचसापि स्त्रीणामादर एव कर्तव्य इति सूचितम्। धर्मेणेति—हे वत्से! पुत्रि! जितः सङ्ग्रामः समरो येन सः एवम्भूतस्तस्मिन् रामे धर्मेण = वेदोक्तपद्धत्या मेदिनीम् = पृथ्वीं शासति=पालयति सति कथ्यतां कथ्यताम्=शीघ्रमेवोच्यताम्। तव एषा विपत् = निर्जनारण्यवासात्मकं दुःखं कुतः = कस्माद्धेतोरुत्पन्नेति शेषः ॥२७॥

सीता आह—"तदो एव्व" इति। पूर्णचन्द्रात्=पौर्णिमासशिनः पूर्णेन्दुसदाह्लादनकराद्पि अशनिपातः=वज्रपातः। एतेन स्वदुःखस्य वज्रपाततरमत्वं बोधितम्।

मुनिराश्चर्यं मत्वाह—काममिति। सीता आह—"अथ किम्" इति।

वा—यदि त्वं वर्णाश्रमव्यवस्थाभूतेन महाराजेन निर्वासितासि तत् स्वस्ति भवत्यै, गच्छाम्यहम्। (परिक्रामति)

सी—(१) अह विण्णवेमि।

वा—कथय।

सी—(२) जइ रहुवरेण णिव्वासिदेत्ति भअवदा णाणुकंपणीआ, एसा उण गब्भगदा रहुसअरदिलीपदसरहपहुदीणं तारिसीणं संतदित्ति दाणिं पडिपालणीआ।

·वा—(प्रतिनिवृत्य) कथमिक्ष्वाकुवंशमुदाहरति, तदनुयोक्ष्ये। वत्से! किम् दशरथस्य वधूः?

सी—(३) जं भअवं आणवेदि।

(१) अथ विज्ञापयामि।

(२) यदि रघुवरेण निर्वासितेति भवता नानुकम्पनीया, एषा पुनर्गर्भगता रघुसगरदिलीपदशरथप्रभृतीनां तादृशानां सन्ततिरिति इदानीं प्रतिपालनीया।

(३) यद्भगवानाज्ञापयति।

तस्मादेवेत्यर्थः। मर्यादापुरुषोत्तमो रामः कदापि कथमप्यन्याय्यं कर्तुं नार्हतीति विश्वस्तो मुनिस्तद्वृत्तं प्रवासं समर्थयन्नाह—"यदि त्वम्" इति। वर्णाश्रमव्यवस्थाभूतेन=वर्णाश्रममर्यादापालकेनेत्यर्थः। वर्णाः=ब्राह्मणाद्याः, आश्रमाः=ब्रह्मचर्याद्याः। महाराजेन = चक्रवर्तिना। गच्छाम्यहमिति। तत्कृते धर्म्ये न्याय्ये च पथि नाहमप्यन्यथा कर्तुं समर्थ इति भावः। सीता स्वरक्षामनपेक्षमाणा संदर्भेणोक्तिं स्मरन्ती गर्भरक्षायै वक्तुमाह—"अह विण्णवेमि" इति प्राकृतम्। अन्यत् प्रार्थये इत्यर्थः। मुनिराह—कथयेति। सर्वदाऽपि प्रार्थकस्य वचः श्रोतव्यमिति भावः। यदि रघुवरेणेति—राज्ञेत्यर्थः। नानुकम्पनीया= नैव दयनीया। एषा गर्भगता=गर्भे वर्त्तमाना। रघुसगरेत्यनेकेषां वंश्यानां नामग्रहणं वंशपरम्परायाः महत्त्वं सन्ततेश्चावश्यरक्षणीयत्वं व्यनक्ति।

प्रतिनिवृत्य=प्रत्यागत्य। कथमित्याश्चर्यं द्योतयति। तत् = तस्माद्धेतोः। अनुयोक्ष्ये = प्रक्ष्यामि। "प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः। वधूः=स्नुषा। यद्भगवानिति—यथा पूज्यः कथयतीत्यर्थः। मुनिः पुनरपि द्रढयितुमाह—

वा—किन्न विदेहाधिपतेर्जनकस्य दुहिता ?

सी—(१) अह इं ।

वा—किन्न सीता ?

सी—(२) णहि सीदा, भअवं मंदभाइणी ।

वा—हतोऽस्मि मन्दभाग्यः । किंकृतोऽयमत्रभवत्याः प्रासादतलादधोऽवतारः ?

सी—(लज्जां नाटयति)

वा—कथं लज्जते ! भवतु, योगचक्षुषाऽहमवलोकयामि (ध्यानमभिनीय) वत्से ! जनापवादभीरुणा रामेण केवलं परित्यक्ता, न तु हृदयेन । निरपराधा त्वमस्माभिरपरित्याज्यैव । एह्याश्रमपदं गच्छावः ।

सी—(३) को णु तुमं ?

(१) अथ किम् ।

(२) नहि सीता, भगवन् ! मन्दभागिनी ।

(३) को नु त्वम् ।

किन्नेति । नहि सीतेति । यदि सीता स्यां कथमिदं दुःखं प्राप्नुयाम् । मन्दभागिनी = दुर्भागिनी । अतिदुःखित्वं प्रकटयितुमियमुक्तिः ।

करुणायदयालयो मुनिः शोकं प्रकटयति—हा हतोस्मीति । प्रासादतलात् = हर्म्यतलात् । "प्रासादो देवभूभुजाम्" इत्यमरः । अधोऽवतारः = अधःपतनम्, प्रवास इत्यर्थः । सीता स्त्रीस्वभावत्वाद्दुःखत्वाच्च लज्जां नाटयति । मुनिः सलज्जां दृष्ट्वा आह—"कथं लज्जते" इति । लज्जा हि कुलवतीनां भूषणम् । योगचक्षुषा = योगदृष्ट्या योगजधर्मेणेत्यर्थः । योगश्चित्तवृत्तिनिरोधः, तेन हि अतीन्द्रियार्थदर्शो भवन्ति महर्षयः । जनापवादभीरुणा = लोककृतनिन्दामसहमानेन । नतु हृदयेन=मनसो नैव परित्यक्ताऽसीत्यर्थः । निरपराधा= निर्दुष्टा । अपरित्याज्यैव रक्षणीयैवेत्यर्थः । सापराधा राजदण्डिता अबलापि न रक्षणीया, अन्यथा हि राष्ट्रविप्लवः स्यादिति भावः । सीता विश्वासं कर्तुं पृच्छति-"को णु तुमं" इति ।

वा—श्रूयताम्—

सोऽहं चिरन्तनसखा जनकस्य राज्ञ-
स्तातस्य ते दशरथस्य च बालमित्रम्।
वाल्मीकिरस्मि विसृजान्यजनाभिशङ्कां
नान्यस्तवायमबले! श्वशुरः पिता च ॥२८॥

सी—(१) भअवं वंदामि।

वा—वीरप्रसवा भव, भर्तुश्च पुनर्दर्शनमाप्नुहि।

सी—(२) तुमं लोअस्स वम्मीई, मम उण तादो एव्व, ता गच्छ सयं अस्समपदं। (गङ्गावलोक्याञ्जलिं बध्वा) भअवइ भाईरहि, जइ अहं सोत्थिणा गब्भं अभिणिव्वत्तेमि तदा तव दिणे दिणे सुट्ठु उच्छाए कुन्द-मालाए उवहारं काइस्सम्।

(१) भगवन् वन्दे।

(२) त्वं लोकस्य वाल्मीकिः, मम पुनस्तात एव तद्गच्छ स्वमाश्रमपदम्। (—)भगवति! भागीरथि! यद्यहं सुखेन गर्भमभिनिर्वर्तयामि तदा तव दिने दिने सुष्ठु प्रथितया कुन्दमालयोपहारं करोमि।

मुनिराह—"**श्रूयताम्**" इति। **सोऽहमिति**। सोऽहं प्रसिद्धतर इत्यर्थः। चिरन्तनसखा=पुराणमित्रम्, जनकस्य राज्ञस्तव पितुः। ते=तव तातस्य=श्वशुरस्य दशरथस्य च बालमित्रम्=कौपीनसखः, एवम्भूतो वाल्मीकिरस्मि=वाल्मीकिरिति नाम्ना प्रसिद्धो मुनिरस्मि। अतः अन्यजनाभिशङ्काम्=अपरिचितविश्वासाऽनर्हप्राकृतपुरुषशङ्का, विसृज=जहि। हे! अबले! अवश्यरक्षणीये, अयम्=अहमेवेत्यर्थः। तव अन्यो न=भिन्नो न। किन्तु अयमेवाहं श्वशुरः पिता च ज्ञातव्य इति शेषः ॥२८॥ सीता शिष्टाचारं पालयति—"**भअवं वंदामि**" इति। वन्दे=नमस्करोमि। **वीर**प्रसवा=वीरः शूरः प्रसवः सन्तानो यस्याः सा तादृशीत्याशीर्मुनेः।

लोकस्य=सर्वसाधारणस्य। तातः=पितैव। सुखेन=अनायासेन। गर्भम्=प्रजातन्तुम्। अभिनिर्वर्तयामि=प्रसोष्यामि। दिने दिने=प्रतिदिनम्। सुष्ठुप्रथितया=शोभनं गुम्फितया। **कुन्दमालया**=माघ्यप्रसूनमालया। "माघ्यं कुन्दम्" इत्यमरः। "माघ्यः कुन्दः कुरण्टकः" इति पुंस्काण्डे रत्नकोशात् पुंस्त्वमपि। उपहारम्=उपायनमर्चामित्यर्थः। करोमि=करिष्यामि। वर्तमानसामीप्ये लट्।

समुज्ज्वलः। भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुत" इत्यादि दर्पणोक्तं विस्तृतम्। सङ्क्षिप्तन्तु दशरूपके यथा—

प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः॥ इति

इति श्रीपण्डितदेवीदासतनुजनुषा सारस्वतवंशावतंसेन सती-विष्णुदेवीगर्भजेन स्यालकोटवास्तव्य-जैनन्यायविशारद-कवितार्किक [ तन्त्रचक्रवर्ति ] दर्शनाचार्य-नृसिंहदेवशास्त्रिविरचितायां "सौरभोल्लासिनी" इत्यपराख्यायां "सौभाग्यवती" नाम-कुन्दमालाव्याख्यायां प्रथमोऽङ्कः।

# द्वितीयोऽङ्कः

(ततः प्रविशतो द्वे मुनिकन्यके)

**प्रथमा**—(१) हला वेदवदि, दिट्ठिआ वड्ढसि, सीदाए तव पिअसहीए रामस्सामा दुवे पुत्तआ जाआ।

**वेदवती**—(२) पिअं मे पिअं मे। किंणामहेआ ?

**प्र**—(३) जेट्ठो दाणिं भअवदा कुसोत्ति सद्दाविदो दुदिओ लवोत्ति।

---

(१)—हला! वेदवति! दिष्ट्या वर्द्धसे, सीतायास्तव प्रियसख्या रामश्यामौ द्वौ पुत्रकौ जातौ।

(२)—प्रियं मे प्रियं मे! किंनामधेयौ?

(३)—ज्येष्ठ इदानीं भगवता कुश इति शब्दापितो द्वितीयो लव इति।

---

"**हला**" इति। हलेत्यव्ययं सम्बुद्धिरूपं सखीम्प्रति। "हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीम्प्रति" इत्यमरोक्तेः। नात्र "हला" शब्दष्टाबन्तः सखीपर्यायः। तथासति "हले! वेदवति" इति पठ्येत। "सम्बुद्धौ च" ७। ३। १०८) इति सूत्रेणापः सम्बुद्धावेकारापत्तेः। तस्मात् "आली वयस्या सखी हला" इत्यमरकोषटीकाधृतं बोपालितवचनमन्यार्थं प्रकृतेऽसङ्गतं ज्ञातव्यम्। "**दिष्ट्या**" इति। हर्षेऽव्ययमिदम्। "दिष्ट्या समुपजोषमित्यानन्दे" इत्यमरः। रामश्यामौ=राम इव श्यामौ। किंनामधेयौ = किमाख्यावित्यर्थः।

"**ज्येष्ठ**" इति। अतिशयेन प्रशस्य इति ज्येष्ठः। "अतिशायने तमबिष्ठनौ" (५।३।५५) इतीष्ठनि "ज्य च" (५।३।६१) इति प्रशस्यस्य ज्यादेशः। "ज्येष्ठः श्रेष्ठे च वृद्धे च त्रिषु मासान्तरे पुमान्। ज्येष्ठा तु गृहगोधाख्यजन्तुनक्षत्रभेदयोः" इति मेदिनी। प्रकृते कुशो लवापेक्षया वृद्धः लवस्तु कनिष्ठः। भगवता=वाल्मीकिना। "कुश" इति शब्दापित =आकारितः। ज्येष्ठस्य "कुश" इति नाम कृतम्। **अत्रेदं ध्यातव्यम्**—"शब्दापितः" इति कथं प्रयोगः। "शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे" (३। १। १७) इति सूत्रेण एभ्यः कर्मभ्यः करोत्यर्थे क्यङ्विधानादात्मनेपदे "शब्दायते" इति भवति। शानचि तु

वा—अत्यन्तदुःखसञ्चारोऽयं मार्गः, विशेषतस्त्वां प्रति, यथा यथा मार्गमादेशयामि तथा तथा समागन्तव्यम् ।

एतस्मिन्कुशकण्टके लघुतरं पादौ निधत्स्वाग्रतः
शाखेयं विनता नमस्व शनकैर्गर्तो महान् वामतः ।
हस्तेनामृश तेन दक्षिणगतं स्थाणुं समं साम्प्रतं-
पुण्येऽस्मिन् कमलाकरे चरणयोर्निर्वर्त्यतां क्षालनम् ॥२६॥

अत्यन्तेति=अत्यन्तं दुःखेन कष्टेन सञ्चारो गमनागमनं यत्र सः । मार्गः= पन्थाः । विशेषतस्त्वाम्प्रति=अपरिचितत्वात् स्त्रीत्वात् तत्रापि राजदारत्वादिस्याशयः । मार्गम्=पन्थानम्, आदेशयामि=बोधयामि । तथा तथा=तेन तेन प्रकारेण समागन्तव्यम्=सममागन्तव्यम् सधैर्यं मन्दं मन्दं मम गतिमनुगन्तव्यमित्यर्थः । एतस्मिन्निति—एतस्मिन् = पुरोवर्तिनि ( समीपतरवर्तिनि ) कुशकण्टके= कुशानां दर्भाणां कण्टका यत्र तादृशे मार्गे इत्यर्थः । लघुतरम्=अगुरुतरम्, ( "लघुरगुरौ च मनोज्ञे च निःसारे वाच्यवत्क्लीबम् । शीघ्रे च कृष्णाऽगुरुणि स्पृक्कानामौषधौ तु स्त्री " इति कोषान्तरम् । ) अग्रतः=पुरतः, पादौ=चरणौ, निधत्स्व=निःक्षिप । इयं शाखा=तरोः शाला । ("शाखा तरुस्कन्धशाखा शाला भवनमिष्यते " इति शाश्वतः । विनता=विशेषेण नता नम्रा, येन ऋजुगन्तुं न शक्यते अतः शनकैः=शनैः मनागित्यर्थः, नमस्व=नम्रीभव । वामतः=दक्षिणेतरतः वामपार्श्वे महान्=विकटो विशालो वा गर्तः=खातः " अस्ति " इति शेषः । तेन=हेतुना दक्षिणगतम्=दक्षिणपार्श्वे वर्तमानं समम्=अविषमं स्थाणुम्=निष्पत्रं शुष्कं तरुम्, हस्तेन=करेण आमृश=आश्रयस्व, अन्यथा पतनभयं स्यात् । साम्प्रतम्=इदानीं विषमस्थलातिक्रमणोत्तरम्, अस्मिन् पुण्ये= पवित्रे, कमलाकरे=कमलाकरनाम्नि सरसि अथवा—बहुकमले सरसि चरणयोः= पादयोः, क्षालनम्=धावनं शोधनं निर्वर्त्यताम् = साध्यताम् । "नम्" धातोः परस्मैपदित्वेऽपि—"नमस्व" इत्यत्र चान्द्रमतेनात्मनेपदम्बोध्यम्, "चान्द्रादयस्तु मन्यन्ते सर्वस्मादुभयम्पदम्" इति न्यायसुधोक्तेः । शार्दूलविक्रीडितं वृत्तम् । लक्षणमुक्तं प्राक् ॥२६॥

मी—( यथोक्तं परिक्रामति )
वा—( निर्दिश्य )

इक्ष्वाकूणाञ्च सर्वेषां क्रियाः पुंसवनादयः ।
अस्माभिरेव पच्यन्ते मा शुचो गर्भमात्मनः ॥२०॥
कौसल्यापादशुश्रूषासौख्यं वृद्धासु लप्स्यसे ।
पश्य सख्यो भगिन्यश्च तवैता मुनिकन्यकाः ॥२१॥

( इति निष्क्रान्ताः सर्वे )

इति प्रथमोऽङ्कः

---

यथोक्तमिति । मुन्युपदेशानुसारम् । वाल्मीकिस्तद्गर्भरक्षाविषये सान्त्वना प्रकटीकरोति—इक्ष्वाकूणामिति । इक्ष्वाकूणाम् = इक्ष्वाकुवंश्यानां सर्वेषां राज्ञां पुंसवनाद्याः. क्रियाः = पुंसवनाद्याः संस्काराः अस्माभिरेव = वसिष्ठेन मुनिना सहास्माभिरेवास्माभिः पच्यन्ते = क्रियन्ते अनुष्ठीयन्ते इत्यर्थः । अत आत्मनो गर्भं माशुच =कथमस्य पुंसवनाद्या जातकर्माद्या वा संस्कारा भविष्यन्तीति शोकं मा कुर्वित्यर्थः ॥२०॥

विश्वस्तेऽपि मुनौ कथं नाम एवमवस्थायाः ममापि स्त्रिय श्रीष्वेव रहोनिवेदनार्हं वृत्त सेत्स्यतीति शङ्कामपनुदति—कौसल्येति । कौसल्या तन्नाम्नी तव श्वश्रूः तस्याः पादयोर्या शुश्रूषा=सेवा तया सेवितुमिच्छा, तया यत्सौख्यमानन्दः तत् वृद्धासु = जरठासु मुनिपत्नीषु लप्स्यसे=प्राप्स्यसे । एताश्च मुनिकन्यकाः= ऋषिपदारिकाः तव भगिन्यः = सहोदरा (इव) सख्यः = वयस्या (इव च) सन्ति समानवयस्कत्वादिति त्वं पश्य = जानीहि । वाक्यार्थस्यात्र कर्मता "पश्य मृगो धावती" त्यादिवत् । एवमवस्थायास्तवात्र गृहनिर्विशेषतैवेति सर्वथा त्वया शङ्का न कर्तव्येति भावः ।

"इति निष्क्रान्ताः सर्वे" = "पात्रैस्त्रिचतुरै रङ्कस्तेषामन्ते च निर्गमः" इत्युक्तेः प्रविष्टपात्राणामङ्कशेषे निष्क्रमणस्यावश्यकत्वात् "निष्क्रान्ताः सर्वे" इत्युक्तम् । "प्रथमोऽङ्क" इति । अङ्कलक्षणन्तु—"प्रत्यक्षनेतृचरितोरसभाव-

वे—(४) किं समत्ता पहि परिब्भमिदुं ?

प्र—(१) किं समत्थात्ति भणि अदि ।

**धावन्ति हरिणएहिं जइ पडिमल्ला किसोरसीहाणं ।**
**तह अ तपस्सिणिहिअअं हरंति पिअदंसणा जुअला ॥१॥**

(४)—किं समर्थौ पथि परिभ्रमितुम् ।

(१)—किं समर्थाविति भण्यते

धावतो हरिणकैर्यदा प्रतिमल्ला किशोरसिंहानाम् ।
तथा च तपस्विनीहृदय हरतः प्रियदर्शनौ युगलौ ॥

---

"शब्दायमानः" क्ते "शब्दायितः" इति च स्यात् । न्यासमतानुसारं पक्षे तत्करोतीति णिच्यपि "शब्दयति" इति प्रयोगे सति "शब्दयित" इति वा भवेत् पुगागमस्तु कथमपि नार्हति भवितुम्, अर्थादिष्वभावात् । तस्मान्नेदं साधुरिति च्युतसंस्कृतिदोषः । परन्तु—अभिज्ञानशाकुन्तले षष्ठेऽङ्के राजानम्प्रति विदूषकोक्तौ "यदि भवानन्तःपुरकालकूटान्मोचयते तदा मां मेघप्रतिच्छन्दे प्रासादे शब्दापय" इति महाकविः कालिदासोऽप्येवं प्रयुङ्क्ते, व्याख्यातारश्च तथैव व्याख्यान्ति नचैते प्रमत्तगीताः सन्ति । तस्मादत्र कामधेन्वादिग्रन्थेषु अष्टानां वैयाकरणानां मतान्यालोडितानि तत्र "अड्डापयति मुद्दापयति" इत्यादिवत् अकारस्य स्थितिपक्षे दीर्घे पुकि च "शब्दापयति" इत्यपि प्रयोगः सिद्धो भवतीति कथमपि महाकवीनां प्रमादो न मन्तव्य इत्यस्माकमाभाति । विस्तरस्तु मुग्धबोधादिटीकादिषु द्रष्टव्यः ।

आश्चर्यं प्रकटयन्त्याह—"किं समत्थत्ति" इति । "धावंति हरिणएहिं"—इति गाथा । संस्कृत "धावतो हरिणकै"रिति । हरिणकैः = हरिणशावकैः सह धावन्तः=पलायमानाः, किशोरसिंहानाम् = किशोराश्च ते सिंहाः तेषां किशोरसिंहानां प्रतिमल्लाः = प्रतिभटाः, यथा = किशोरसिंहानां प्रतिमल्ला इवेत्यर्थः उपमा । तथा च—युगलौ तौ द्वौ यमजौ प्रियदर्शनौ = प्रियं मनोहरं दर्शनं ययोस्तौ, तपस्विनीनां=मुनिपत्नीनाम्, हृदयं हरतः = आकर्षयतः । तपस्विनीहृदयहरणादिकथनेन तयोर्लोकोत्तरसौन्दर्यमौष्ठवबलकान्त्योजःप्रभृति व्यज्यते इति वस्तुध्वनिः ॥१॥

(१)—मुणिजणस्स अंकादो अकादो अदि संचरंति। संपदं वंमीइ-विरइदं रामाअणं पढंति।

वे—(२) इम उत्तंतं सुणिअ एदावत्थं सीदा किदपुण्णेत्ति तक्केमि। अह इंदवदंति सीदसोवोआवित्तस्स आर्या मिथिदं अणोण्णं (?)।

प्र—(३) संभरणीअं सु एदं। को णेमिसउत्तंतो?

वे—(४) संभरिदो एव्व जण्णसंभारो महाराअस्स, णिमंतिदो

(१)—मुनिजनस्याह्लादङ्कादतिसञ्चरतः। साम्प्रतं वाल्मीकिविरचितं रामायणं पठतः

(२)—इमं वृत्तान्तं श्रुत्वा एतदर्थं सीता कृतपुण्येति तर्कयामि ·········

(३)—सम्भरणीयं खल्वेतत्। को नैमिशवृत्तान्त.।

(४) सम्भृत एव यज्ञसंम्भारो महाराजस्य, निमन्त्रितः सान्तर्वासिनी-

**मुनिजनस्येति**—वाल्मीक्याश्रमे निवसत ऋषिजनस्येत्यर्थः। अङ्काद-ङ्कात्=अङ्कमङ्कमित्यर्थः। एतेन वीतरागाणामपि मुनीनां तयोर्विषये प्रेमातिशयो ध्वन्यते। रामायणम्=वाल्मीकिमुनिविरचितमादिमं महाकाव्यं यत्र छन्दसा प्रथमोऽवतारः। **इममिति**—जन्मत एव सीतापुत्रौ क्षात्रकान्तिभाजाविति वृत्तान्तम्=उदन्तम्, श्रुत्वा=आकर्ण्य। एतदर्थम्=एतादृशालौकिकसिंहसंह नाद्यपुपेतपुत्रद्वयलाभार्थं सीता कृतपुण्या=कृतं पुण्यं (कर्म) यया सा इति तर्कयामि = सम्भावयामि। नह्येतादृशपुत्रप्राप्तिः प्रभूतप्रकृष्टपुण्यमन्तरा स्यात्। एतेन सीताया वनवासदु खमीषत्करमेव संवृत्तमिति भाव। प्रथमा आह—"सम्भरणीयम्" इति। खलु=निश्चयेन, एतत्=इदमेतादृशं सीतायाः पुनसम्बन्धि वृत्तजातम्, सम्भरणीयम्=सम्यक् भरणीयम्, दु खनिवृत्तौ समर्थमिति। अर्थात् सम्प्रति सीताया दु खावसानं भविष्यति, पुण्यफलरूपत्वा-त्ादृशपुत्रप्राप्ते.। नैमिशवृत्तान्त =नैमिशारण्यवृत्तान्तो यत्र श्रीरामेण यज्ञ उपक्रमणीयः तस्योदन्त इत्यर्थ।

सम्भृतः = राशीकृतः। यज्ञसम्भार = यज्ञस्य सम्भारः यज्ञोपकरणं आज्यसमिधादिकम्। सम्भ्रियते इति **सम्भारः**। "अकर्तरि च कारके सञ्ज्ञायाम्" (३।३।१६) इति घञ्। निमन्त्रितः= "यज्ञ" इति शेष।

सांतरवासिणीओ तपोधणाणं संपादो ।

प्र—(१) किं णिमंतिदो भअवं वंमीई ?

वे—(२) सुदं वंमीइतपोवणं वि आअदो रामदूदोत्ति, कहिं दाणिं सीदा पेक्खिदव्वा ?

प्र—(३) एत्थ एव्व सालपाअवच्छाआए उपविसदि कहं अदिवाहइस्सिं ।

( इति निष्क्रान्तः )

---

कस्तपोधनानां सम्पातः ।

(१) किं निमन्त्रितो भगवान् वाल्मीकिः ।

(२) श्रुतं वाल्मीकितपोवनमपि आगतो रामदूत इति, कुत्रेदानीं सीता प्रेक्षितव्या ।

(३) अत्रैव सालपादपच्छायायामुपविशति—कथमतिवाहयामीति ।

---

अन्तर्वासिनीभिर्गृहिणीभिः सहित इति सान्तर्वासिनीकः । तपोधनानाम् = तपस्विजनानां सम्पातः=सङ्घः । "तेन सहेति तुल्ययोगे" (२।२।२८) इत्यनेन बहुव्रीहौ—"वोपसर्जनस्य" ( ६ । ३ । ८२ ) इति सहस्य वैकल्पिकः सः । "शेषाद्विभाषा" (२ । ४ । १२५) इत्यनेन वैकल्पिकः कप् । "भगवानि"ति तस्य त्रिकालदर्शित्वं द्योतितम् ।

"आगतो रामदूत" इति वाल्मीकिं निमन्त्रयितुमित्याशयः । कुत्र = कस्मिन् प्रदेशे ।

अत्रैव = अस्मिन्नेवाश्रमे । सालो वरणः सचासौ पादपश्च, सालपादपस्य छाया इति सालपादपच्छाया तस्याम् । वरणवृक्षस्यानातपे प्रदेशे इत्यर्थः । उपविशति = निषीदति स्थिता वर्त्तते इति यावत् । "पुंसि भूरुहमात्रेऽपि सालो वरणसर्जयोः" इति रभसः । यथा वरणतरोर्घनीभूता छाया भवति न तथा सर्जवृक्षस्येति सालपदेन वरणतरुरेव बोध्यः । कथमतिवाहयामि = कथं केन प्रकारेण, अतिवाहयामि=गमयामि । (अतिवाहयामि=प्रापयामि भवतीं सीतासमीपे इति तु न युक्तम्–"कथ"मित्यस्यासाङ्गत्यापत्तेः।) दिवसानिति शेषः ।

## प्रवेशकः

सी —(नि श्वस्य)(१) अहो ! अविस्ससणीअदा पइदिणिठ्ठुरभावाणं पुरुसहिअआणं जं, तम्भप्पलिहिदव्वणेहाणं दंपदीणं पसंगे उमा-

(१) अहो अविश्वसनीयता प्रकृतिनिष्ठुरभावाना पुरुषहृदयाणा यत् स्तम्भप्रलिखितव्यस्नेहाना दम्पतीना प्रसङ्गे उमामहेश्वराविति स्वर्गे,

"प्रवेशक" । इति प्रवेशकलक्षणमुक्तं साहित्यदर्पणे यथा—

प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥

"शेषं विष्कम्भके" इत्यनेन वृत्तवर्तिष्यमाणकथांशोक्तिर्दर्शिता । सुधाकरे तु-प्रवेशकलक्षणमेवमुक्तम्—

यत्नीचैः केवलं पात्रैर्भाविभूतार्थसूचनम् ।
अङ्कयोरुभयोर्मध्ये स विज्ञेयः प्रवेशकः ॥ इति ।

"अहो" इति । विस्मय इत्यर्थ । "अहो ही च विस्मये" इत्यमर । अविश्वसनीयता = विश्वसनीयस्य भावो विश्वसनीयता न विश्वसनीयता अविश्वसनीयता विश्वासानर्हतेत्यर्थ । प्रकृतीति—प्रकृत्या स्वभावेन निष्ठुरः कठोरः क्रूरः भावाऽभिप्रायो येषामेवम्भूतानां पुरुषहृदयानाम् = मनुष्यान्त - करणानाम् । मनुष्याणां हृदयानि निसर्गत एव क्रूराभिप्रायाणि भवन्ति, पूर्वं स्त्रिया निरतिशय प्रेम दर्शयन्ति पश्चात्क्रूरभावतया विरमन्तीति सीताया आशय ।

"भाव सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु । क्रियालीलापदार्थेषु बुध-जन्तुविभूतिषु । रत्यादौ च " इति मेदिनी । " कक्खट कठिन क्रूर कठोरं निष्ठुरं दृढम् । जरठ मूर्तिमन्मूर्तम् " इत्यमर ।

उक्तमेव स्पष्टीकरोति—" यत् " इत्यादिना । यत् = यस्माद्धेतोः स्तम्भे—स्थूणाया प्रलिखितव्य प्रकर्षेण लिखितु योग्य न्यसनार्हः स्नेहः प्रीतिर्येषां तेषा दम्पतीनाम् = जम्पतीनाम् । जाया च पतिश्च जम्पती दम्पती । "जायाया जम्भावो दम्भावश्च निपात्यते ।

प्रसङ्गे = प्रस्तावे " कौ दम्पती सुनिबद्धस्नेहौ " इत्येवं प्रस्तावे चलिते सतीत्यर्थः (तदुत्तरे) "उमामहेश्वरौ " = उमा पार्वती, महेश्वरो महादेवः उमा

महेस्सारोत्ति सग्गे पुढवीए सीदारामोत्ति श्रदिप्पसिद्धिं श्रारोविश्र णिरवराधा एदं गदिं अच्चंतमणुभाविदोम्हि । अथ कीस अहं अज्जउत्तं णिंदामि, एव्वं पुरा अज्जउत्तेण एअस्स वअणीअगाधाघणं सुसमेत्तएण अदरीदमग्गणुत्ति संपदं अणेअजोअणांतरिदे⋯⋯सणं आकरणं मारिसि पुण्णदुक्खकारिणी जादा। तेण सह दिट्ठो चंदोदओ, तेण सह सुदो कोकिल

पृथिव्यां सीतारामाविति अतिप्रसिद्धिमारोप्य निरपराधा एतां गतिमत्यन्तमनुभाविताऽस्मि । अथ कीदृगहमार्यपुत्रं निन्दामि । एवं पुरार्यपुत्रेण⋯⋯ ⋯ ⋯ ⋯साम्प्रतमनेकयोजनान्तरिते ⋯⋯अकारणं ⋯⋯ पूर्णदुःखकारिणी जाता । तेन सह दृष्टश्चन्द्रोदयः, तेन सह श्रुतः कोकिलकलप्रलापः, तेन

च महेश्वरश्च उमामहेश्वरौ । चार्थे द्वन्द्वः । इति स्वर्गे = इत्येतत् नाकलोके । पृथिव्याम् = भूमौ मर्त्यलोके सीतारामाविति पूर्ववद्द्वन्द्वः । इति = एवम्प्रकारेण अतिप्रसिद्धिम् = परां ख्यातिम्, आरोप्य = नीत्वा, निरपराधा = अपराधशून्या निर्दोषा, एताम् = असह्यां वनवासरूपां गतिम् = दशाम् अत्यन्तम् = अतिमात्रम्, अनुभाविताऽस्मि = प्रापिता भवामि । अथेति—कल्पान्तरमाह । अथशब्दोऽयमर्थः । "अथाथो संशये स्यातामधिकारे च मङ्गले । विकल्पानन्तरप्रश्नकात्स्न्यीरम्भसमुच्चये" इति मेदिनी । कीदृगहम्=कीदृशी अहम् आर्यपुत्रं निन्दामि=गर्हयामि। मद्द्वाराऽऽर्यपुत्रो न निन्दापात्रमित्याशयः। एवमिति—साम्प्रतम्=इदानीम् । अनेकयोजनान्तरिते=अनेकैर्योजनैरन्तरिते कृतव्यवधाने, अकारणम्=निर्हेतुकं निरपराधमिति यावत् । पूर्णदुःखकारिणी= पर्याप्तदुःखभागिनी जाता । तदेव पूर्णदुःखानुभवं वर्णयति—तेन सहेति । तेन=आर्यपुत्रेण, सह=सार्धम्, दृष्टः=साक्षात्कृतो मुक्त इति यावत् *चन्द्रोदयः= चन्द्रस्य शशिन उदयः, श्रुतः=आकर्णितः कोकिलानां पिकानां कलप्रलापः कलो

* चन्द्रोदयवर्णनं दिग्मात्रं यथा—
ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥ इति

कलप्पलाओ, तेण सह अणुभूदो मलअमारदप्परिसो, सपद मए एआइणीए दिट्ठो अ सुदो अ अणुभूदो अ। पाअं परिच्चअामित्ति सव्वहा अलिअं मारिसीहिं इत्थिआहिं। पुरा अह सामिवल्लहदाए सअलमिहिलाजणपत्थणीअा भविअ अज्ज उण एदावत्थ सोअणीआ संवुत्तेत्ति परिच्चाअदुक्खदो लज्जा एव्व मं अहिअदर बाहेदि। संपदं जदा जादा दारा सवड्ढिदा अ, सादरो दाणिं भअवं वम्मीइ,

सहानुभूतो मलयमारुतस्पर्श, साम्प्रत मयैकाकिन्या दृष्टश्च श्रुतश्चानुभूतश्च। प्रायान् परित्यजामीति सर्वथा अलीक मादृशीभि स्त्रीभि। पुराह स्वामिवल्लभतया सकलमिथिलाजनप्रार्थनीया भूत्वा (?) अद्यपुनरेतदवस्थ शोचनीया संवृत्तेति परित्यागदु खतो लज्जा एव मामधिकतर बाधते। साम्प्रत पुन जातौ दारौ सवर्धितौ च, सादर इदानीं भगवान् वाल्मीकि। न युक्त

मधुर प्रलाप. पञ्चम स्वर इत्यर्थ। "कोकिलकलालाप" इति पाठ सम्यक् प्रपद्ये।
अनुभूत =ज्ञातो भुक्त इत्यर्थ। मलयमारुतस्य दक्षिणानिलस्य स्पर्श स्वगिन्द्रियमात्रग्राह्यो विशेषगुण। मया एकाकिन्या–आर्यपुत्रविरहितया। स्पष्टमन्यत् प्राणान् परित्यजामि=म्रिये इत्येतत् सर्वथा=सर्वप्रकारेणैव अलीकम्=मिथ्या कर्तुमयोग्यमित्यर्थ। मादृशीभि स्त्रीभि =सत्कुलोत्पन्नाभि सत्कुलेचोक्ताभि शरमहत्त्वापाप जानन्तीभिर्योषाभि। एतेनाकुलीना एव साहसकारिण्यो भव न्तीति ध्वनितम्। पुरादमिति—वनवासात प्रागित्यर्थ। स्वामिवल्लभतया = स्वामिनो भर्तुर्वल्लभतया प्रियतया। सकलेति—सकलस्य मिथिलाजनस्य = स्वपितृपौरवर्गस्य, प्रार्थनीया = अभ्यर्थनीया भूत्वा, अद्य=अधुना पुनरेतदवस्थ यथा तथा शोचनीया=दिन्दनीया, संवृत्ता=जाता। कस्याप्युपकार कर्तुमसमर्थत्वा दिति भाव। इति=हेतो, परित्यागदु खत =भर्तृपरित्यागकष्टत्, लज्जा=व्रीडा एव मामाधिकतरम्=अत्यन्तम्, बाधत=पीडयति। सम्भावितस्यापकीर्तेर्लज्जाऽधिका जायते इति भाव। एवञ्च न तथा त्यागदु ख बाधते यथा च मा लज्जा तापयतीति सीताया अभिप्राय। प्राणत्यागे प्रतिबन्धकान्तरमप्याह— साम्प्रत पुनरिति। जातौ=उत्पन्नौ दारौ=दारकौ शिशू, सवर्धितौ=पालितौ

ण जुत्तं मम एदिणा तपोवणवासविरुद्धेण दीहणिस्सासेण कालं अदिवाहिदुं । एत्त एव्व मरणव्ववसाअस्स पडिबंधो जं मए पिअसही वेदवदी ण संदिट्ठा णावि उपणिमंतिदा अ ।

---

ममैतेन तपोवनवासविरुद्धेन दीर्घनिःश्वासेन कालमतिवाहयितुम् । एतदेव मरणव्यवसायस्य प्रतिबन्धो यन्मया प्रियसखी वेदवती न सन्दिष्टा नाप्युपनिमन्त्रिता च ।

---

च । पत्नीवाची दारशब्दस्तु नित्यं बहुवचनान्तः पुंसि च । "पुंभूम्नि दारा" इत्यमरोक्तेः । व्याडिमते तु स्त्रीवाची दारशब्दः टाबन्तोऽपि भवति ।

"क्रोडा हारा तथा दारा त्रय एते यथाक्रमम् ।
क्रोडे हारे च दारेषु शब्दाः प्रोक्ता मनीषिभिः ॥

इत्यमरीयव्याख्यासुधायाम् । वस्तुतस्तु कविरत्र स्वतन्त्रः । शिशुवाची ण्वुलन्तः दृधातोर्निष्पन्नो "दारक" शब्दो भवति । तस्मात्प्रचलितसम्प्रदायानुरोधेन निष्पत्तिपक्षेऽप्रयुक्तो दोषः । अन्यथा च्युतसंस्कृतिः । अस्मद्भावनया तु—"अपारः शब्दराशि" रिति कूपमण्डूकता परित्याज्यैवेति पूर्वोक्तमेव भावनीयम् । प्रकृतमनुसरामः—"सादर" इति । मयि प्रदर्शितादर इत्यर्थः । न युक्तमिति—एतेन तपोवनवासविरुद्धेन=तपोवनवासानर्हेण, दीर्घनिःश्वसितेन=दीर्घजीवितेनेत्यर्थः । कालमतिवाहयितुम् = समयं गमयितुं न युक्तमित्यन्वितोऽर्थः । अर्थात् पुत्रयोर्जातत्वात्पालितत्वाच्च सम्प्रति निष्फलं जीवनं न रक्षणीयम् । किन्तु तत्र बाधकमाह—एतदेवेति सामान्यनिर्देशः । एष एवेत्यर्थः । मरणव्यवसायस्य=मरणोद्योगस्य, प्रतिबन्धः=प्रतिरोधः । यत् मया प्रियसखी = प्रियवयस्या वेदवती, न सन्दिष्टा=एतन्मम चिकीर्षितमिति सन्देशं न गमिता, नापि = नच, उपनिमन्त्रिता = समीपं गत्वा मन्त्रणया पृष्टेत्यर्थः ।

(ततः प्रविशति वेदवती)

वे—(१) किदो एव्व तपोधणाणं वदणुव्वआरो, अदिहिजणसमुइदो समुदाआरो अ। ता इदो एव्व सालपादवं गदुअ पिअसहिं सभावइस्स ( परिक्रम्य विलोक्य च ) एसा विदेहराअतणआ णिदाहमासलआ विअ परिक्खामपण्डुराए अवत्थाए हिअअं अक्खिवन्ती सालमूलमलंकरेदि । ता

---

(१) कृत एव तपोधनानां वन्दनोपचार, अतिथिजनसमुचितः समुदाचारश्च। तदित एव सालपादपं गत्वा प्रियसखीं सम्भावयिष्यामि। (—) एषा विदेहराजतनया निदाघमासलतेव परिक्षामपाण्डुरयाऽवस्थया हृदयमाक्षिपन्ती सालमूलमलङ्करोति।

---

**ततः** प्रविशतीति। वेदवतीप्रवेशेन प्रतिमुखसन्धिरवसेयः, सीताप्रवासरूपो लक्ष्योर्थः अलक्ष्यश्च कुशलवयोरामसमागमरूपोऽर्थस्तयोरुद्भेददर्शनात्। **कृत एवेति** । तपोधनानाम्=तपस्विनाम्, वन्दनोपचारः=प्रणामात्मकः शिष्टाचारोऽनुष्ठितः एवेत्यर्थः। अयमाचारोऽपि बालेषु तपस्विसहेतु विशेषतया दृश्यते। **अतिथीति**—अतिथिजनानां प्राहुणिकानां समुचितः योग्यः, समुदाचारश्च=जलासनादिप्रदानरूपः आतिथ्यविशेषः सद्व्यवहारोऽपि कृत एव। तदित एव=अस्मादेव प्रदेशात्। सालपादपम्=वरणवृक्षम्। गत्वा= प्राप्य प्रियसखीम्=सीताम्। सम्भावयिष्यामि=सम्भालयिष्यामि सान्त्वयिष्या मीत्यर्थः। ( नाटके ) परिक्रम्य=भ्रमणं कृत्वा विलोक्य च दृष्ट्वा भ्रमणदर्शनाभिनयं कृत्वेत्यर्थः। एषा=पुरः स्थिता। **विदेहे**ति—विदेहराजस्य मिथिलाधीशस्य पुत्री तनया। एतेन—एतादृश्या अपि कृते कीदृशो दुःखोपनिपातः इत्यहो ऽबाध्य विधातृचेष्टितमिति ध्वन्यते। निदाघमासलतेव= निदाघमासस्य ग्रीष्ममासस्य ज्येष्ठस्येत्यर्थः। लतेव=वल्लीव। परिक्षामा=कृशा पाण्डुरा पीतवर्णाचासौ सा तादृशी तया, अवस्थया दशया। हृदयम्= अन्तःकरणम्, आक्षिपन्ती=व्याकुलयन्ती, सालमूलम्=वरणमूलम्, अलङ्करोति= भूषयति। विरहिणी सती तदधः स्थितेत्यर्थः। लतेवेत्युपमा। 'वल्ली तु

उवसप्पिस्सं (उपसृत्य) एसा चिंतापरवसा विश्र अहोमुही लंबालश्राच्छाइ-श्रणश्रणा दीणपेक्खिदा । सद्दावइस्सं सहि वैदेहि ( इति शब्दापयति )

सी—(ससम्भ्रमं विलोक्य) (१) पिश्रं मे पिश्रं मे संपत्ता पिश्रसही वेदवदी साश्रदं पिश्रसहीए ? (परिष्वज्योपवेशयति)

वे—(२) श्रवि कुसलं कुसलवाणं ?

सी—(३) जह वणवासिणं ।

वे—(४) कीदिसो तुम्हाणं वुत्तंतो ?

---

तदुपसर्पामि । (—)एषा चिन्तापरवशेवाधोमुखी लम्बालकाच्छादितनयना दीनप्रेक्षिता । शब्दापयिष्यामि । सखि ! वैदेहि !

(१) प्रियं मे प्रियं मे । सम्प्राप्ता प्रियसखी वेदवती। स्वागतं प्रियसख्याः।

(२) अपि कुशलं कुशलवयोः ।

(३) यथा वनवासिनाम् ।

(४) कीदृशो युष्माकं वृत्तान्तः ।

---

मततिर्लता'' इत्यमरः । तदुपसर्पामि=सीतायाः पार्श्वं प्राप्नोमीत्यर्थः । (—) **चिन्तेति**—चिन्तया आधिना मानस्या व्यथया परवशा परतन्त्रा इव अधोमुखी=निम्नानना, लम्बालकाच्छादितनयना=(पतिविरहे शृङ्गारादिनिषेधेन) लम्बैः कङ्कतिकाव्यापाराभावहेतोरध:स्खलितैः अलकैः चूर्णकुन्तलैः आच्छादिते प्रावृते नयने यस्याः सा तादृशी, अतएव दीनप्रेक्षिता=दीनं कातरं प्रेक्षितं दृष्टिर्यस्याः सा । चिन्तातुराया विरहिण्या जातेरियम् । शब्दापयिष्यामि=आकारयिष्यामि । सखि !=वयस्ये ! वैदेहि ! = जानकि ! ॥

ससम्भ्रमम्=सत्वरमित्यर्थः । विलोक्य=दृष्ट्वा । प्रियम्=इष्टं चिन्तितस्य लाभात् । कुशलम्=क्षेम ।[१] कुशलवयोरिति प्रश्नेन वीरवतीभिर्भर्तृविरहे बहु खेदो न कर्तव्य इति वेदवत्या आशयो व्यज्यते । सीता उत्तरयति—**यथे**ति । वनवासिनां यादृशं कुशलं भवति तथैव तयोरपीति । राजकुमारयोरपि सतो जन्मत एव वनवास इति सीतया दुःखातिशयो व्यक्तीकृतः । ''युष्माकं वृत्तान्त'' इति । कथं निर्वाह्यन्ते दिनानीत्यर्थः ।

सी—(वेणीं निर्दिश्य) (१) कीदिसो सो ।

वे—( आत्मगतम् ) (२) अदिमत्तं संतवइ एसा वराई, रामसंदेसस्स संकित्तणेण विणिधारइस्सं (प्रकाशम्) अयि अपंडिदे, तह णिरपेक्खस्स णिरणुक्कोसस्स किदे कीस तुमं असिदपक्खचंदलेहा विअ दिणे दिणे परिहीअसि ।

सी—(३) कहं सो णिरणुक्कोसो ।

वे—(३) जेण परिच्चत्तासि ।

(१) कीदृशोऽसौ ।

(२) अतिमात्रं सन्तपति एषा वराकी, रामसन्देशस्य (?) सङ्कीर्तनेन । विनिधारयिष्यामि(—)अयि ! अपण्डिते ! तथा निरपेक्षस्य निरनुक्रोशस्य कृते कीदृक् त्वमसितपक्षचन्द्रलेखेव दिने दिने परिहीयसे ।

(३) कथं स निरनुक्रोशः ।

(४) येन परित्यक्तासि ।

वेणीमिति—असंस्कृता वेण्येव मदीयवृत्तान्तस्य्यञ्जिकेति वेणीनिर्देशः । "कीदृशोऽसौ" इति । यादृशस्तादृश इति किमुच्यते । दुःखप्रद एवेत्यभिप्रायः ।

आत्मगतमिति । स्वगतमित्यर्थः ।

"अतिमात्रम् इति । अत्यन्तमित्यर्थः । सन्तपति=दुःखमनुभवति । वराकी=तपस्विनी, दयार्हा अनुकम्पनीयेति यावत् ।

रामसन्देशस्य=रामवृत्तान्तस्य । सङ्कीर्तनेन=कथनेन । विनिधारयिष्यामि= निषेत्स्यामि, अस्या हृदयमिति शेषः । "अयि" इति कोमलालापे सखित्वात् अपण्डिते !=विचारशून्ये, मुग्धे इति यावत् । तथा निरपेक्षस्य=तेन प्रजारञ्जनहेतोस्त्वत्परित्यागरूपेण प्रकारेण अपेक्षाशून्यस्य, निरनुक्रोशस्य=निर्दयस्य कृते कीदृक् त्वम्, असितपक्षचन्द्रलेखेव = असितपक्षस्य कृष्णपक्षस्य या चन्द्रलेखा शारीरकला तद्वदित्युपमा । दिने दिने=प्रतिदिनम्, परिहीयसे = क्षीणा भवसि । कृष्णपक्षे चन्द्रकला क्षीयते इति प्रसिद्धम् । सीता रामस्य निर्दयतामनन्यमनाऽऽह—कथमिति । निरनुक्रोशः=निर्दयः । नास्त्येवासौ

सी—(१) किमहं परिचत्ता?

वे—(विहस्य वेणीं परिमार्जयति) (२) एव्वं लोओ भणादि, सच्चं परिचत्ता।

सी—(३) अह सरीरेण, ण उण हिअएण।

वे—(४) कहं परकेरअं हिअअं जाणासि?

सी—(५) कहं तस्स हिअअं सीदाए परएरअं भविस्सदि!

वे—(६) अहो अपरिचत्ताणुराअदा।

सी—(७) कहं सो मम उवरि परिचत्ताणुराओ जेण अदिप्पसिद्धो

(१) किमहं परित्यक्ता।

(२) एवं लोको भणति सत्यं परित्यक्ता।

(३) अथ शरीरेण न पुनर्हृदयेन।

(४) कथं परकीयं हृदयं जानासि।

(५) कथं तस्य हृदयं सीतायाः परकीयं भविष्यति।

(६) अहो अपरित्यक्तानुरागता।

(७) कथं स ममोपरि त्यक्तानुरागः येनातिप्रसिद्ध एव

निरनुक्रोश इति सीताया आशयः। वेदवती लोकोक्तिं समर्थयते—"**येन**" इति। परित्यक्ता=निर्वासिता। सीता उत्तरमाह-**किमिह्**मिति। स्पष्टमन्यत्। वेदवती लोकं प्रमाणयति-"**एवं लोक**" इति। भणति=वदति। सीता स्वपरित्यागे परमार्थं प्रकटयति—"**अथ शरीरेण**" इति। सत्यं लोकोक्त्या परित्यक्तास्मि परं शरीरेण, न पुनर्हृयेन=हृदयेन नैव परित्यक्ताऽहम्। हृदयत्याग एव वस्तुतस्त्यागः बाह्यत्यागस्तु तस्य राजत्वात् प्रजारञ्जनार्थमेवेति भावः। वेदवती पृच्छति-**कथमिति**। स्वसाक्षिकमेव हृदयं भवति ननु परसाक्षिकम्, अन्यथा परस्यापि सुखदुःखानुसन्धानप्रसङ्गः स्यादिति भावः।

**कथं तस्येति**—"मम चित्तमनुचित्तं तेऽस्तु" (    ) इति वेदमन्त्रैः सुसंस्कृतत्वात् मर्यादापुरुषोत्तमत्वाच्च श्रीरामस्य सीतायाश्च हृदयैक्यमेवेति भावः। अहो=आश्चर्यम्। अपरित्यक्तानुरागता=दृढा प्रीतिमत्तेत्यर्थः। "**कथं स**" इति। सः=रामः। ममोपरि=मद्विषये। त्यक्तानुरागः=त्यक्तः परिहृतः अनुरागः प्रीतिर्येन

एव्व म अधण्णं उद्दिसिअ अज्जउत्तेण अणुभूदो सेदुबधादिपरिस्समो ।

वे—(१) अत्तसिलाहिणि, खत्तिआण समुइदो, एसो रावणस्स उवरि रोसो, ण सीदाए उवरि अणुराओ ।

सी—(२ एद अवर ण पेरक्खसि ।

वे—(३) किं एद अवर ।

सी—(४) एद ।

वे—(५) किं एद ।

---

मामधन्यामुद्दिश्यार्यपुत्रेणानुभूत सेतुबन्धादिपरिश्रम ।

(१) आत्मश्लाघिनि ! क्षत्रियाणा समुचित एष रावणस्य उपरि रोषो न सीताया उपर्यनुराग ।

(२) एतदपर न प्रेक्षसे

(३ किमेतदपरम् ।

(४) एतत् ।

(५) किमेतत् ।

---

स एवम्भूत कथ स्यात्, नैव स्यादिति भाव । अत्र हेतुमाह–"येनेति" । अतिप्रसिद्ध=लोकविख्यात एव । अधन्याम्=दुर्भगाम् । मामधन्यामिति खलु खदी भाग्य दूषयति । अनुभूत=अनुष्ठित इत्यर्थ । सेतुबन्धादिपरिश्रम=रावणवधार्थं सेतुबन्धनायासम । यदि त्यक्तानुरागोऽभविष्यत् तदा कदापि मत्कृते तादृश क्लेश नासहिष्यदिति भाव । वेदवती सीताभिप्राय निराकरोति–आत्मश्लाघिनीति । रामो मयि अनुरक्त इत्यात्माभिमानिनि ! । क्षत्रियाणाम्–क्षात्रधर्माभिमानिनां शूराणामित्यर्थ । एष रावणस्य=शत्रो उपरि, रोष=क्रोध, समुचित=योग्य एव । शत्रु हत्वा वैरनिर्यातन क्षत्रियाणा परो धर्म इति भाव । "न" इति । सीताया उपरि=सीतामुद्दिश्येत्यर्थ । अनुराग=प्रीति । तस्मादात्मनि रामानुराग मा भावय । सीता स्वपक्षे हेत्वन्तरमाह–एतदपरमिति । न प्रेक्षसे=किमिति न आलोचयसे । एतदिति सीताया भावगर्भोक्ति ।

तमेव स्पष्टयितु पृच्छति—" किं एदम् " इति ।

सी—(१) (सलज्जम्) जं सवत्तीजणणीसासाणुपविद्धे रामवच्छत्थले अदिचिरं संभाविदम्हि ।

वे—(२) सहि मा उत्तम्म समासण्णो रामस्स जण्णदिक्खासमओ ।

सी—(३) तदो किं ?

वे—(४) णं तहिं अस्सस्स सहधम्मआरिणीए पाणिग्गहो णिव्वत्तिदव्वो

सी—(५) अज्जउत्तस्स हिअए पहवामि, ण उण हत्थे.

(१) यत् सपत्नीजननिःश्वासानुपविद्धे रामवक्षःस्थले अतिचिरं सम्भावितास्मि ।

(२) सखि ! मा उत्ताम्य, समासन्नो रामस्य यज्ञदीक्षासमयः ।

(३) ततः किम् ।

(४) ननु तत्राश्वस्य सहधर्मचारिण्या पाणिग्रहो निर्वर्तयितव्यः ।

(५) आर्यपुत्रस्य हृदये प्रभवामि, न पुनर्हस्ते ।

सलज्जम्=सव्रीडम् । "सपत्नीजने"ति । सपत्नीजनानां समानः पतिर्यासां ताः सपत्न्यः ताश्च जना इति तेषाम्, निश्वासेन अनुपविद्धे = अस्पृष्टे रामवक्षःस्थले = रामस्य हृदये । सपत्नीजनालिङ्गनशून्ये रामस्योरसीत्यर्थः । अतिचिरम् = बहुकालम्, सम्भावितास्मि = मानितास्मि ।

सार्वभौमस्य सतोऽपि रामस्य यदिदमेकस्त्रीव्रतं तदेव पुष्टं प्रमाणं मद्विषयेऽत्यन्तं रामानुरागस्येति भावः ।

सखि ! वयस्ये ! मा उत्ताम्य = गर्वं मागा इत्यर्थः । समासन्नः = निकटवर्ती । रामस्य यज्ञदीक्षासमयः = यज्ञे अश्वमेधनामनि महायागे दीक्षायाः समयः कालः । तस्मिन् समयेऽवश्यं रामस्य पत्न्यन्तरपरिग्रहो भविष्यति, सहधर्मचारिणीं विना यज्ञानुष्ठानाऽसम्भवादतो मा गर्वं वहेति वेदवत्या आशयः । सीता अजानाना पृच्छति—ततः किमिति । "ननु" इति । तत्र = यज्ञे आशु = शीघ्रम्, अस्य सहधर्मचारिण्या = पाणिगृहीत्या, पाणिग्रहः = विवाहः । निर्वर्तयितव्यः = साधनीयः । एवं वेदवतीवचः श्रुत्वा दृढानुरागा सीता आह—"आर्यपुत्रस्य" इति । हृदये मनसि । प्रभवामि = समर्था भवामि, न पुनर्हस्ते = बहिर्नेत्यर्थः । आवश्यक

वे—(आत्मगतम्)(१)अहो से दिढाणुराअदा। (अहो अस्या दृढानुरागता) (प्रकाशम्) सहि पुत्तमुहदसणेण वि दे पवाससोओ णावणीदो।

सी—(२) सोअपरिहारेण वि सोओ वड्ढिअदि।

वे—(३) कहं विअ।

सी—(४) जह जहा दे दारआ ईससमुब्भिण्णदसणंकुरकोमलेण वदणेण ममसुहं आलोअंता पहसंति, अच्चंतकोमलेण आलावेण तादिसं

---

(१) सखि! पुत्रमुखदर्शनेनापि ते प्रवासशोको नापनीतः।

(२) शोकपरिहारेणापि शोको वर्द्धते।

(३) कथमिव।

(४) यथा यथा द्वौ दारकावीषत्समुद्भिन्नदशनाङ्कुरकोमलेन वदनेन मम मुखमालोकयन्तौ प्रहसतः, अत्यन्तकोमलेनालापेन तादृशं शब्दापयतः,

---

यज्ञसाधनाङ्गत्वेन कृतेऽपि स्त्र्यन्तरसम्बन्धेऽहमार्यपुत्रस्य हृदयाश्रापद्यता भविष्यामीति भावः।

पुत्रमुखदर्शनेनापि = पुत्रयोः कुशलवयोः मुखदर्शनेन, स्त्रीणां सन्ताने प्रेमाधिक्यादिति भावः। प्रवासशोकः = प्रवासदुःखम्। न, अपनीतः = नैव दूरीभूत इत्यर्थः। एतेन प्रमुखसतीनां पत्यावेवानुरागाधिक्यं नान्यत्रेति व्यज्यते।

शोकपरिहारेण = परिह्रियतेऽनेनेति परिहारः त्यागसाधनम्, शोकस्य परिहारः तेन शोकपरित्यागसाधनेनापीत्यर्थः। शोकः = हृदयसन्तापः। वर्धते = एधते। अपरा पृच्छति—"कहं विअ" इति। आह सीता—"जह जहा" इति। "यथा यथेति" संस्कृतम्। दारकौ = बालौ। ईषदिति—ईषत् किञ्चित् समुद्भिन्नैर्निर्गतैर्दशनाङ्कुरैः दन्ताङ्कुरैः अङ्कुरसदृशैर्दन्तैरित्यर्थः, कोमलेन मृदुना, वदनेन = मुखेन। मम मुखम्=ममास्यम्, आलोकयन्तौ=पश्यन्तौ, प्रहसतः=स्मितं कुर्वाते। अत्यन्तकोमलेन=बालभावसिद्धेन अतिमृदुना, आलापेन = वचसा, शब्दापयतः=अम्बाम्बेति-आह्वयतः।

सद्दावेअंति, तह जाणामि तस्स मुंदे णिमज्जामित्ति । संपदं उण कालवसेण परिणदा परिच्चत्तवालभावा अवाला संवुत्तेत्ति मं अहिअदरं बाधेयदि ।

वे—(१) अहो किंति तस्स महग्घं णिसंसत्तणं जं सीदा णाम वाल तणआ ईरिसं अवत्थं अणुभवदित्ति ।

सी—(२) सहि वेदवदि अवि णाम—

वे—(३) कीस लज्जिदेण ? भणाहि अज्जउत्तं पेक्खामित्ति ।

सी—(४) किं लज्जावेसेण, एव्वं भणामि । (प्रकाशम्) अवि कुसलवाणं तादस्स दंसणेण जम्मं अमोहं भवेदित्ति । किं लज्जावेशेन, एवं भणामि ।

---

तथा जानामि तस्य मौग्ध्ये निमज्जामीति । साम्प्रतं पुनः कालवशेन परिणतौ परित्यक्तबालभावावबालौ संवृत्ताविति मामधिकतरं बाधते ।

(१) अहो किमिति तस्य महार्घं नृशंसत्वं यत्सीता नाम बालतनयेदृशीमवस्थामनुभवतीति ।

(२) सखि ! वेदवति ! अपि नाम ।

(३) किं लज्जितेन, भण आर्यपुत्रं प्रेक्ष इति ।

(४) अपि कुशलवयोस्तातस्य दर्शनेन जन्मामोघं भवेदिति ।

---

" तस्य मौग्ध्ये निमज्जामीति तथा जानामि " इत्यन्वयः । तस्य = दारकद्वयस्य मौग्ध्ये = मुग्धस्य भावो मौग्ध्यं बालभावः तत्र, निमज्जामि = मग्ना भवामि तदेकतानमानसा तिष्ठामीत्यर्थः । कालवशेन = समयसामर्थ्येन परिणतौ = परिपक्वौ अवस्थान्तरं प्राप्तौ । **परित्यक्तेति**—परित्यक्तः बालभावः शैशवं ययोस्तौ, अबालौ = तारुण्यसन्धौ वर्त्तमानौ, संवृत्तौ = जातौ, इति = एतत् मामधिकतरम् = अधिकाऽधिकं बाधते = खेदयते । वेदवती प्राह—" **अहो** " इति । आश्चर्यम् । तस्य = रामस्य महार्घम् = बहुमूल्यम्, नृशंसत्वम् = क्रूरभावः । "तस्य क्रूरभावोऽप्युपादेय" इत्यर्थः । यत् = यस्मात् कारणात्, बालतनया = ईदृशीम् = शोचनीयाम्, अवस्थाम् = दशाम् ।

किं लज्जितेन = लज्जया किं फलमित्यर्थः । तातस्य = पितुः जन्म, अमोघम् सफलम् । पितुरनन्तरो हि पुत्रः, आत्मरूपश्चेति भावः । "आत्मा

वे—१ णं समासण्णं एव्व तुम्हाणं राअदंसणं।

सी—२ कहं विअ ?

( नेपथ्ये ऋषिः )

भो ! भो ! आश्रमवासिनो जना । शृण्वन्तु भवन्तः—

इतो नातिदूरे महाक्रतुरश्वमेधः प्रवर्तते, सम्भृतानि यज्ञोपकरणानि, सन्निपतिताश्च नानादेशाश्रमवासिनो वसिष्ठात्रेयप्रभृतयो महामुनयः। केवलं भगवतो वाल्मीकेरागमनमुदीक्षमाणो नाद्यापि यज्ञदीक्षां

(१) ननु समासन्नमेव युष्माकं राजदर्शनम् ।

(२) कथमिव ।

वै जायते पुन " इति श्रुते । समासन्नम् = प्राप्तमेव । राजदर्शनम् = राम मेला इत्यर्थ. । कथमिव = केन प्रकारेणेति सीता पृच्छति ।

" भो ! भो ! " इत्यामन्त्रणे आश्रमवासिनः = वाल्मीकिमुन्याश्रमस्थाः । शृण्वन्तु = आकर्णयन्तु, नातिदूरे = समीपवर्तिनीत्यर्थ । महाक्रतुः = क्रतुराड् " अश्वमेध " इति नाम्ना प्रसिद्ध । प्रवर्तते = प्रक्रान्त इवेत्यर्थः । अत्र हि—

गोक्षीरसमवर्णश्च कुन्देन्दुहिमसन्निभम् ।
पीतपुच्छं श्यामकर्णं सर्वतो गतिमुत्तमम् ।
श्यामं वापि महीपालयज्ञेऽस्मिंस्तुरगं विदुः ॥

इत्युक्तलक्षणोऽश्वस्त्यज्यते ।

सम्भृतानि=राशीकृतानि । यज्ञोपकरणानि=यज्ञस्य उपकरणानि साधनानि आज्यादीनि । सन्निपतिता =आगताश्च । नानेति—नानादेशेषु=अनेकेषु विदेशेषु ये आश्रमाः तद्वासिनः । वसिष्ठेति—महामुनयः=महान्ताश्च ते मुनयः । महत्त्वं त्रिकालदर्शित्वादिरूपम् । मुनित्वं=ब्रह्ममननादिरूपं बोध्यम् । भगवत =अलौकिकतपःसम्पन्नस्य । आगमनम्=आप्तिम् , उदीक्षमाणः=प्रतिपालयन् । यज्ञदीक्षाम्-यज्ञे दीक्षा यज्ञदीक्षा ताम् । दीक्षालक्षणमुक्तम्—

दीयते विमलं ज्ञानं क्षीयते कर्मवासना ।
तेन दीक्षेति सा प्रोक्ता मुनिभिर्धर्मकोविदैः ॥ इति

प्रविशति महाराजः। आगतश्च वाल्मीकितपोवनवासिनामुपनिमन्त्रणार्थं रामदूतः। तस्मान्नैव परिलम्बितव्यम्।

तीर्थोदकानि समिधः परिपूर्णरूपा
दर्भाङ्कुरानविहतान् परिगृह्य सद्यः।
अग्रे भवन्तु मुनयो मुनिकन्यकाश्च
कुर्वन्तु मङ्गलबलीनुटजाङ्गणेषु ॥ २ ॥

---

यदाह मनुः—

मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने।
तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनात् ॥ इति च।

प्रविशति=गृहातीत्यर्थः। महाराजः=सार्वभौमः श्रीरामचन्द्रः। **वाल्मीकीति**—वाल्मीकेः तपोवने वस्तुंशीलमेषाम्। उपनिमन्त्रणार्थम् = उपनिमन्त्रणां कर्तुम्। रामदूतः = रामप्रेषितः दूतः। नैव परिलम्बितव्यम् = नैव विलम्बो विधातव्यः।

**"तीर्थोदकानि"** इति। तीर्थानां गङ्गादीनामुदकानि जलानि, समिधः= अग्नेरिन्धनार्थं यज्ञियानि पलाशादिकाष्ठानि। परिपूर्णरूपाः=परिपूर्णं शास्त्रविहितं रूपं स्वरूपं यासां ताः,(यद् यद् यथा यथा वेदे विहितं तत्तत्तथा तथा सम्पन्नरूपोपेतमित्यर्थः।) दर्भाङ्कुरान् = कुशाङ्कुरान्, कीदृशान्–अविहतान् = परिपूर्णरूपान् अच्छिन्नमूलानित्यर्थः। तानेतान् परिगृह्य = गृहीत्वा, सद्यः = शीघ्रमेव मुनयः = वेदविदः, अग्रे भवन्तु = पुरःसराः सन्तु। अर्थात् तत्तद् गृहीत्वा यज्ञवाटमुपयान्तु। मुनिकन्यकाश्च = ऋषिकुमारिकास्तु, उटजाङ्गणेषु = पर्णशालाप्राङ्गणभागेषु, मङ्गलबलीन्=मङ्गलार्थं बलीन् उपहारान्, कुर्वन्तु=रचयन्तु ददन्तु इति यावत्, येन निर्विघ्नतया रामयज्ञसमाप्तिः सम्भवेदित्याशयः। "बलिर्दैत्योपहारयो"रिति हैमः। "मुनीनां पर्णशालोटजोऽस्त्रियाम्" "अङ्गणं चत्वराजिरे" इत्युभयत्रामरः। वसन्ततिलकावृत्तम्। लक्षणमुक्तं प्राक् ॥२॥

सी—१ तुवरेमि, तुवरेमि, एस अज्ज कस्सवो पत्ताणघोसणासमणन्तर गहिदजण्णोवकरणो अग्गदो पत्थिदो । अह वि कुसलवाण पत्थाणमङ्गल अणुचिट्ठिस्स ।

( इति निष्क्रान्ता सर्वे )

**इति द्वितीयोऽङ्क ।**

---

(१) त्वरामि, त्वरामि, एष आर्य काश्यप प्रस्थानघोषणासमनन्तर गृहीतयज्ञोपकरणोऽग्रत प्रस्थित । अहमपि कुशलवयो प्रस्थानमङ्गलमनुष्ठास्यामि ।

---

**त्वरामि** त्वरामि = अतित्वरा कुर्वे । एष आर्य = पूज्य काश्यप = कश्यपगोत्रोद्भवो मुनिविशेष । "**प्रस्थाने**"ति । प्रस्थानस्य = यज्ञयात्राया घोषणा डिण्डिम , तस्या समनन्तरमेव = तदुत्तरमेव गृहीतयज्ञोपकरण = गृहीतमात्त् यज्ञस्य उपकरण तीर्थोदकादिसामग्रीरूप साधनद्रव्यविशेषो येन स तथाभूत , प्रस्थित = प्रचलित । प्रस्थानमङ्गलम् = यज्ञयात्रामङ्गलम् । अनुष्ठास्यामि = साधयिष्यामि ।

"**इति** निष्क्रान्ता सर्वे ' इतीद पूर्ववद्व्याख्येयम् । ' इति द्वितीयोऽङ्क " इतिशब्द समाप्तिं द्योतयति । द्वितीयोऽङ्क समाप्त इत्यर्थ ।

इति श्रीपरिडतदेवीदासतनुजनुषा सारस्वतवशावतसेन सती विष्णुदेवीगर्भजेन स्यालकोटवास्तव्य जैमन्यायविशारद कवितार्किक [ तन्त्रचयवर्त्ति ]
दर्शनाचार्य नृसिंहदेवशास्त्रिविरचिताया "सौरभोल्लासिनी"
इत्यपराख्याया "सौभाग्यवती 'नाम कुन्दमालाव्याख्यायां
द्वितीयोऽङ्क ।

---

# तृतीयोऽङ्कः

( ततः प्रविशति मार्गपरिश्रान्तो गृहीतभारस्तापसः )

ता—(श्रममभिनीय) भो सुट्ठु परिस्संतोम्हि एदिणा संदावदीहेण गिम्हसमएण । ण प्पहवामि परिस्समगआणं जंघाणं विक्खेवणिक्खेव कादुं ।

---

भोः ! सुष्ठु परिश्रान्तोऽस्मि एतेन सन्तापदीर्घेण ग्रीष्मसमयेन । न प्रभवामि परिश्रमगतयोर्जङ्घयोर्विक्षेपनिक्षेपौ कर्तुम् । पादतलं च

---

अमन्दानन्दसन्दोह–पराशक्तिपरात्मने ।
रघुवंशीय-मणये जानकीजानये नमः ॥

" तृतीयोऽङ्कः " प्रारभ्यत इति शेषः । मार्गपरिश्रान्तः = मार्गेण बहुमार्गचलनेन श्रमं प्राप्तः, गृहीत उत्थापितो भारः सामग्रीविशेषो येन स तादृशः, तापसः = तपस्वी । तपस्विवेषं पात्रं प्रविशतीत्यर्थः । श्रमम् = अध्वक्लान्तिरूपमायासम् । अभिनीय = नाट्येन सामाजिकान्प्रति दर्शयित्वा । भोरित्ययं शब्दः सम्बोधने । सुष्ठु = बाढमित्यर्थः । परिश्रान्तः = परिश्राम्यति स्मेति परिश्रान्तः । कर्तरि क्तः । एतेन = अमुना । सन्तापदीर्घेण = सन्तापो घर्मो दीर्घो बहुर्यत्र तथाभूतेन, ग्रीष्मसमयेन = निदाघकालेन । " ग्रीष्म ऊष्मकः । निदाघ उष्णोपगम उष्मा उष्मागमस्तप " इत्यमरः । ग्रसते रसानिति ग्रीष्मः । ग्रसु अदने । अस्माद्धातोः " ग्रीष्मः " ( ३०१।१४६ ) इति सूत्रेण मक्, धातोर्ग्रीभावः, षुगागमश्चेति सर्वं निपातितम् । न प्रभवामि = नैव समर्थोऽस्मि " सर्वं वाक्यं सावधारणम् " इति न्यायात् । परिश्रमगतयोः = परिश्रमं गते इति परिश्रमगते तयोः । " द्वितीया-श्रितातीतपतितगता० "—( २ । १ । २४ ) इति तत्पुरुषः । जङ्घयोः = प्रसृतयोः । " जङ्घा तु प्रसृता " इत्यमरः । जङ्घन्यते कुटिलं गच्छतीति " जङ्घा " । हन्तेर्यङ्लुगन्तात्—" अन्येभ्योऽपि दृश्यते " ( वा० ३ । १० । २ ) इति डः प्रत्ययः । अथवा–" जनी " प्रादुर्भावे धातुः ।

पाददळ च मे सपक्क पिडअसप्फोडएहिं संवुत्तं । अण्णच्च, तह सुउमाळा देवी सीदा तह कोमळा अ कुसळवा तापससद्देण सह अत्थमिदे सूरे नेमिसं पत्ता । अहं अज्ज वि. णासादेमि अदविदिसामुहे

मे सम्पक्वं, पिटकसस्फोटकैः सवृत्तम् । अन्यच्च, तथा सुकुमारा देवी सीता तथा कोमलौ च कुशलवौ तापससार्द्धेन सहास्तमिते सूर्ये नैमिशं प्राप्ता.। अहमद्यापि

"अच् तस्य जङ्घ च" (३०१।३१) इत्यनेन निपात्यते । जायते इति "जङ्घा"।

विक्षेपनिक्षेपै = विक्षेप. पादयोः क्रम उत्थापनमिति यावत् निक्षेपो विक्रम सस्थापनमित्यर्थः, तौ क्रमविक्रमौ, कर्त्तुम् = विधातुम् । "परिश्रम- गतयोर्जङ्घयोर्विक्षेपनिक्षेपौ कर्त्तुं न प्रभवामि" इत्यन्वयः । पादतलम् = अङ्घ्रितल चरणाग्रे रधोभाग इत्यर्थ । मे = मम । "ते मयावेकवचनस्य" (८।१।२१) इत्यसद षष्ठ्येकवचनस्य "मम" इत्यस्य स्थाने "मे" इत्यादेशः ।

सम्पक्कम् = सम्यक् पक्वम् । समग्र जातमित्यर्थः । "पचो व" (८।२।५१) इत्यनेन निष्ठातस्य वादेश । अपाचीदिति "पक्क" भूते निष्ठा । पिटकसस्फोटकै = विस्फोटापटकः "छाला" इति प्रसिद्धैः । संवृत्तम् = जातम् । "विस्फोटः पिटकस्त्रिषु" इत्यमरः । "पिटक स्यात्तु विस्फोटे मञ्जूषायामपीष्यते" इति हेमचन्द्र । अन्यच्च=वृत्तान्तरमित्यर्थः । तथा=तादृशीत्यर्थ , सुकुमारा = अतिकोमला । "सुकुमारन्तु कोमलं मृदुलं मृदु" इत्यमर । सुष्ठु कुमार्यते । कुमार क्रीडायाम्, चुरादि । "पुंसि सञ्ज्ञायां घ प्रायेण" (३।३।११८) इति घ प्रत्ययः । "अजाद्यतष्टाप्" (४।१।४) इति सूत्रेण टाप् । देवी = राज्ञी सीता, "देवी कृताभिषेकायाम्" इत्यमर । तथा=तथैव कोमलौ = सुकुमारौ कुशलवौ । तापससार्द्धेन=तापसानां तपस्विनां सार्द्धेन सार्थेन—"सार्थेन" इति युक्तम् । सह=साकम् । अस्तमिते = अस्तङ्गते, सूर्ये = भास्करे, नैमिशम् = तदाख्यमरण्यम्, प्राप्ताः = सीताकुशलवाद्येत्यर्थ । अहम् = तापस । अद्यापि=

( विचिन्त्य ) को दाणिं मे णेमिसमग्गं आचक्खिस्सदि ( विलोक्य ) णूणं एसो लक्खणसहाओ रामो णेमिसं संपत्तो । ता अहं वि दाणं गइं अणुसरेमि । ( निष्क्रान्तः )

प्रवेशकः

(ततः प्रविशति शोकसन्तप्तो रामो लक्ष्मणश्चाग्रतः )

ल—आर्य ! इत इतः । ( परिक्रम्य )

प्रथममनपराधां तां समुत्कृष्य देवी-
मगममहमगाधे कानने त्यक्तुकामः ।

---

नासादयामि अटवीदिशामुखे (——) क इदानीं मे नैमिशमार्गमाचक्षीत (——) नूनमेव लक्ष्मणसहायो रामो नैमिशं सम्प्राप्तः । तदहमपि तयोः गतिमनुसरामि ।

---

अधुनापि,न आसादयामि=न प्राप्नोमि "नैमिश"मिति पूर्वेणान्वयः।अटवीदिशा-मुखे=अटव्या दिशा अटवीदिशा तस्या मुखे । "अटवीदिशामुखम्" इति पाठे तु–अहमधापि अटवीदिशामुखं नासादयामि " इति योज्यम् । मार्गभ्रान्तोऽयं तापस इति भाति । नैमिशमार्गम् = नैमिषारण्यवर्त्म । आचक्षीत =कथयेत् । नूनम्=निश्चितम् । लक्ष्मणसहायः = लक्ष्मणद्वितीयः । "नैमिशं सम्प्राप्तः"= नैमिशं सम्प्राप्तः इवेति व्याख्येयम्, अन्यथा तापसदिग्भ्रान्तिवर्णनविरोधो दुष्परिहरः । तयोर्गतिम् = रामलक्ष्मणयोः पद्धतिम् = सरणिम् । अनु-सरामि = अनुगच्छामि । एवं मे दिग्भ्रमो न भविष्यतीति भावः । "प्रवेशकः" लक्षणमुक्तं प्राक् ।

शोकसन्तप्तः=शोकेन सीताविरहेण सन्तप्तः=दुःखितः । परिक्रम्य=परिभ्रम्य । प्रथममिति । अनपराधाम्=न अपराधो यस्याः सा ताम् पनवासप्रदानहेतु-भूतदोषरहितामपि शुद्धामपीत्यर्थः । ताम् = पूर्वमरमदनपाये सहेरिताम्, देवीम्=राज्ञी सीताम् , समुत्कृष्य = व्याजेन उद्दानीय, अगाधे=घोरे, कानने= वने, त्यक्तुकामः=त्यक्तुमनाः, अगममहमगमम्=अप्रमपतरमहमयासिषम् ।

पुनरपि कुलशेषं राममादाय देवं
स्वजनविपदि दक्षः क्वाप्यधन्यः प्रयामि ॥ १ ॥

हा! सुष्ठु खल्विदमुच्यते—

प्रमादः सम्पदं हन्ति प्रश्रयं हन्ति विस्मयः।
व्यसनं हन्ति विनयं हन्ति शोकश्च धीरताम् ॥२॥ इति

---

पुनरपि =द्वितीयवारमपि, कुलशेषम् = कुलस्य वंशस्य शेषभूतम्, देवम्= राजानं रामम्, आदाय=सहनीत्वा, क्वापि=अनिर्दिष्टे प्रदेशे, वैक्लव्येनोक्तिरियम्। प्रयामि=गच्छामि। कीदृशोऽहम्–स्वजनविपदि=स्वजनस्य सीतादिरूपस्वबन्धोर्विपदि=आपत्तौ दक्षः=कुशलः। स्वबन्धुविपत्तिप्रदोऽप्यहमेवेति भावः। पुनः कीदृशः:—अधन्यः=न धन्योऽधन्यः दुर्भगः स्वजनविपत्तिहेतुत्वादित्यर्थः। **मालिनी** वृत्तम्। लक्षणमुक्तं प्राक्। "त्यक्तुकाम" इत्यत्र "लुम्पेदवश्यमः कृत्ये तुङ्काममनसोरपि" इति तुमोमस्य लोपः। "अगाधमतलस्पर्शे" "कानन गहनं वनम्" इत्युभयत्रामरः ॥१॥

हा=खेदे। "**सुष्ठु**"–इति। सूक्तिरियमित्यर्थः। "**प्रमाद**" इति। प्रमादः=अनवधानता अविमृश्यकारितेत्यर्थः। "प्रमादोऽनवधानता" इत्यमरः। "**प्रमादः** सम्पदे मत्ते स्त्रियामुन्मदयोषिति" इति च कोषान्तरम्। सम्पदम्= सम्पत्तिम्, हन्ति=विनाशयति। विस्मयः=दर्पः "**विस्मयो** ऽद्भुतदर्पयो" रिति हैमः। प्रश्रयम्=प्रणयं प्रीत्या प्रार्थनमिति यावत्, हन्ति। व्यसनम्= विपत्तिः कामजः कोपजो वा दोषविशेष इति यावत्, विनयम् = नम्रतां सदाचारमार्गमित्यर्थः हन्ति, "**व्यसनं**" त्वशुभे सक्तौ पानस्त्रीमृगयादिषु। दैवाऽनिष्टफले पापे विपत्तौ निष्फलोद्यमे" इति मेदिनी। शोकश्च = तथा शोकश्चिन्ता, धीरताम् = धैर्यं हन्ति। अत्र–हन्तीत्यनवीकृतत्वं वाक्यदोषः। यथा–*"सदा चरति खे भानु" रित्यादौ ॥ २ ॥

---

* सदा वहति मारुतः। सदा धत्ते भुवं शेषः सदा धीरोऽविकत्थनः" इति शिष्टं पादत्रयम्।

तथाहि—एष मन्दरमहीधरसमानधैर्यो भगवतो वाल्मीकेरागमनमुपलभ्य तद्दर्शनार्थं गोमतीतीराश्रमपदमुच्चलितः । सम्प्रति तामेव दिशं परित्यज्य शोकावेगसमाक्षिप्तहृदयो महावनाभिमुखं प्रस्थितः । ततः किमेनं सम्यक् ज्ञापयामि ? अथवा तत्किमनेन प्रतिहारेण धावितं मार्गमादेशयामि, यथायमचेतयन्नेव वाल्मीकेराश्रममनुप्राप्नोति । इत इत आर्यः ।

उक्तमर्थं प्रस्तुते योजयति-"**तथाहि**" इत्यादिना । एषः = समीपवर्त्ती रामः । मन्दरमहीधरसमानधैर्यः = मन्दरमहीधरेण मन्दराचलेन समानं तुल्यं धैर्यं यस्य सः । अतिगम्भीरो विपत्प्रपातेऽप्यचलो धीरोदात्तनायकत्वादिति भावः ।

भगवतः = पूज्यतमस्य । वाल्मीकेः=वल्मीकस्यापत्यं पुमान् वाल्मीकिः तस्य, आगमनमुपलभ्य=आगमनं श्रुत्वा । तद्दर्शनार्थम्=तं द्रष्टुम्, **गोमत्या**स्तीरे तटे य आश्रमः तस्य पदं स्थानं तन्मार्गमिति यावत् । उच्चलितः = अभियातः । सम्प्रति=इदानीम् । तामेव = गोमतीतीराश्रमयायिनीम्, दिशम् = काष्ठाम् । "दिशस्तु ककुभः काष्ठा" इत्यमरः । परित्यज्य = हित्वा, **शोकेति**–शोकस्य आवेगेन उच्छ्रायेन समाक्षिप्तं विह्वलीभूतं हृदयं मनो यस्य स तथाविधः, महावनाभिमुखम् = महावनं नैमिषारण्यं तदभिमुखम् प्रस्थितः = प्रचलितः । ज्ञापयामि = बोधयामीत्यर्थः । अथवा = किमेवं बोधनेन । प्रतिहारेण = प्रतीहारेण द्वारपालेन "**उपसर्गस्य** घञ्यमनुष्ये बहुलम्—(६।३।१२२) इति वा दीर्घः । प्रतिहारो जनवारणमस्त्यस्य अर्शआद्यच् । "प्रतीहारो द्वारि द्वाःस्थे द्वाःस्थितायान्तु योषिति" इति विश्वमेदिन्यौ । धावितम् = गतम्, मार्गम् = अध्वानम्, आदेशयामि = सूचयामि, यथा = येन प्रकारेण, अयम्=श्रीरामः, अचेतयन्= "अहं मार्गे भ्रान्तः" इत्येवाजानन्नेव । वाल्मीकेः = तदाख्यस्य मुनेः । आश्रमम्, अनुप्राप्नोति = अनुप्राप्नुयादित्यर्थः । इत्याह—"इत इत आर्य" इति ।

रा-(निश्वस्य)

> नीतस्तावन्मकरवसतौ बन्ध्यतां शैलसेतु
> र्देवो वह्निर्न च विगणितः शुद्धिसाक्ष्ये नियुक्तः ।
> इक्ष्वाकूणां भुवनमहिता सन्ततिर्नेक्षिता मे
> किं किं मोहादहमकरवं मैथिलीं तां निरस्य ॥३॥

---

निश्वस्य=दीर्घश्वास गृहीत्वेत्यर्थः । शोकमुद्रयम् । "नीत" इति । तावत्= आदौ । मकरवसतौ=मकराणां नक्राणा वसतिर्निवासस्थानं समुद्रस्तस्मिन् शैलसेतुः = शिलानामयं शैलं "तस्येदम्" (४।३।१२० इत्यण् । 'प्रचुरा शिला सन्त्यत्र । ज्योत्स्नादित्वादण् (वा० ५।२।१०३) इति दुर्व्याख्यानम्, ज्योत्स्नादिगणे शिलाशब्दस्यादर्शनात् । शैलश्चासौ सेतु पर्वतशिलानिर्मिता आलिरित्यर्थ । "पुल" इति प्रसिद्धः । "शैलो भूभृति शैलन्तु शैलेये तार्क्ष्ये शैलके" इति हैम । 'सेतुरालौ स्त्रियां पुमान्" इत्यमर । बन्ध्यताम् = अफलता "बन्ध्योऽफलोऽवकेशी च" इत्यमर । "बन्धे साधुर्बन्ध्य । "तत्र साधु" (४ । ४ । ९८ ) इति यत् । बन्ध्यस्य भावो बन्ध्यता । यदन्ते मया सीता निर्वासनीयैवाभूत् तदा वृथैव मत्कृत समुद्रे सेतुबन्ध इति भाव । एवमेवाग्रेऽपि ज्ञेयम् । शुद्धिसाक्ष्ये = शुद्धौ शुद्धिविषये साक्ष्य प्रष्टृत्वमिति शुद्धिसाक्ष्य तत्र नियुक्त = नितरां युक्तो निश्चित , यदि वह्नौ जीवन्ती सीता निर्यास्यति, परपुरुषगृहवासेऽपि शुद्धैव ज्ञेयेत्येवं शुद्धिविषये दिव्यपरीक्षार्थं नियोजित इत्यर्थ वह्निर्देव = द्योतनादिगुणोपेतो वह्निरनल , नव = नैव विगणित = मानित , कृतशुद्धेरपि सीताया पुनस्त्यागादिति भाव । (एवम्) इक्ष्वाकूणाम् = इक्ष्वाकुवंश्याना राज्ञाम्, भुवनमहिता=भुवनेषु त्रिषु लोकेषु महिता पूजिता अपेक्षणीयेत्यर्थ , सन्तति = सन्तान वंशाङ्कुरालवरूपम्, मे=मम (मयेत्यर्थः) न ईक्षिता= न पर्यालोचिता । गर्भिण्या सीताया परित्यागे कदाचिद् इक्ष्वाकुवंशोच्छेद एव न स्यादित्यपि मया न विचारितामिति भाव । (इत्थम्) ताम्=अतिप्रिया मम सुखे दुःखे च सहभागिनी मैथिलीम्=मिथिलाधीश्वरस्य पुत्रीं जानकीम्, निरस्य= निर्वास्य, मोहात् = अज्ञानात् अविमृष्यकारित्वादित्यर्थ । अत्र शुचि-

(परिक्रम्य)

भो भोः ! कष्टम् ! अतिनिरालम्बस्तपस्विन्याः प्रवासः ।

**पातयति सा क्व दृष्टिं कस्मिन्नासाद्य चित्तमाश्वसिति ।**
**जीवति कथं निराशा श्वापदभवने वने सीता ॥४॥**

लक्ष्मणः—(आत्मगतम्) आर्याया विप्रवासं तनयवैशसञ्च समनुचिन्त्य सुतरा-

---

भूतायामपि सीतायां प्रजाविप्रतिपत्त्या अशुचित्वबुद्धिकरणमविद्यापरपर्यायो मोहः, अतस्मिंस्तद्बुद्धिरविद्येत्यभियुक्तोक्तेः । किं किमहम् न, अकरवम् = नैव व्यधाम् । अपि तु सर्वमपि सेतुबन्धादि अविचारितं निष्फलमकार्षमित्यहो मे मोहमहिमेति भावः । मन्दाक्रान्तावृत्तम् । "मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्" इति तल्लक्षणात् ॥३॥

अतिनिरालम्बः = अत्यन्तं निराश्रयः । तपस्विन्याः=वराक्याः शोच्यायाः सीतायाः प्रवासः = निर्वासनम् एकाकित्वादिति भावः । तदेवोपपादयति—"पातयती"ति । सा = तपस्विनी वराकी सीता क्व = कस्मिन् रम्ये वस्तुनि, दृष्टिम् = नेत्रम् , पातयति=स्फोरयति । कं रम्यं पदार्थं पश्यति निर्जने भयङ्करे अरण्ये गृहवद्रम्यवस्तुनोऽभावादित्यर्थः । कस्मिन् = कुत्र वा, चित्तम् = मनः आसाद्य=आधाय प्राप्य, आश्वसिति=आश्वासं करोति । कुत्र मनो यस्यातीत्यर्थः । श्वापदभवने = श्वापदानां हिंस्राणां सिंहादीनां भवने वासस्थाने, वने = अस्मिन्नरण्ये निराशा = आशाहीना सती, कथं = केन प्रकारेण जीवति = प्राणान्धारयति । निराशस्य जीवनासम्भवान्मन्ये सा श्वापदाहार एव जातेति भावः । "अटव्यरण्यं विपिनं गहनं काननं वनम्" इत्यमरः । आर्यावृत्तम् । तल्लक्षणमुक्तं प्राक् ॥४॥

आर्यायाः=सीतायाः । विप्रवासम्=वनवासात्मकं त्यागम्, तनयवैशसम् सन्तानविनाशजनितं दुःखं, वने स्वच्छन्दायाः सीताया हिंस्रैः जन्तुभिर्विनाशे गर्भस्य-सन्ततेर्विनाशोऽवश्यम्भावात् । समनुचिन्त्य=संस्मृत्य, सुतराम्=नितराम्,

मयं सन्तप्यते, ततः प्रस्तावान्तरेण देवीवृत्तान्तमपसारयामि । (प्रकाशम्) इतस्तावदवलोकयत्वार्यः—

मरकतहरितानामम्भसामेकयोनि-
र्मदकलकलहंसीगीतरम्योपकण्ठा ।
नलिनवनविकासैर्वासयन्ती दिगन्ता-
न्नरवर ! पुरतस्ते दृश्यते गोमतीयम् ॥८॥

---

सन्तप्यते=क्लेशमुपैति । स्त्रीत्यागतन्मरणादिना सन्तापस्यावश्यकत्वादिति भावः । "तप" ऐश्वर्ये वा । अयं धातुरैश्वर्ये वा श्यनन्तश्च लभते तप्यते=ईष्टे इत्यर्थः । प्रकृतेतूपसर्गबलात् क्लेशार्थो बोध्यः । प्रस्तावान्तरेण अन्यावसरेण । "प्रस्तावः स्यादवसरः" इत्यमरः । अन्यवृत्तान्तव्याजेनेति यावत् । देवीवृत्तान्तम्=सीताप्रस्तावम्, अपसारयामि=दूरीकरोमि । प्रस्तावान्तरेऽस्य चेतो निःक्षिप्य सीतावृत्तान्तादेनमपसारयामि येनास्य शोकमात्रा क्षीणा भवेदिति भावः । "इत" इति । तावदिति वाक्यालङ्कारे । अवलोकयतु=पश्यतु ।

मरकतेति । हे ! नरवर !=नराधिप ! मरकतहरितानाम्=मरकतं हरिन्मणिः, मरकतमिव हरितानि, तेषां हरिद्वर्णानाम्, (गारुत्मतं मरकतमश्मगर्भो हरिन्मणिरित्यमरः) अम्भसाम्=पानीयानाम्, एकयोनिः=एकाऽद्वितीया योनिः स्थानं मुख्यमास्पदम् । हरिद्वर्णजलपूरितेत्यर्थः । मदकलेति—मदेन कला मत्ता याः कलहंस्यः=हंसस्य योषितो वरटाः तासां गीतेन, अथवा मदेन हर्षेण कलं प्रियं यत् कलहंसीनां गीतम्, तेन गीतसदृशेन हारिणा शब्देन रम्यो हृद्य उपकण्ठोऽभ्यर्णः समीपप्रदेशो यस्याः सा तादृशी, नलिनवनविकासैः=नलिनानामुत्पलानां यानि वनानि तेषां विकासैः प्रफुल्लनैः विकसितैरुत्पलवनैरित्यर्थः, दिगन्तान्=दिशामन्तान् प्रान्तभागान् दिक्प्रदेशानिति यावत्, वासयन्ती=सुगन्धयन्ती निजसौरभभरेण व्याप्तान् कुर्वती, इयम्=सन्निकृष्टा (इदमस्तु सन्निकृष्टे शक्तिः) गोमती=तदाख्या नदी, वस्तुतस्तु—गोमती=गङ्गा "गोमती गुह्यविद्या गौर्गोप्त्री गगनगामिनी" इति गङ्गासहस्रनामनि दर्शनात्, कुन्दमालाद्वारा गङ्गाया एव पूजनाविषये सीताप्रतिज्ञादर्शनाच्च, एवमात्मत्यसकलविरोधपरिहारो बोध्य इति स्वयं विचार्यतां नु केन विजया पीता । एवमग्र-

स—अतिविषमोऽय निम्नगावतार , तदप्रमत्तमवतीर्यताम् ।
(उभाववतरणमभिनीय) (निर्वर्ण्य)

यथैतान्यविरलपदन्यासलाञ्छितानि सैकतानि वृन्तमात्रावशेषतया

---

काण्डत पवनस्पर्शादिक सीतासामाप्य विना कथ सुखप्रद भवेदिति तस्या नैकव्य भावयति । अत्र—स्वरवैसादृश्येऽपि अनेकव्यञ्जनसाम्यात् स्फुटोऽनुप्रास । लापनप्रकारस्तु पूर्ववत् । मन्दाक्रान्ता ॥ ६ ॥

"**अतिविषम**" इति। अतिविषम =अत्यन्त निम्नोन्नत दुष्प्रवेश इत्यर्थ । अयम् = सन्निकृष्ट पुरोवर्ती, निम्नगावतार =निम्नगाया सरित गोमती नाम्न्या (गङ्गाया) नद्योऽवतार तीर्थस्थानम्। अवपूर्वात् प्लवनार्थकात् तृधातो "**अवेतृस्त्रोर्घञ्** ( ३ ३।१२० ) इति सूत्रेणाऽधिकरणे घञ् । अवतरन्ति स्नानाद्यर्थमनेनेत्यवतारो नद्यादेस्तटप्रदेश । "स्रवन्ती निम्नगापगा" इत्यमर० । तत् = तस्मात् कारणात् , अप्रमत्तम्–प्रमादरहित यथा स्यात्तथा सावधानमित्यर्थ । अवतीर्यताम् = अवतारप्रदेशम्प्रत्युपसर्प्यताम् । आवाभ्यामिति शेष । '**उभा**"विति । रामलक्ष्मणौ । अवतरणम् = अवसर्पणम् , अभिनीय = नाट्येन सामाजिकान्प्रति० । निर्वर्ण्य = निध्याय, सम्यगालोच्येत्यर्थ । '**निर्वर्ण**नन्तु निध्यान दर्शनालोकनेक्षणम् ' इत्यमर ।

"**यथैतानी**"ति–यथा = येन प्रकारेण । ' प्रकारवचने थाल्" (५।३।२३ ।) इत्यनेन प्रकारवृत्तित्वाद् यच्छब्दात्थाल् प्रत्यय । एतानि = पुरोवर्तीनि। "**अविरल**' ति–न विरला अविरला । "नञ्" (२ । २ । ६) इति सूत्रेण समासे "नलोपो नञ " (६।३।७३) इति नञो नस्य लोप । अविरला = घना निविडा इति यावत् । अविरलाश्च ते पदन्यासा पदयोश्चरणयोर्न्यासा क्रमा' पादविक्षेपा तैर्लाञ्छितानि = चिह्नितानि, सैकतानि=सिकतामया पुलिनप्रदेशा । सन्तीति शेष । ' सैकत सिकतामयम् ' इत्यमर । **सिकता** शर्कराभ्याश्च" (४ । २ । १०४) इति सूत्रेण मत्वर्थेऽण् । अथवा सिकतानां वालुकानां विकार **सैकतम्** ।* "मयड्वैतयोर्भाषायामभक्ष्याच्छादनयो

---

* "प्रकृतिमात्रादा मयट् प्रत्ययो भवति । भक्ष्याच्छादनवर्जितयो विकाराव यव ˋ र्थयोर्भाषायां विषये ' इति का ' ०–" ।

इयमपि कुरुते तरङ्गमध्ये,
भुजगवधूललितानि कुन्दमाला ॥७॥

रा—न केवलं प्रत्यासन्नवर्तिना प्रतिस्रोतोपगतेनापि मनुष्याधिवासेन भवितव्यम्।

ल—आश्चर्यमाश्चर्यम्! एषा हि कुन्दमाला चरणसपर्यामिव कर्तुकामया समुद्रगामिन्या तरङ्गपरम्परया क्रमेण देवस्य पादान्तिकमुपहृता।

---

सन्तीति शेषः। इयमपि च "कुन्दमाला"=माध्यप्रसूनरचिता माला, तरङ्गमध्ये= तरङ्गाणां लहरीणां, मध्ये=केन्द्रप्रदेशे, भुजगवधूललितानि=भुजगवध्वाः सर्पिण्याः ललितानि चेष्टाविशेषान्, कुरुते=विधत्ते, सर्पिणीवत् तरन्त्या स्फुरितानि तनोतीत्यर्थः। एवमनुष्ठितदेवार्चनानिर्माल्यदर्शनादवश्यं मनुष्याधिवासः प्रत्यासन्न इति भावः। अनुप्रासोऽलङ्कारः। पुष्पिताग्रा वृत्तम्। "अयुजि न युगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात् ॥७॥

राम आह—"न केवलम्" इति। "प्रतिस्रोतोपगतेन" इत्यपपाठः। स्रोत शब्दस्य सान्तत्वात् "प्रतिस्रोत उपगतेन" इति भाव्यम्। अथवा "सर्वे सान्ता अदन्ता" इति मते तु यथान्यासमेवास्तु। स्रोतः स्रोतः प्रतीति "प्रतिस्रोतः"। "अव्ययं विभक्ति"—(२।१।६) इति सूत्रेण वीप्सायां यथार्थेऽव्ययीभावः। प्रतिस्रोतः प्रतिप्रवाहं नद्यावेगमुपगतं आश्रितं यस्य सः तादृशः तेन। मनुष्याधिवासेन= मनुष्याणां निवासेन भवितव्यम्। अस्याः स्रवन्त्याः प्रतितटं मनुष्याणां निवासो भातीति भावः। लक्ष्मण आह—आश्चर्यमिति। एषा=पुरःस्थिता अर्थात् उक्ता—भुजगवधूललितानि कुर्वती कुन्दमाला, चरणसपर्याम्=चरणयोः पादयोः सपर्यां पूजामिव, कर्तुकामया=व्यवसितुकामया। समुद्रगामिन्या=गोमतीनाम्न्या (भागीरथ्या) नद्या। तरङ्गपरम्परया= तरङ्गाणां वीचीनां परम्परया परिपाट्या। क्रमेण=क्रमशः, देवस्य= आर्यस्य, पादान्तिकम्=चरणसमीपम्, उपहृता=उपायनीकृता उपहारभावेन अर्पिता भातीति शेषः। "चरणसपर्यामिव" इत्युत्प्रेक्षा। "पूजा नमस्याऽपचितिः सपर्याऽर्हणा समाः" इत्यमरः।

अवहितं प्रेक्षणीया विरचना, तदवलोकयत्वार्यः । (गृहीत्वोपनयति)

रा—(निर्वर्ण्य रोमाञ्चमभिनीय) वत्स ! दृष्टपूर्वमिदं कुसुमरचनाविन्यासकौशलम् ।

ल—क्व दृष्टम् ?

रा—क्व चान्यत्रेदानीमवस्थानम् ?

ल—किं देव्याम् ?

रा—अथ किम् ।

ल—को जानाति दुर्विदग्धः प्रजापतिः कथं कथं क्रीडतीति ।

---

अवहितम् = सावधानं यथा स्यात्तथा प्रेक्षणीया = अवलोकनीया, विरचना = विशिष्टा रचना विरचना कुन्दमालाया इत्यर्थः । एतद्दर्शनेन रचयितुः परं कौशलं प्रतीयत इति भावः । तदिति-तस्माद्धेतोः अवलोकयतु = पश्यतु आर्यः । गृहीत्वेति । लक्ष्मणो मालामादाय रामाय अर्पयतीत्यर्थः ।

राम—निर्वर्ण्य = पर्यालोच्य । रोमाञ्चं = लोमोद्गमम् । लक्ष्मणं सम्बोधयति—"वत्स" इति । "वत्सः पुत्रादिवर्षयोः" इत्यमरः । "दृष्टपूर्वम्" इति । इदं कुसुमरचनाविन्यासकौशलम् = कुसुमानां पुष्पाणां यो रचनाविन्यासः विशेषेण उचितस्थाने न्यासो योजनं स्थापनमिति यावत्, तस्य कौशलं चातुर्यं दृष्टपूर्वम् = पूर्वं दृष्टमिति दृष्टपूर्वम् । पूर्वमनुभूतमित्यन्वितोऽर्थः । ल० पृच्छति—"क्व"—इति । राम आह—"क्व वा" इति । इदंरस्य = रचनाविन्यासकौशलस्य । अवस्थानम् = स्थितिः । स्पष्टमन्यत् । "अथ किम्" इति । यथाऽऽत्थ एवमेवेत्यर्थः । लक्ष्मणोऽपि —"को जानाति"—इति । दुर्विदग्धः = हतदग्धो विचारशून्य इत्यर्थः । प्रजापतिः = विधाता । "कथं कथम्" इति । केन केन प्रकारेण, क्रीडति = खेलां करोति स्वच्छन्दमाचरतीति को जानाति न कोऽपीत्यर्थः । [illegible]

गच्छावार्यः । इदमेव गोमतीतीरं प्रतिस्रोतोऽनुसरावो यावदस्याः कुन्दमालायाः प्रभवमासादयाव । ।

रा—सुलभसादृश्यो लोकसंनिवेशः । न चैतावदस्माकं भागधेयम् । इतश्चात्यन्तविप्रकृष्टे देशे परित्यक्तायाः सीताया आगमनं न सम्भाव्यते । तथाप्यादेशय मार्गं येनेदं सलिलान्तरममुञ्चन्तौ वसतिमासादयावः ।

ल—एषा नदीभूमिः कण्टकितशर्करागुक्तिपुटदुःखसञ्चारा, तद्यथा यथा मार्गमादेशयामि तथा तथा शनैरागन्तव्यमार्येण ।

ज्ञातुं सर्वथा दुःशकमिति भावः । गच्छावार्यः, इदमेव = अस्मद्दृष्टिविषयभूतं कुन्दमालासम्बन्धि । गोमतीतीरम् = गोमत्यास्तटम् । प्रतिस्रोतः = नद्या वेगानुकूलम्, अनुसराव = चलावः । यावदस्याः कुन्दमालायाः । प्रभवम् = उद्गमस्थानम्, आसादयाव =प्राप्नुवः । राम सीताया असत्तां मन्वान आह— 'सुलभे'ति । सुलभं=सुप्रापं सुसम्भवं सादृश्यमौपम्यं यस्य स तादृशः । लोकसंनिवेशः = लोकानां जनानां संनिवेशः मालादिरचनाप्रकारः । अर्थात् सीतावदन्येनापि केनचिदेवंविधा कुन्दमाला रचना कृता स्यादिति सम्भाव्यते । "नचैतावदि"ति । अस्माकं भागधेयं तादृशं नास्ति यत्केनापि तथा रचनाविन्यासः कर्तुं न शक्येत सीतयैव च कृतः स्यात्, साचास्मिन्प्रदेशे भवेत्, स्यादेवं च तस्याः समागम इति भावः । एतादृशामसन्धिमानेवाह— "इतश्च" इति । अत्यन्तविप्रकृष्टे = अतिमात्रं दूरवर्तिनि देशे । परित्यक्तायाः = उज्झितायाः सीतायाः आगमनं न सम्भाव्यत इति । विचित्रं दैवयोगं मन्वान आह—" तथापि " इति । आदेशय = ब्रूहि । मार्गम् = वर्त्म । येन = मार्गादेशेन । इदं सलिलान्तरम् = सलिलस्य जलस्य अन्तरमवकाशम्, अमुञ्चन्तौ = अपरिहरन्तौ, वसतिम् = जनवासस्थानमाश्रमपदमित्यर्थः । स्पष्टम् ।

रामादेशमाकर्ण्य लक्ष्मण आह—" एषा " इति । एषा=समीपतरवर्तिनी, नदीभूमिः = नद्या गोमत्या भूमिः, कीदृशी-इत्याह— कण्टकितेति—कण्टकाः सञ्जाता अस्या इति कण्टकिता साचासौ शर्करावालुका, शुक्तीनां मुक्तास्फोटानां शङ्खनकानामिति यावत् पुटाः संश्लिष्टभागाः तैः

रा—एवं क्रियताम् । यद्यपीयमभिमता कुन्दमाला तथापि देवतोपहारशङ्कया नोपभोगमुपनीयते । ( इति विमुञ्चति )

ल—एतां वेत्रलतां विलङ्घ्य पदं मास्मिन् कृथाः शुक्तयो
मूर्धानं व्यवधाय नामय पुरो दूरावनम्रस्तरुः ।

---

( पदक्रमे प्रतिबन्धभूतैः ) दुःखेन=कष्टेन सञ्चारः सञ्चालनं यस्यां सा तादृशी अस्तीतिशेषः । तत् = ततः, यथा यथा = येन येन प्रकारेण, मार्गम्=अध्वानम् आदेशयामि, तथा तथा=तेन तेन प्रकारेण, आर्येण = पूज्येन, शनैः=मन्दम्, आगन्तव्यम् । स्वच्छन्दं पादप्रक्षेपे त्वरा न कार्येति भावः ।

( व्या० ) शुच्यति अभिषवं करोतीति **शुक्तिः** । **क्तिच्क्तौ** च सञ्ज्ञायाम् ( ३ । ३ । ७४ ) इति क्तिच् । पुटति संश्लिष्टो भवतीति **पुटः** । "**इगुपधज्ञाप्रीकिरः कः**" (३।१।१३५) इति सूत्रेण संश्लेषणार्थकात् तौदादिकात् पुटधातोः कः प्रत्ययः ।

( को० ) "मुक्तास्फोटः स्त्रियां शुक्तिः" इति, शुक्तिः शङ्खः खुरः कोलदलं नखम्" इति चामरः । "शुक्तिः शङ्खनके शङ्खे कपालखण्डमुक्तयोः नख्यश्वावर्तयोर्मुक्तास्फोटदुर्नामयोरपि," इति हैमः ।

राम आह—"एवम्" इति ।

**यद्यपीति**। "इयं कुन्दमाला अभिमता" इत्यन्वयः । इष्टत्वाद् ग्रहीतव्येत्यर्थः । ग्रहणे बाधकमाह—"**तथापि**" इति । देवतोपहारशङ्कया= देवतायै य उपहारो बलिः, तच्छङ्कया देवनिर्माल्यहेतुनेत्यर्थः । न = नैव, उपभोगम् = स्वोपभोगं परिधानादिकम्, उपनीयते = प्राप्यते मयेति शेषः । इति = हेतोः, विमुञ्चति = परित्यजति कुन्दमालामित्यर्थः ।

लक्ष्मणः स्वप्रतिज्ञा(सेवा)नुसारं मार्गमादेशयति—"**एतां वेत्रलताम्**" इति । एताम् = पुरश्चक्षुषोर्विषयभूताम्–अग्रे दृश्यमानामित्यर्थः । वेत्रलताम् = वेतसवल्लीम्, विलङ्घ्य = उत्क्रम्य नाहि । शुक्तयः = शङ्खनखाः सन्तीति हेतोः, अस्मिन् = पथि, पदम् = चरणम्, मा कृथाः = मा निधेहि, पुरः = अग्रे, तरुः = वृक्षः, दूरावनम्रः = दूरदेशपर्यन्तमवनत इति हेतोः व्यवधाय = अन्तर्धाय व्यवधिं कृत्वा अर्थात् आत्मनः शाखायाश्च द्वयोर्मध्ये मदवकाशं विधाय, मूर्धानम् =

**चापाग्रेण विकृष्य मुञ्च पुरतः शाखां तिरश्चीमिमा-**
**मुत्त्रस्यन्ति पुरा शरारुदयिता धीरं परिक्रम्यताम्॥८**

शिरः, नामय = अवनतं कुर्वित्यर्थः । इमाम् = सन्निकृष्टवर्तिनीं, तिरश्चीम् = तिर्यग्भूतां वक्रामिति यावत्, शाखाम् = स्रग्धयां तरुविटपं, पुरतः = अग्रतः चापाग्रेण = धनुष्कोट्या, विकृष्य = सम्यगाकृष्य, मुञ्च = परित्यज । शरारुदयिताः = शरारूणां यातुकानां सिंहादीनां दयिताः स्त्रियः सिंह्याद्याः, पुरा उत्त्रस्यन्ति = अत्यन्तं त्रसिष्यन्ति भयं प्राप्स्यन्ति, अतः धीरम् = सधैर्यं मन्दमन्दं यथा तथा, परिक्रम्यताम् = पादक्षेपो विधीयताम् ।

एतेन—पशुस्त्रियोऽपि दयापात्रं किमु मनुष्यस्त्रियः, तत्रापि सीताऽतिशयेन, तत्र कठोरभाव आर्यस्य नैवोचित आसीदिति लक्ष्मणाशयो व्यज्यते ।

( व्या० ) " विलङ्घय " इति । व्युपसर्गाद् गत्यर्थकात् " लघि " धातोः स्वार्थे णिचि लोटि मध्यमपुरुषैकवचने रूपम् । इदित्वाद् नुम् । **"मा कृथा"** इत्यत्र **" न माङ्योगे "** ( ६ । ४ । ७४ ) इत्यनेनाऽडभावे कृधातो-र्लुङ्यात्मनेपदे मध्यमपुरुषैकवचने रूपम् । " व्यवधाय " इति व्यवपूर्वकात् " धा " धातोः **" समासेऽनञ्पूर्वे क्त्वो ल्यप् "** ( ७ । १ । ३७ ) इति ल्यबादेशः । उपसर्गाद्वितो धारणं पोषणञ्च नार्थः, किन्तु अवकाशीकरणम् । **" नामय "** इति । णम् प्रह्वत्वे धातुः । अस्य—**" हेतुमति च "** ( ३ । १ । २६ ) इति प्रेरणार्थे णिच् । लोण्मध्यमपुरुषैकवचने रूपम् । **" मूर्धा** नमतु, त्वं प्रेरय इति त्वं मूर्धानं नामय " इत्यण्यन्तकर्तुर्ण्यन्ता-वस्थायां कर्मत्वापादनप्रकारो ज्ञेयः । अत्राऽविवक्षितकर्मत्वात् कर्तुर्मूर्ध्नो ण्यन्ता-वस्थायां कर्मसञ्ज्ञा । **" पुर "** इत्यग्रार्थेऽव्ययम् । **" विकृष्य "** इति व्युपसर्गात् कृष् धातोः क्त्वो ल्यबादेशे रूपम् । **" तिरश्चीम् "** इति । तिर्यगञ्चतीति " तिर्यञ्च् " इति क्विपि रूपम् । स्त्रियान्तु—**" उगितश्च "** ( ४ । १ । ६ ) इति सूत्रेण ङीप् । उगिदचामिति सूत्रेऽज्ग्रहणेन धातोश्चे-दुगित्कार्यं तर्ह्यञ्चतेरेवेति नियम्यते, तेन उखास्रदित्यादौ न ङीप् । अञ्चतेस्तु स्यादेव । यथा " प्राची " इत्यादौ । एवं प्रकृते—निरनुबन्धस्याग्रहणे **"स्वारविक्-**

रा—(यथोक्रं परिक्रम्य) वत्स! किमेतस्मिन् देशे भगवतो वाल्मीकेः राश्रमसन्निवेशः?

ल—किं दृश्यमार्येण?

रा—असौ तनुत्वादवधानदृश्या
दिशः समाक्रामति धूमलेखा।

---

दश्च्"—(६।२।६६) इत्यादिना किन्, "अनिदिताम्"—(६।४।२४) इति न लोपः। उगित्वादुक्तसूत्रेण ङीप्। "अचः" (६।४।१३८) इत्यकारलोपे "तिरसस्तिर्यलोपे" (६।३।९४) इति सूत्रेण तिर्यादेशस्तु न, अलोपे सत्येव तद्विधानात्। किन्तु—"तिरस् च् (ङी) ई" इत्यवस्थायां सस्य "स्तोः श्चुना श्चुः" (८।४।४०) इति श्चुत्वेन शः। "अज्झीनं परेण संयोज्यम्" इति नियमेन "तिरश्ची" इति सिद्धौ, प्रातिपदिकसञ्ज्ञायां द्वितीयैकवचने अमि "तिरश्चीम्" इति। नदीवदस्य प्रक्रिया। "पुरा वक्ष्यन्ति" इत्यत्र भविष्यतीत्यनुवर्तमाने "यावत्पुरानिपातयोर्लट्" (३।३।४) इति सूत्रेण भविष्यति लट्। "परिक्रम्यताम्" इति परिपूर्वस्य "क्रम" धातोः भावे तङ्। "भावकर्मणोः" (१।३।१३) इत्यात्मनेपदम्। लोटि रूपम्।

(को०)"उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्" "वृक्षो महीरुहः शाखी विटपी पादपस्तरुः" "समे शाखालते" "धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्। इष्वासोऽपि" "शरार्कघातकौशिकः" इति सर्वत्रामरः ॥८॥

"यथोक्रम्" इति। लक्ष्मणोक्तस्यानुसारमित्यर्थः। उक्तमनतिक्रम्य वर्तते इति यथोक्तम्। "अव्ययं विभक्ति समीप"—(२।१।६) इति समासः। परिक्रम्य=पादक्षेपं कृत्वा। पृच्छति—"वत्से"ति। आश्रमसन्निवेशः=आश्रमावस्थानम्। लक्ष्मणः पृच्छति—"किं दृष्टम्" इति। रामो लक्ष्मणस्य प्रश्नमुत्तरयन् दृष्टिं समर्थयते—"असौ" इति। "तनुत्वात् अवधानदृश्या असौ धूमलेखा दिशः समाक्रामति" इति पूर्वार्द्धेऽन्वयः। तनुत्वात्=सूक्ष्मत्वात्, अवधानदृश्या=अवधानेन विशेषाभिप्रेण दृश्या द्रष्टुमर्हा, असौ धूमलेखा=धूमस्य होमधूमस्य लेखा रेखा धूमपङ्क्तिः, दिशः=दिगन्तम् इत्यर्थः। अन्तरिक्षवचनम्। समाक्रामति=उद्गता भवति।

आकृष्यमाणो मृदुनानिलेन
श्रोत्रेषु संमूर्च्छति सामनादः ॥६॥

ल—सम्यगुपलक्षितमार्येण । अहमप्यग्रतो गत्वा निरूपयामि । ( परिक्रामंस्तरुस्तम्भमभिनीय ) कथमेतस्मिन् पदोद्धारे ससाध्वसमिव मे हृदयम्, स्तम्भितावूरू, उत्क्षिप्यमाणौ चरणौ नाग्रतो भूमिं गन्तुमुत्सहेते ।

---

किञ्च—मृदुना=कोमलेन पवनेन, आकृष्यमाणः=आनीयमानः, सामनादः=सामवेदध्वनिः, श्रोत्रेषु=कर्णेषु संमूर्च्छति=समुच्छ्रितो भवति, श्रोत्रं प्राप्य वर्द्धत इत्यर्थः ॥ "दृश्या" इति पदं "ऋदुपधाच्चाक्लृपिचृतेः" (३।१।११०) इति सूत्रेण क्यपि साधु । स्त्रियां टाप् । "समाक्रामति" इत्यत्र "आङ उद्गमने" (१ ३।४०) इति त्वात्मनेपदप्राप्तिः । तत्रैव "ज्योतिरुद्गमन इति वाच्यम्" इतिवार्त्तिकद्वारा निषेधात् । धूमस्तु न ज्योतिः ।

(को०) "स्तोकाल्पक्षुल्लकाः श्लक्ष्णं सूक्ष्मं दभ्रं कृशं तनु" "लेखास्तु राजयः" "कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः" इति सर्वत्रामरः । "मूर्च्छितं स्याच्छ्रये मूढ" इति हेमः । स्वभावोक्तिः । इन्द्रवज्रोपेन्द्रवज्रयोरुप-जातिः ॥६॥

लक्ष्मणो रामोक्तिं मानयति— "सम्यग्" इति । समीचीनम् । उपलक्षितम्=धूमलेखादिकादाचित्कलिङ्गेन ज्ञातम् ।

उपलक्षणं हि "कादाचित्कत्वे सतीतरव्यावर्त्तकं" भवति । तथैवात्र धूमलेखादिकं वाल्मीकेराश्रमपदमितरेभ्यो व्यावर्त्तयति ।

"अहमपी" ति । अहं नाम लक्ष्मणोऽपि अग्रतो गत्वा=पुरोभूत्वा, निरूपयामि=अवधारयामि वाल्मीकेराश्रमसन्निवेशमित्यर्थः । परिक्रामन्=परिभ्रमन्, तरुस्तम्भम्=तरोर्वृक्षस्य स्तम्भमवष्टम्भम् । साशङ्कमाह— "कथ" मिति । कुत इत्यर्थः । एतस्मिन् पदोद्धारे=पदयोरुद्धारे पादप्रक्षेपे ससाध्वसम्=सभयं सत्रासमिवेति यावत्, मे=मम हृदयम् । जातमिति शेषः । स्तम्भितौ=जडीभूतौ निरुद्धगतीत्यर्थः । "स्तम्भो स्थूणाजडीभावौ" इत्यमरः । ऊरू = सक्थिनी । "सक्थि क्लीबे पुमानूरुः" इत्यमरः । उत्क्षिप्यमाणौ=उत्थाप्यमानौ, चरणौ=पादौ, अग्रतः=पुरतः, भूमिम्=धरणिम्, गन्तुम्=

तत्किमिदम्। ( विचिन्त्य ) सुव्यक्तं गुरुजनसमाक्रान्तेन प्रदेशेन भवितव्यम्। अथ पदानीव लक्ष्यन्ते। ( भूमिं निर्वर्णयति )

रा—किं कृतोऽयं वत्सस्य भूमिनिरूपणायामादरः ?

ल—एतानि नितान्तमनोहरतया सङ्क्रान्तचरणतलसौकुमार्याणि ललितनिभृतविन्यासतया विज्ञायमानस्त्रीपदभावानि पुलिनतलसान्निवेशपदानि दृश्यन्ते। पश्यत्वार्यः—

---

चलितुम्, न उत्सहेते=शक्तौ न भवत इति साम्वयोऽर्थः। तत् किमिदम्=अत्रार्थे किं कारणमिति फलितार्थः। विचिन्त्य=विचार्य। "सुव्यक्तम्" इति। सुस्पष्टमिदं निश्चितं नात्र सन्देहलेशोऽपीति भावः। गुरुजनसमाक्रान्तेन=गुरुजनो मदीयः पूजनीयो जनोऽर्थात् सीतारूप एव तेन समाक्रान्तेन=अधिष्ठितेन, प्रदेशेन=अनेन स्थलेन भवितव्यम्=भाव्यम्। कथमन्यथा ममाकाण्डत एव हृदयन्मादादिकं सम्भवेदिति भावः।

"अथ" इति। किन्तु—पदानि इव पादचिन्हानीव लक्ष्यन्ते=प्रतीयन्ते। तदवस्थं लक्ष्मणं दृष्ट्वा रामः पृच्छति—"किङ्कृत" इति। किन्निमित्त इत्यर्थः। भूमिनिरूपणायाम्=पृथिवीनिरीक्षणायाम्, आदरः=श्रद्धातिरेकः। लक्ष्मण आह—"एतानि" इति। "एतानि पुलिनतलसंनिवेशपदानि दृश्यन्ते" इति क्रियाकारकसम्बन्धः। एतानि=अग्रे दृश्यमानानि। नितान्तमनोहरतया=अत्यन्तं हृदयहारितया सौन्दर्येणेत्यर्थः। सङ्क्रान्तेति—सङ्क्रान्तम्=सम्यक् क्रान्तं गतं चरणतलयोः पादाधोभागयोः सौकुमार्यम्=कोमलता यत्र तानि। तथा—ललितं मनोहरं निभृतं सभरं मन्थरमिति वा यथा तथा यो विन्यासः अर्थात् पादयोरेव क्षेपः, तस्य भावस्तत्ता तया, मन्थरमनोहरपादस्थापनेनेत्यर्थः। विज्ञायमानः=विशेषेण ज्ञायमानः प्रतीयमानः स्त्रीपदानां भावोऽवस्थाविशेषो येषु तानि, पुलिनतले=सैकते तटे सन्निवेशोऽवस्थानं येषां तानि च तानि पदानि अर्थात् पादलक्ष्माणि, दृश्यन्ते=अवलोक्यन्ते। पश्यत्वार्यः=श्रीमानप्यवलोकयत्वित्यर्थः।

विलासयोगेन परिश्रमेण वा
स्वभावतो वा निभृतानि मन्थरम्।
पदानि कस्याश्चिदिमानि सैकते
प्रयान्ति तुल्यं कलहंसविभ्रमैः॥ १०॥

रा—( निर्वर्ण्य सहर्षम् ) वत्स! किमुच्यते कस्याश्चिदिति। ननु वक्तव्यम्—सीतायाः पदानि—इति। पश्य—

---

"विलासयोगेन" इति। विलासः स्त्रीणामलङ्कारविशेषः।
उक्तश्च दर्पणे—

यानस्थानासनादीनां मुखनेत्रादिकर्मणाम्।
विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना॥ इति।

एवमुक्तलक्षणस्य विलासस्य योगेन सम्बन्धेन वा = अथवा, परिश्रमेण= परितः श्रमः परिश्रमः क्लमः प्रयास इति यावत् तेन हेतुना, वा = यद्वा स्वभावतः = प्रकृत्यैव, मन्थरम् = शनैः शनैर्यथा तथा निभृतानि=नितरां भृतानि धृतानि स्थापितानि, कस्याश्चित् = दृष्टपूर्वाया अदृष्टपूर्वाया वा रमण्याः, इमानि = पुरतो दृश्यमानानि, सैकते = सिकतामये प्रदेशे, पदानि=पादन्यासाः कलहंसविभ्रमैः = कलहंसानां कादम्बानां विभ्रमैर्विलासैः, तुल्यम् = समं प्रयान्ति = गच्छन्ति। यथा हंसाः सविलासं पादन्यासं कुर्वन्तो यान्ति तथैव काचिद्रमणी पदं निक्षिपन्ती गतेति निर्गलितोऽर्थः। हंसीव सा रमणी, तत्पदानीवेमानि पदानीति भावः। आर्थी चेयमुपमा। वंशस्थवृत्तम्। "जतौ तु वंशस्थमुदीरितं जरौ इति तल्लक्षणात्॥ १०॥

सहर्षम् = सप्रमोदम्। रामः सीताया एवैतानि पदानीति निश्चितः सन् लक्ष्मणम्प्रत्याह—वत्सेति। वत्स! किमुच्यते कस्याश्चिदिति। ननु = निश्चयेन वक्तव्यम् = कथनीयम्भवतेति शेषः, सीतायाः पदानीति। स्वोक्तेऽर्थे युक्तिं प्रकटयन्नाह—"पश्य" इति।

**समानं संस्थानं निभृतललिता सैव रचना**
**तदेवैतद्रेखाकमलरचितं चारु तिलकम् ।**
**यथा चेयं दृष्टा हरति हृदयं शोकविधुरं**
**तथाह्यस्मिन्देव्या सपदि पदपङ्क्तिर्विनिहिता ॥ ११ ॥**

---

"**समानम्**" इति । संस्थानम् = पदयोरवस्थितिः समानम् = तुल्यम् अर्थात् सीतायाः पदयोर्यावदन्तरं तावदेव तच्चिन्हयोरपि धृतमिति तत्पादचिन्हे प्रथमा युक्तिः । द्वितीयां युक्तिमाह—**निभृतेति** । निभृता = नितरां भृता, ललिता मनोहरा । निभृता चासौ ललितेति निभृतललिता = परिपूर्णलालित्योपेता, सैव = पूर्वं दृष्टेव, सीतापादयोः रचना = आकृतिविशेषः । तृतीयां युक्तिमाह—**तदेवैतदिति** । एतत् = पुरोवर्त्ति, रेखाकमलरचितम् = रेखाकमलं कमलाकारा या रेखा तद्रचितम् = तन्निर्मितम्, चारु = रम्यम्, तिलकम् = विशेषकम्, तदेव = सीतातिलकवदेवेत्यर्थः । यथा—सीतापादे तिलकाङ्कना तथैवात्रापीति तस्या एवामूनि पदानीति भावः ।

इयं पदपङ्क्तिः = पदयोश्चरणयोः पङ्क्तिः राजिः, यथा = येन प्रकारेण दृष्टा = आलोकिता सती, शोकविधुरम् = शोकेन शुचा विधुरं विह्वलीभूतमपि हृदयम् = मनः, हरति = आकर्षयति दर्शनमात्रेणैव शोकाकुलीभूतेऽपि हृदये प्रीतिं जनयति, तथा = तेन प्रकारेण, हि = निश्चितोऽयमर्थः, अस्मिन् प्रदेशे, देव्याः = महिष्याः सीतायाः, पदपङ्क्तिः=चरणराजिः, सपदि = शीघ्रमधुनैवेत्यर्थः । विनिहिता = स्थापिता, अर्थात् सम्प्रत्येवाऽमुष्मात् प्रदेशाद् देवी गतेति निश्चितं भाति, चिराय गमने सति मनुष्यान्तरसञ्चारेण वायोर्वा सञ्चलनविशेषेण पदपङ्क्तेस्तादृशसौष्ठवाभावादिति भावः ।

" **तिलको** द्रुमरोगाश्वभेदेषु तिलकालके । क्लीबं सौवर्चलक्लोम्नोर्नेत्रियान्तु विशेषके " इति मेदिनी । " वैकल्येऽपि च विश्लेषे **विधुरं** विकले त्रिषु " इति त्रिकाण्डशेषः ।

**अनुप्रासोऽलङ्कारः** । अत्र—समानसंस्थानादीनां हेतूनां देव्याः पदपङ्क्तिरूपहेतुमता सार्धं वर्णनाद्धेत्वलङ्कारोऽपि । शिखरिणी वृत्तम् लक्षणमुक्तं प्राक् ॥११॥

ल—( सहर्षम् ) यावदेतामेव पदपङ्क्तिमनुसरन्तौ वाल्मीकेराश्रमपदमनुसरावः। यथा चेयं प्रत्यग्रनिहिता पदपङ्क्तिस्तथा जानामि प्रत्यासन्नवर्तिन्या देव्या भवितव्यमिति।

( ततः प्रविशति सीता )

**सी—१ णिव्वत्तिदं सवणं, उवासिदा संझा, हुदो हुदवहो, ओगाहिदा भअवई भाईरही, भअवई भाईरहीं उद्दिसिअ सहपदिण्णा सहत्थ-**

---

१ निर्वर्तितं सवनम्, उपासिता सन्ध्या, हुतो हुतवहः, अवगाहिता भगवती भागीरथी, भगवती भागीरथीमुद्दिश्य......स्वहस्तग्रथिता कुन्दमाला

---

सहर्षम्=हर्षेण सह यथा स्यात्तथा आहेति शेषः। **यावदिति**—यावदित्यव्ययमवधारणार्थकम्। "**यावत्तावच्च** साकल्येऽवधौ मानेऽवधारणे" इत्यमरः। "**यावत्** कार्त्स्न्येऽवधारणे। प्रशंसायां परिच्छेदे मानाधिकारसम्भ्रमे। पक्षान्तरे च" इति मेदिनी। निश्चयेन एतामेव = पुरोदृश्यमानामेव पदपङ्क्तिम्=चरणराजिम्, अनुसरन्तौ=अनुगच्छन्तौ। वाल्मीके=तदाख्यस्य महामुनेरादिमहाकवेः, आश्रमपदम्=आश्रमस्थानम्। अनुसरावः = अनुयावः। "**यथा चेयम्**" इति। प्रत्यग्रनिहिता=सद्योभूता अभिनवेति यावत्। "**प्रत्यग्रो**ऽभिनवो नव्यो नवीनो नूतनो नवः" इत्यमरः। जानामि=निश्चिनोमि। प्रत्यासन्नवर्तिन्या = अतिसमीपस्थितया। तात्कालिकपदपङ्क्तिचिन्हेन तस्याः समीपवर्त्तित्वे नास्ति सन्देह इति भावः।

सीताप्रसङ्गं पातयित्वा तस्याः प्रवेशमाह—"**ततः प्रविशति**" इति। निर्वर्त्तितम्=अनुष्ठितं समापितमिति यावत्। उपासिता सन्ध्या=सन्ध्योपासनमपि कृतामित्यर्थः। हुतः=दत्ताहुतिः। हुतवहः=अग्निः। अग्निहोत्रमपि कृतमित्यर्थः। अवगाहिता=विलोडिता मज्जनेनेत्यर्थः। भगवती भागीरथी=सुरसरित्। उद्दिश्य=भागीरथीकृते इत्यर्थः। **स्वहस्तग्रथिता**=स्वहस्ताभ्यां प्रोता, कुन्दमाला

गदा कुन्दमाला समप्पिदा। दाणिं अहं उण्णदगंभीरसीदलं लदाजालं पविसिअ अदिहिजणोपत्थाणजोग्गाइं कुसुमाइं ओचिणोमि। ( प्रविश्य केनापचयं नाटयति )

समर्पिता। इदानीमहमुन्नतगम्भीरशीतलं लताजालं प्रविश्य अतिथिजनोपस्थानयोग्यानि कुसुमान्यवचिनोमि।

समर्पिता=उपहारीकृता। इदानीम्=अधुना। "**उन्नते**"ति। उन्नतञ्च तद् गम्भीरं शीतलं शिशिरं लताजालम्=वल्लीप्रतानं पुष्पलताभिर्जटिलं वनप्रदेशमित्यर्थः। "**अतिथी**"ति—अतिथिजनानां प्राघुणिकानामुपस्थानयोग्यानि सत्काराहाणि, कुसुमानि=पुष्पाणि, अवचिनोमि=सङ्ग्रहीकरोमि। नाटकादिष्वेतादृशवर्णनेन प्रतीयते यत्पुरा द्विजातीनां स्त्रियोऽपि सन्ध्यादिकर्मारण्यकार्युः शिवशिवादिदेवार्चार्थमपि पुष्पा। अत एव महाकविकालिदासस्य—"अयाचितबलिपुष्पा वेदिसम्मार्गदक्षा नियमविधिजलानां बर्हिषाञ्चोपनेत्री" इत्यादि वर्णनं सङ्गतमेव।

**अयमपि** महाकविर्महाश्वेतादीनामघमर्षणजपादिकं वाण इव सीतायाः सन्ध्योपासनमग्निहोत्रञ्च स्पष्टमाख्याति। नैवंविधे विषये कवेः प्रमादः, कपोलकल्पना, प्रौढोक्तिर्वा मन्तव्या। उपबृंहयन्तोऽपि साहित्यरीत्यार्थजातं महाकवयः सर्वत्र नाऽत्यायतवचना भवन्ति। एवंविधवृत्तदर्शनेनान्यप्रामाणिकग्रन्थपाठकरणेन च स्पष्टमेव प्रतीयते यद् द्विजातीनां स्त्रियोऽपि वेदादिशास्त्राण्यपाठिषुः, उपनयनमपि चाऽभूयत। परम्पुराणान्तर्वर्तिव्याख्यानेषु स्मृतिग्रन्थेषु च याद्रुल्यनाऽयमर्थो दृष्टिगोचरो न भवति। सर्वथा निर्मूलतामपि च नात्र प्रतीमः। उपक्रान्तश्चायमर्थो दाधिमथैः। अध्येतृणां प्रज्ञाकौशलाय तेषामेव कृतिं सदुद्देशेणात्रोद्दरामः। तथाहि—

"वैवाहिको विधिः स्त्रीणामौपनायनिकः परः" इत्युक्तेर्विवाह एवोपनयनस्थानीयः। अतस्तद्दिन एव "पतिरेव गुरुः स्त्रीणाम्" "पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया" इति वचनात्। "अहतेन वसनेन पतिः परिदध्यात् या अकृन्तन्नतयन्, परिधत्त धत्त वाससेति च प्राकृतां यशोरवीमिनीमभ्युदानयन् जपेत्, "सोमो ददद्गन्धर्वाय" इति गोभिलसूत्रतो यज्ञोपवीतधारणं

ल—एषा पदपङ्क्तिः क्रमेण मार्गवशात् पुलिनतलं परित्यज्य स्थल-

---

वसिष्ठस्मृतावेकविंशेऽध्याये तत्तत्प्रायश्चित्तार्थं स्त्रीणामपि गायत्रीजपहोम-विधानस्याऽन्यथाऽनुपपत्त्या गायत्र्यङ्गीकारं पतिरेव कारयेत्।" पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते। अध्यापनञ्च वेदानां सावित्र्या वचनं तथा" इति कथनेनापि णिजर्थभूतप्रयोजकत्वस्यास्मिन् कल्पे निषेधेऽपि धात्वर्थ-व्यापाराश्रयत्वरूपप्रयोज्यत्वस्याऽनिषेधात्। ततश्च यथाऽवकाशं पतिरेव स्वशाखावेदं पाठयेत्। अतएव—"जातेरस्त्रीविषयात्"—(४।१।६३) इतिसूत्रभाष्ये जातिलक्षणकथनावसरे कथितस्य "अपत्यप्रत्ययान्तः शाखाध्ये-तृवाची च जातिवाचकः" इत्यर्थकस्य "गोत्रञ्च चरणैः सह" इति वार्त्तिकस्य "कठी बह्वृची अध्वर्युः" इत्युदाहरणानि वेदाध्ययनमन्तराऽनुपपन्नानि सङ्ग-च्छन्ते। अतएव तत्तद्यागेष्वपि यजमानपत्न्यास्तत्तन्मन्त्रपाठः। याज्ञे कर्मण्य-पशब्दभाषणस्य निषिद्धत्वेन संस्कृतेनैव यज्ञगतैर्वक्तव्यतया तत्तदुक्तेतिकर्त्तव्य-ताज्ञानस्य व्याकरणाध्ययनमन्तराऽनुपपन्नत्वेन व्याकरणमप्यध्यापयेत्।

"नामधेयस्य ये केचिदभिवादं न जानते।
तान्प्राज्ञोऽहमिति ब्रूयात् स्त्रियः सर्वास्तथैव च॥

इति मनूक्तौ संस्कृताऽज्ञातृत्वेनैव सिद्धौ "स्त्रियः सर्वाः" इति विध्यन्तर-स्याऽनुपपत्त्या संस्कृतज्ञा अप्याचार्यपत्नीरपि तथैव ब्रूयादितिमेधातिथिकारव्या-नमेव परम्" इति। मह्यमप्ययं पक्षो रोचते। विशिष्टतरं विचारं ग्रन्थान्तरे करिष्यामि।

पदपङ्क्त्यनुरोधेन वाल्मीकेश्चरणपदमनुसरन् लक्ष्मणोऽग्रे प्रनष्टा तामनु-सन्धाय किञ्चिद्विश्रम्य गमनाय राममाह—"एषा" इति। क्रमेण=क्रमशः। मार्गवशात्=मार्गानुरोधात्। पुलिनतलम्=सैकततटप्रदेशम्, परित्यज्य= विहाय। स्थलीम्=शुष्कमध्यालं यत्र जलप्रसरो न वर्त्तेत इत्यर्थः। आरूढा=प्राप्ता। प्रनष्टा=अदर्शनं गता। स्थले पदपङ्क्तिर्द्रुतं नश्य-तीति स्वभावः। "प्रणष्टा" इत्यपपाठः "नशेः षान्तस्य" (८।४।३६) इत्य-

मारूढा, प्रनष्टा च । तदिदमेव पुरस्तात्सन्दृश्यमानलतागुल्मप्रच्छायमति-रमणीयमध्यास्य गतश्रमौ भगवन्तं प्राचेतसमुपसर्पावः ।

रा—यदभिरुचितं भवते । ( परिक्रम्योपविशतः )

रा—( निःश्वस्य सबाष्पम् ) वत्स ! वत्स—

सी०—( कर्णं दत्वा ) (१) को णु खु एसो सजलजलहरत्थणिदगम्भीरेण सरविसेसेण अचन्तदुःखभाअणं वि मे सरीरं रोमांचेदि । णिरूवेमि दाव को एसोत्ति; अहवा ण जुत्तं मम अजाणिअ परमत्थं

(१) को नु खल्वेष सजलजलधरस्तनितगम्भीरेण स्वरविशेषेणात्यन्तदुःख-भाजनमपि मे शरीरं रोमाञ्चयति । निरूपयामि तावत् क एष इति । अथवा

नेन णत्वनिषेधात् । मूल एव "प्रनष्टा" इत्युदाहृतत्वादित्यर्थः । तदिदमेव = स्थानमित्यर्थः । कीदृशं तदित्याह—" पुरस्तादि " ति । सन्दृश्यमाना दृष्टिमवतरन्तो ये लतागुल्माः लतानां वल्लीनां गुल्माः स्तम्बाः तेषां प्रकृष्टा छाया यत्र तत् । "गुल्मः स्तम्बे स्त्रीन्हि घट्टसैन्ययोः । सैन्यरक्षण" इति विश्वः । "गुल्मा रुक्स्तम्बसेनाश्च" इत्यमरः । अतएव—अतिरमणीयम् = अतिमनोहरम् । अध्यास्य = आधिष्ठाय । गताश्रमौ = गतो दूरीभूतः श्रमः क्लमो ययोस्तौ । प्राचेतसम् = प्रचेतसोऽपत्यं वल्मीकिमुनिम् । अपत्येऽण् । उपसर्पावः = प्राप्नुवः । अभिरुचितम् = वाञ्छितम् । " परिक्रम्ये " ति । परिक्रमणाद्यभिनयं दर्शयत इत्यर्थः । रामः—निःश्वस्य = उच्छ्वासं गृहीत्वा । सबाष्पम् = सास्रम् । "वत्स ! वत्स !" इति सीताविरहदुःखेन व्याकुल-त्वात्सम्भ्रान्तस्य द्विरुक्तिः ।

"को नु खल्वेष" इति । निश्चयेन कोऽयमिति । सजलेति । जलेन सह वर्तमानः सजलः स चाऽसौ जलधरो मेघः तस्य स्तनितं गर्जनं तद्वद्गम्भीरेण स्वरविशेषेण = वार्त्तालापरूपेण ध्वनिना । अत्यन्तदुःखभाजनम्= अतिमात्रक्लेशपात्रम् , मे=मम । शरीरम्=देहम् । रोमाञ्चयति=उद्गतलोम करोतीत्यर्थः। "तत्करोती" (          ) त्यर्थे रोमाञ्चशब्दात् णिच् । "निरूपयामी"ति । निर्णयं करोमि । स्वकीयां कुलीनतां पतिव्रताया आचारञ्च स्मृत्वा आह—अथवेति । परमार्थम[illegible]वे दृष्टिं विसर्जयितुं मम न युक्तम्

अत्थाणे दिट्ठिं विसज्जइदुं । किं एत्थ जाणिदव्वं, णावणाहयदि मे सरीरं परपुरुसद्दो रोमंच्चग्गहणेण; सुव्वत्तं सो एत्थ णिरणुकोसो संपत्तो । ता णिव्वण्णइस्सं । अहवा तह परंमुहे जणे एव्वं अहिमुही होमित्ति जं सच्चं

न युक्तं मम ज्ञात्वा परमार्थमस्थाने दृष्टिं विसर्जयितुम् । किमत्र ज्ञातव्यम् ? नावनाहयति मे शरीरं परपुरुषशब्दो रोमाञ्चग्रहणेन । सुव्यक्तं सोऽत्र निरनुक्रोशः सम्प्राप्तः । तन्निर्वर्णयामि । अथवा तथा पराङ्मुखे जने एवमभि-

इत्यर्थः । परमार्थम् = वस्तुतत्त्वम् । अस्थाने = अपात्रे । विसर्जयितुम् = प्रेषयितुम् । यं पश्यामि तत्र दर्शने ममाधिकारोऽस्ति नवेत्यन्यतरपक्षनिश्चयं विना सत्या ममायं दृष्टिपातो न युक्त इति भावः । स्वान्तःकरणस्य प्रामाण्यं मत्वाऽऽह—"किमत्र ज्ञातव्यम्" इति । तत्रोपपत्तिमाह—नावनाहयति इति । परपुरुषशब्दः = अन्यमनुष्यस्य वार्तालापः, रोमाञ्चग्रहणेन = रोमोद्गमेन मे = मम शरीरं, न = नैव अवनाहयति = बन्धयतीत्यन्वितोऽर्थः । अवनाहो बन्धः । तत्करोतीत्यर्थे णिच् । सतीत्वस्य पराकाष्ठेयं यन्नाम स्वकान्तस्यैव ध्वनिश्रवणे रमण्या रोमोद्गमः । अन्तःकरणस्यापि प्रमाणत्वञ्च तत्र तत्रोपनिबद्धं गतीपिभिः ( महाकविभिः ) । तथाहि—महाभारतस्यादिपर्वणि १६६ अध्याये युधिष्ठिरोक्तिः—

> न मे वागनृतं प्राह नाऽधर्मे धीयते मतिः ।
> वर्त्तते हि मनो मेऽत्र नैषोऽधर्मः कथञ्चन ॥

एवमेव व्यासादिक्षुण्णं मार्गमनुसरन् कालिदासोऽपि—"सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" इति शाकुन्तले दुष्यन्तोक्तावुपनिबबन्ध ।

प्रेमकलुषिताऽऽह—"सुव्यक्तम्" इत्यादि । निरनुक्रोशः = निर्दयः कठोरहृदय इति यावत् । सः = मयाऽनुभूतः प्राणनाथः । अत्र = अरण्ये सम्प्राप्तः । निर्वर्णयामि = निरूपयामि । मानिनीभावं रचयन्ती पक्षान्तरमाश्रयते—"अथवा" इति । तथा = मम कठोरगर्भात्वमनपेक्ष्यापि वनवास-

अत्तणोवि अहं लज्जिदम्हि । ता ण पेक्खिस्सं । ( पराङ्मुखी भूत्वा ) कहं ण प्पहवामि अत्ताणअस्स, आवज्जिअदि मे बलक्कारेण तहिं एव्व दिट्ठी । किं अवरं करेमि अत्ताणअस्स राअपराहीणदाए णिओओ ( निर्वर्णयति ) अहो दिट्ठोत्ति परिदोसो, चिरप्पवासोत्ति मण्णू, परिक्खामोत्ति उव्वेओ, णिरणुकोसोत्ति अहिमाणो, चिरपरिचिदोत्ति अणुराओ, दस्सणीओत्ति

मुखीभवामीति यत्सत्यमात्मनोऽपि अहं लज्जितास्मि । तन्न प्रेक्षिष्ये । ( पराङ्मुखी भूत्वा ) कथं न प्रभवाम्यात्मनः, आवर्ज्यते मे बलात्कारेण तत्रैव दृष्टिः । किमपरं करोमि आत्मनो राजपराधीनताया नियोगः । (निर्वर्ण्यति) अहो दृष्ट इति परितोषः, चिरप्रवास इति मन्युः, परिक्षाम इत्युद्वेगः, निरनुक्रोश इत्यभिमानः, चिरपरिचित इत्यनुरागः, दर्शनीय इत्युत्कण्ठा,

कारिणी । पराङ्मुखे = मामुपेक्षमाणे । एवमाभिमुखीभवामि = आत्मानं दर्शयितुमुत्सहे इति यत्, तत्सत्यमात्मनोऽप्यहं लज्जितास्मि = स्वमनसोऽपि व्रीडां वहे इत्यर्थः । अत्यन्तं लज्जास्पदं ममैतत्कर्मेति भावः । सिद्धान्तं कृत्वाऽऽह—"**तन्न** प्रेक्षिष्ये" इति । नैव द्रक्ष्यामीत्यर्थः ।

भावोद्रेकेण बलाद्भर्तुर्दर्शनार्थमाक्षिप्यमाणाऽऽह—"**कथं न प्रभवामि**" इति । "मे = मम बलात्कारेण, तत्रैव = वल्लभ एव, दृष्टिः = नेत्रम्, आवर्ज्यते = आकृष्यत" इति सान्वयोऽर्थः । "**किमपरम्**" इति ।

आत्मनः = मम । राजपराधीनतायाः = राजपरतन्त्रतायाः राज्ञो (रामस्य) नाज्ञा यदहं सम्मुखी भवेयमिति ।

" निर्वर्ण्यति "—व्याख्यातप्रायमिदम् " राम "मिति शेषः । "**अहो**" इति हर्षेऽव्ययम् । दृष्टः = आलोकित इति हेतोः परितोषः = हृदयस्य प्रसन्नता । चिरप्रवासः = चिराय विरह इति मन्युः = कोपो दैन्यं वा । अथवा—चिरं प्रवासो मद्विरहो यस्य सोऽयमिति हेतोर्मन्युः—दैन्यम् । परिक्षामः = पारितः क्षामः परिक्षामः अत्यन्तं कृशः ( क्षायो मः ( ८ । २। ५३ ) इति सूत्रेण निष्ठातस्य मादेशः । क्षैपीदिति " क्षामः " । ) इति उद्वेगः = विह्वलता मदीयविरहेणैवास्येयं दशा सम्पन्नेति व्याकुलतेत्यर्थः । निरनुक्रोशः = निर्दय इति अभिमानः = गर्वः निरपराधां मां प्रवासयन्स्व-

उक्कण्ठा, सामित्ति बहुमाणो, कुसलवाणं तादोत्ति कुडुंबिणीसब्भावो, अवराहं पविसिदह्मित्ति लज्जा; ण आणामि अज्जउत्तदंसणेण कीदिसं अवत्थं अणुभवामित्ति ।

लक्ष्मणः—किमर्थमार्यो मामकस्मादेवामन्त्र्य बाष्पायमाणनयनस्तूष्णी-मधोमुखः संवृत्तः ।

---

स्वामीति बहुमानः, कुशलवयोस्तात इति कुटुम्बिनीसद्भावः, अपराधं प्रवेशि-तास्मीति लज्जा; न जानामि आर्यपुत्रदर्शनेन कीदृशीमवस्थामनुभवामीति ।

---

कृतस्य स्वयमेव फलं भुनक्तु इत्यहङ्कारः, स्वामी = अयं मम भर्ता इति अभिमानः बहुमानः चित्तसमुन्नतिरित्यर्थः । एकस्त्रीव्रतस्य रघुकुलपुङ्गवस्य मर्यादापुरुषोत्तमस्याहं पत्नीति ममाभिमान—( गौरव ) स्थानम् । चिरपरिचितः = चिराय परिचितः सहोषित इति हेतोः अनुरागः = प्रीतिः । दर्शनीयः = हृदयङ्गमः प्रियदर्शन इति यावत् इति उत्कण्ठा = रहहहिका उत्कलिका ।

कुशलवयोः तातः = पिता इति कुटुम्बिनीसद्भावः = कुटुम्बिन्याः पतिपुत्रवत्या गृहिण्या सद्भावः एवमस्मि कुटुम्बिनी संवृत्तेति हृदयभाव-विशेषः । अपराधम् = रावणगृहवासरूपं प्रवेशितास्मि = प्रापितास्मीति लज्जा = व्रीडा ( इत्यादिकं सर्वं ) न जानामि = ज्ञातुं नैव प्रभवामीति आर्यपुत्रदर्शनेन कीदृशीमवस्थामनुभवामि " = कामप्यवस्थां निर्णेतुं न शक्नोमीति भावः ।

अत्र गद्ये सर्वत्र उक्तविषय आक्षेपालङ्कारो भाति । यथा—हर्षचरिते " अनुरूपो देव्या इत्यात्मसम्भावना " इत्यादौ, तथा—" यामीति न स्नेह-सदृशम् " इत्यादौ च ।

लक्ष्मणो रामं पृच्छति—**किमर्थम्** इति । अकस्मात् = अकाण्डत एव । आमन्त्र्य = आम्रेड्य । बाष्पायमाणे = उद्वान्तास्रे नयने = नेत्रे यस्य सः तथाविधः । "बाष्पोष्मभ्यामुद्वमने" (३।१।१६) इति सूत्रेण बाष्पमुद्वमत इति "बाष्पायते" । बाष्पायते इति "बाष्पायमाणः" । तूष्णीम् = समौनम् । अधोमुखः = निम्नीकृतास्यः, संवृत्तः = सञ्जातः । रामः स्ववैक्लव्यं प्रकटी-

**रा**—निःसम्पातविविक्तमिदमरण्यं तटरुहतरुच्छायासमाकीर्णरमणीयसैकतां प्रसन्नसलिलवाहिनीं समुद्रगामिनीञ्चावलोकयन् संस्मृत्य दण्डकवनवासमेवं वैक्लव्यमनुप्राप्तोऽस्मि ।

**सी**—(१) अय्यउत्त सुमरसि वणवासं, ण उण वणवासियं जणं ।

**ल**—किं तत्र दुःखैकवासे स्मर्तव्यमिति ।

**रा**—वत्स ! लक्ष्मण ! किमेवं ब्रवीषि—दुःखैकवासे वनवासे स्मर्तव्यमिति । पश्य पश्य—

(१) आर्यपुत्र ! स्मरसि वनवासं, न पुनर्वनवासिनं जनम् ।

करोति—निःसम्पातेति । निःसम्पातेन = जनसञ्चाराभावेन विविक्तमेकान्तम् इदमरण्यम् = अमुं कान्तारम्, तटरुहेति । तटे रोहन्तीति तटरुहः तीरवर्त्तिनः ते च ते तरवो द्रुमाः, तेषां छायया अनातपेन समाकीर्णं व्याप्तं, रमणीयं हृद्यं सैकतं वालुकामयं पुलिनं यस्याः ताम् । प्रसन्नसलिलवाहिनीम्= प्रसन्नं निर्मलं यत्सलिलं जलं तस्य वाहः प्रवाहोऽस्या अस्तीति तां निर्मलजलौघवतीमित्यर्थः । समुद्रगामिनीम् = सरितम् । अवलोकयन् = पश्यन्, दण्डकवनवासम् = दण्डकारण्यनिवासं यत्र गोदावर्यासीत्, संस्मृत्य= सञ्चिन्त्य, एवम् = एतादृशं त्वया दृश्यमानं, वैक्लव्यम् = व्याकुलताम्, अनुप्राप्तोऽस्मि = गतोस्मि । पुराऽहं वनेषु सीतया सहैव पर्यभ्रमं येन मया वनवासदुःखं किमपि मतं नाऽभूत्, सम्प्रत्येकाकी परिभ्रमामि, सा च मद्वियुक्ता एकलैव भविष्यतीति महदिदं वैक्लव्यस्थानमिति भावः ।

एतदाकर्ण्य सीता ( पृथक् ) स्थितैवाह—"**आर्यपुत्र**" इति । "**न पुन**" रिति सोल्लुण्ठनोक्तिः । वनवासिनं जनम् = स्वसहचरं सीतारूपं जनं मामेवेत्यर्थः । न स्मरसीत्यनुपपन्नमिदम् । लक्ष्मणो रामवृत्तिं ततो मोटयितुमाह—"**किं तत्र**" इति । दुःखैकवासे = केवलं दुःखप्रद इत्यर्थः । तत्र चतुर्दशवर्षसमाः दुःखमेव भुक्तं न किञ्चित्सुखमिति सर्वथा स्मरणानर्हो वनवासो वैक्लव्यञ्च त्याज्यमिति लक्ष्मणाशयः ।

किसलयसुकुमारं पाणिमालम्ब्य देव्या
विविधरतिसखीभिः सङ्कथाभिर्दिनान्ते ।
चरणगमनवेगान्मन्थरस्य स्मरामि
स्रुतपयसि तटिन्याः सैकते चङ्क्रमस्य ॥१२॥

सी—(१) अइ णिरनुक्कोस, किं एदिणा संलावट्ठाणेण असरणं दुःखिदं जणं अधिअदरं बाधेसि ।

(१) अयि ! निरनुक्रोश ! किमेतेन संलापस्थानेन अशरणं दुःखितं जनमधिकतरं बाधसे ।

रामो देवीसम्बन्धेन वनवासस्य स्मर्तव्यतां दर्शयितुमाह—" यस्य " इत्यादि । " किसलये " ति । दिनान्ते = दिवसावसाने किसलयसुकुमारम् = किसलयवदतिकोमलं, नवपल्लवपेलवमित्यर्थः एवम्भूतं देव्याः = सीतायाः, पाणिम् = करम्, आलम्ब्य = आश्रित्य निजपाणावादाय, "विविधे" ति—विविधा नानाप्रकारा या रतयः अर्थात् रतिहेतुभूता दम्पत्योः परस्परं चेष्टाविशेषाः, तासां ( रतीनां ) सखीभिः आलीभिरर्थात् तत्सहचरीभिः सङ्कथाभिः = प्रियालापपरम्पराभिः सहैव चरणगमनवेगात् = चरणाभ्यां गमने चलने यो ( जायमानो ) वेगो जवस्तस्माद्धेतोः, स्रुतपयसि = स्रुतं निर्गतं पयोजलं यस्मात् तत् तस्मिन्, तटिन्याः = नद्याः, सैकते = सिकतामये तटे, मन्थरस्य = मन्दमन्दस्य चङ्क्रमस्य = गमनस्य स्मरामि = चेतामि । मालिनीवृत्तम् ॥१२॥

एतेन किम् = न किञ्चिदपि फलमित्यर्थः । प्रत्युत विफलमेवेत्याह— " संलापे " ति । संलापस्थानेन = वार्ताकरणावस्थितया अशरणम् = अनाथम् । दुःखितम् = कष्टं प्राप्तम् । जनम् = यादृशं सीतारूपम् । अधिकतरम् अत्यन्तं यथा तथा बाधसे = पीडयसे ।

ल—आर्य ! अलं शोकेन ।

रा—कथं न शोचामि मन्दभाग्यः ? पश्य पश्य—

पूर्वं वनप्रवासः पश्चाल्लङ्का ततः प्रवासोऽयम् ।
आसाद्य मामधन्यं दुःखाद्दुःखं गता सीता ॥१३॥

सी—(१) अय्यउत्त, णिव्वासिदाए असदिसं ।

रा—हा ! जनकराजपुत्रि !

सी—(२) अप्पपुण्णभाइणीए वज्जणीअ ?

रा—हा ! वनवाससहायिनि ।

सी—(३) अ वि एदं ण संपदं ।

---

(१) आर्यपुत्र ! निर्वासिताया असदृशम् ।
(२) अल्पपुण्यभागिन्या वर्जनीय ?
(३) अप्येतन्न साम्प्रतम् ।

---

"अलम्" मिति । शोको न कर्तव्य इत्याशयः । मन्दभाग्यः = नीचभागधेयः सीताविरहित्वात् । मन्दभाग्यमेव स्फोरयति—"पूर्वम्" इति । पूर्वम् = प्रथमं वनप्रवासः = अरण्यवासः कैकेयीनिमित्तश्चतुर्दशवर्षान्तो मया सहेत्यर्थः । पश्चात् = ततः लङ्का = लङ्कायां रावणद्वारा वास इत्यर्थः । ततोऽयं प्रवासः = प्रजारञ्जनकारणतया वशीभूतेन निन्दामसहमानेन मया दत्त इत्यर्थः । एवं मामधन्यम् = मन्दभाग्यम्, आसाद्य = प्राप्य सीता = जनकपुत्री आजानशुद्धाऽपि दुःखात्—दुःखं गता = एकस्माद् दुःखादुत्तरोत्तरदुःखपरम्परां प्राप्तेति युज्यत एव मम शोक इति भावः ॥१३॥

निर्वासितायाः—स्वयमेव वनप्रेषितायाः, असदृशम् = अतुल्यमेतत्व-शोकप्रकटनमित्यर्थः । या स्वयमेव निर्वासिता कष्टञ्च प्रापिता पुनस्तस्याः कृतेऽयं शोको निष्प्रयोजन इति भावः ।

अल्पपुण्यभागिन्या = न्यूनपुण्यकारिण्या ममेत्यर्थः वर्जनीय != परिहरणीय ! । सम्बोधनपदमिदम् । एवं वने परित्यक्ताऽहं तवोपचरणं कर्तुमस-

रा—हा ! क्व गतासि ।

सी—(१) जहिं मदभाआ गच्छदि ।

रा—देहि मे प्रतिवचनम् ।

सी—(२) असंभावणीए जणे कीदिसं पडिवअणं ।

रा—( शोकं नाटयति )

ल—आर्य ! ननु विज्ञापयामि—अलं शोकेनेति ।

रा—कथं न शोचामि शोचनीयां वैदेहीम् ? ।

सी—(३) अय्यउत्त मा एव्वं भण—सोअणीआ वैदेहित्ति ! ण खु सो जणो सोअणिज्जो जो एव्वं वल्लहेण सोईअदि ।

रा—वत्स ! लक्ष्मण ! किं शक्यते ज्ञातुं क्व वर्तते इति ?

(१) यत्र मन्दभाग्या गच्छति ।

(२) असम्भावनीये जने कीदृशं प्रतिवचनम् ।

(३) आर्यपुत्र ! मैवं भण—शोचनीया वैदेहीति । न खलु स जनः शोचनीयः, य एवं वल्लभेन शोच्यते ।

मर्था एवेति भावः । न साम्प्रतम् = नाऽधुना वनवाससहायित्वम् । सम्प्रति एकलाया एव मम वनवासित्वात् "वनवाससहायिनि" इत्यामन्त्रणं न युज्यत इति भावः । "हा !" इतिशोके । "क्व गतासि" इत्यसह्यं विरहतापं मन्यते । मन्दभाग्या = अल्पपुण्या ।

प्रतिवचनम् = उत्तरम् । असम्भावनीये = अविश्वसनीये जने त्वादृशे । अथवा—असम्भावनीये = असम्भालनीये मादृशे जने । शोकं नाटयति = रङ्गस्थान् सामाजिकान् प्रति शोकाभिनयं दर्शयति । लक्ष्मणो भूयोऽपि रामं शोकात्पृथक्कर्तुमाह—" आर्य " इति । विज्ञापयामि = प्रार्थयामि । राम. शोकस्यावश्यकर्तव्यत्वमाह—" कथं न " इति । शोचनीयाम् = शोकार्हाम् । वैदेहीम् = विदेहपुत्रीं जानकीम् ।······पतिव्रताधौरेया सीता एतस्यामवस्थायामपि स्वात्मगौरवं मन्यमाना आह—" आर्यपुत्र " इत्यादि । एकस्त्रीव्रतो यस्या वल्लभो विरहे एवं तप्यते सा स्त्री नैव शोचनीयेति भावः । सीतामन्त्रमायाऽऽतुरो रामो लक्ष्मणं पृच्छति—"वत्स" इत्यादिना । "दिवसे"

सी—(१) दिअसावसाणविणिवारिदपिअसमाअमा विअ चक्कवाई इदो एव्व पवासे वट्टामित्ति।

ल—न शक्यते क वर्तत इति ज्ञातुम्।

रा—उत्सादितं मया चिरकालाविच्छिन्नं रघुकुलम्। (इति रोदिति)

सी—(२) (सशोकम्) अदिमत्तं संतवदि अज्जउत्तो, किं करेमि।

---

(१) दिवसावसानविनिवारितसमागमेव चक्रवाकी इहैव प्रवास एव वर्तत इति।

(२) अतिमात्रं सन्तपत्यार्यपुत्रः, किं करोमि। साहसतः स्तिमितदर्शनं,

---

ति—दिवसस्य अन्होऽवसाने विरामे विनिवारितः विधात्रैव दूरीकृतः समागमो यस्याः सा एवम्भूता, चक्रवाकीव = कोकाङ्गनेव।…इहैव = वनप्रदेशे प्रवासे = प्रदेशे एव वर्तत इति। अद्यापि तव प्रिया जीवति, विधातैव प्रतिकूलः, धैर्यं धरेति भावः।

लक्ष्मणः सीतावस्थानं ज्ञातुमशक्यमतस्तदर्थं वृथा शोक इति रामं शोकात्परावर्त्तयितुमाह—"न" इति। "क वर्तते इति ज्ञातुं न शक्यते" इत्यन्वयः। रामो लक्ष्मणवचः श्रुत्वा सर्वथा सीतालाभे नैराश्यं मत्वा भूयोऽपि शुचामुद्गारं प्रकटयति—"**उत्सादितम्**"इति। उद्ध्वंसितमित्यर्थः। चिरकालाऽविच्छिन्नम् = चिरकालात् सत्ययुगात्प्रभृति पुत्रपौत्रादिपरम्परया सततप्रवृत्तम्। रघुकुलम् = रघोः कुलं रघुवंश इत्यर्थः। सूर्यवंशस्यापि रघुकुलनाम्ना प्रसिद्धौ दिलीपस्य नन्दिनीनामकगोसेवाप्रभाव एव बीजम्। इति रोदिति = रोदनाभिनयेन नाट्यशालास्थितान् सामाजिकान् रञ्जयतीत्यर्थः। एतदालोक्य सीता शोकाकुलीभूतेत्याह "सशोकम्" इति अतिमात्रम् = अत्यन्तम्। सन्तपति = सन्तापमुपैति। तप संतापे। भ्वादिः परस्मैपदी धातुः। कर्तव्यस्य विवेकाभावं प्रकटीकरोति—"**किं करोमि**" इति। साहसतः = बलात्, स्तिमितदर्शनम् = स्तिमिते (बाष्प-

साहसादो तिमिदसणं पमज्जामि अस्सुचअं (पदमुत्क्षिप्य) अहवा जणप्पवादो रक्खिदव्वो। अज्जउत्तेण जाव न पेक्खामि दाव सोआवेअबलक्कारिदा ण प्पहवामि अप्पाणअस्स। मुणिजणसंपादसमुद्दो एसो

प्रमार्जयाम्यश्रुसञ्चयम् (पदमुत्क्षिप्य) अथवा जनप्रवादो रक्षितव्यः। आर्यपुत्रेण यावन्न प्रेक्ष्ये तावच्छोकावेगबलात्कारिता न प्रभवाम्यात्मनः। मुनिजनसम्पात-

सम्बन्धेन) आर्द्रे दर्शने नयने येन तम्, अश्रुसञ्चयम् = अश्रूणां नेत्रवारीणां सञ्चयं = प्रवाहम्, प्रमार्जयामि = प्रोञ्छामीति सान्वयोऽर्थः। करणल्युडन्तो दर्शनशब्द अस्ते नेत्रवाची, दृश्यतेऽनेनेति "दर्शन" मिति व्युत्पत्तेः। दृश्यते चाक्षुषज्ञानविषयीक्रियत इत्यर्थः। "आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तम्" इत्यमरः। "स्तिमितस्तरले क्लिन्नं" इति च रुद्रः। तिम्यति स्मेति "स्तिमितम्"। स्तिम आर्द्रीभावे दैवादिकः अस्याकर्मकत्वात् "गत्यर्थाऽकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च" (३।४।७२) इति कर्त्तरि क्तः। पदम् = चरणम्, उत्क्षिप्य = उत्थाप्य। पदोत्थानाऽभिनयं रङ्गस्थान्प्रति दर्शयित्वेत्यर्थः।

पक्षान्तरमाश्रयते—"अथवा" इति। जनप्रवाद = लोकापवादः। रक्षितव्यः = यथाऽसौ न स्यात्तथा यतितव्यमिति भावः। "न प्रेक्ष्ये" इति। नालोक्ये। अत्र कर्मणि तङ्। "आर्यपुत्रो मां प्रेक्षत इत्यहमार्यपुत्रेण प्रेक्ष्ये" इति कर्तृलोपनप्रकारः। "यावत् न प्रेक्ष्ये तावदि" ति यत्तदोः नित्यसम्बन्धः। "शोकावेगे" ति। शोकस्य शुच आवेगेन जवेन प्रवाहेणेति यावत्, यो बलात्कारः = हठात्कारणम्। बलादिति पञ्चमीप्रतिरूपकमव्ययम्। बलात् क्रियतेऽसौ "बलात्कारः"। कर्मणि घञ्। शोकावेगबलात्कारोऽस्याः सञ्जातः इति सा तादृश्यहम्। "तदस्य सञ्जात—(५।२।३६) इतीतच् तारकादितः। शोकावेगेनात्यन्तं वैवश्यं प्राप्ता शोकप्रवाहविह्वलीभूतेत्यर्थः। आत्मनो न प्रभवामि = स्वस्यापि नेशे। आत्मन इति सम्बन्धे षष्ठी। आत्मानं वशीकर्तुं सोत्साहा न भवामि। गतधैर्याऽहं संवृत्तेति भावः। "मुनिजने" ति। मुनिजनानामृषिलोकानां सम्पातः सङ्घट्टः तस्य समु-

उद्देसो । अदो जहच्छागदो को वि मं पेक्खिस्सदि । ता एदिणा लदाजालपच्छण्णसुहसंचारेण मग्गेण अस्समं गदुअ कुसलवा संभावइस्सं ।
( नाट्येनावलोकयन्ती निष्क्रान्ता )

( ततःप्रविशति ऋषिः )

**ऋ**—आदिष्टोऽस्मि भगवता वाल्मीकिना—वत्स ! बादरायण ! श्रुतं मया लक्ष्मणसहायो रामभद्रस्तपोवनमिदमनुप्राप्त इति । स कदाचि-

---

समुचितोऽयमुद्देशः, अतो यदृच्छागतः कोऽपि मां प्रेक्षिष्यते, तदेतेन लताजालप्रच्छन्नसुखसञ्चारेण मार्गेणाश्रमं गत्वा कुशलवौ सम्भावयामि ।

---

चितो योग्यः, प्रायो यत्र मुनीनां यातायातं भवति तादृशः अयमुद्देशः = प्रदेश इत्यर्थः । ततः किमित्याह—"अत" इति । यदृच्छागतः = स्वच्छन्दमायातः, प्रेक्षिष्यते = आलोकिष्यते । प्रोपसृष्टस्येक्षतेर्लृटि रूपम् । "तदेतेने" ति । तत् = तस्मात् कारणात्, एतेन = अमुना मार्गेणेति सम्बन्धः । मार्गस्य विशेषणं "लताजाले" ति । लतानां वल्लीनां आलेन समूहेन = आतानमतानेन प्रच्छन्नः प्रगुप्तः सुखेन सञ्चारः स्वच्छन्दं गमनागमनं यत्र तेन वर्त्मनेत्यर्थः । आश्रमं गत्वा कुशलवौ = स्वपुत्रौ, सम्भावयामि = सम्भालयामि । तयोः पालनायाऽत्यावश्यानुष्ठेयं विधास्य इत्यर्थः ।

पात्रान्तरप्रवेशं सूचयति—"ततः" इति । आदिष्टोऽस्मि = आज्ञप्तोऽस्मि । भगवता = ऐश्वर्यसम्पन्नेन पूजनीयेन । वाल्मीकिना = आदिमहाकविना तन्नाम्ना । "बादरायण !" इति बदरस्य गोत्रापत्यं बादरायणः नडादिषु "बदर" शब्दपाठात्, "नडादिभ्यः फक्" (४।१।९९) इत्यनेन फक् । तत्सम्बुद्धौ "बादरायण" इति । बदरस्यापत्यं बादरिः । बादरेरपत्यं बादरायण इति विग्रहे तु—"यञिञोश्च" (४।१।१०१) इति सूत्रेण फकि, तस्य चायनि रूपं ज्ञेयम् । लक्ष्मणसहायः = लक्ष्मणः सहायः सार्थो यस्य सः । रामभद्रः = रामचन्द्रः । परममर्यादापालकलकत्वाज्जनैरियमपरा सञ्ज्ञा कृता श्रीरामस्येत्याभाति । "इदं तपोवनमनुप्राप्त" इति सम्बन्धः । अस्माकमा-

न्माध्याह्निककार्यसम्पादनव्यग्रानस्मान्मन्यमानो बहिरवस्थितो भवेत् । तस्मात्त्वमेनमुपक्रम्य परिसमाप्तमाध्याह्निककार्यं दर्शनमाकाङ्क्षमाणां मामावेदय—इति । तद्यावदहमपि भगवतो वाल्मीकेरादेशाद्राममेवान्वेषयामि । ( परिक्रामति )

ल—(विलोक्य ससम्भ्रमम्) आर्ये ! तपोधनोऽयमित एवाभिवर्तते ।

रा—( अश्रूणि प्रमृज्य कृतधैर्यः स्थितः )

ऋ—( निर्वर्ण्य ) अये ! लतागुल्मप्रच्छायेऽस्मिन् पुरुषयुगलमिव ।

---

श्रमपदमित्यर्थः । "माध्यन्हिके" ति । अन्हो मध्यं मध्यान्हः । सर्वोऽप्येकदेशोऽन्हा समस्यते—"सङ्ख्याविसाय"—(६।३।११०) इति ज्ञापकात् । मध्यशब्दस्य पूर्वनिपातः । "अन्होऽन्हः" (५।४।८८) इत्यन्हादेशः । "राजाहःसखिभ्यष्टच्" (५।४।९१) इति समासान्तष्टच् । मध्यान्हे भवं माध्यान्हिकम् ।…………माध्यान्हिकञ्च तत्कार्यं सन्ध्यादिकं, तस्य सम्पादनेऽनुष्ठाने व्यग्रान् = तत्परान् अस्मान् । मन्यमानः = सम्भावयन् । बहिरवस्थितः = आश्रमप्रदेशाद्बहिरेव स्थित इत्यर्थः । एनम् = रामभद्रम् । उपक्रम्य = उपसृत्य । "परिसमाप्त" ति । परिसमाप्तमवसितं माध्यान्हिकं कार्यं यस्य स तम् । दर्शनम् = रामदर्शनम् , आकाङ्क्षमाणाम् = अभिलषन्तीं मामावेदय = बोधय ।

क्वचित् परस्मैपदिनोऽप्यात्मनेपदिनः क्वचिदात्मनेपदिनोऽपि परस्मैपदिनो भवन्तीति स्वतन्त्राः कवयोऽगाधञ्च शब्दशास्त्रम् ।

तथावत् = तथैव यथा वाल्मीकेरादेशस्तदनुसारमित्यर्थः । अन्वेषयामि = गवेषयामि ।

ससम्भ्रमम् = ससाध्वसम् । तपोधनः = तपस्वी । इत एव = अमुं प्रदेशमेव । अभिवर्तते = समायाति । अश्रूणि = नेत्रवारिबिन्दून् । प्रमृज्य = प्रोञ्छ्य । कृतधैर्यः = कृतमात्तं धैर्यं धीरता येन सः, स्थितः । एतादृशं वैक्लव्योपेतं मामयं तपोधनो न निरीक्षेतेत्याशयो रामस्य । "अये" इत्याश्चर्यार्थकमव्ययम् । लतागुल्मप्रच्छाये = लतासङ्घशीतले । अस्मिन् = प्रदेशे । पुरुषयुगलम् = मनुष्यद्वन्द्वमिव, द्वौ पुरुषाविव लक्ष्येते इत्यर्थः ।

अपि नाम लक्ष्मणसहायो रामो भवेत् । (विचिन्त्य) कस्तत्र सन्देहः—

मन्दं याति समीरणो न परुषा भासो निदाघार्चिषो
न त्रस्यन्ति चरन्त्यशङ्कमधुना मृग्यो ऽपि सिंहैः सह ।
मध्याह्नेऽपि न याति गुल्मनिकटं च्छाया तदध्यासिता
व्यक्तं सोऽयमुपागतो वनमिदं रामाभिधानो हरिः ॥१४॥

---

"अपि नाम" इति सम्भावनायाम् । अहं सम्भावये यत् "लक्ष्मणसहायो रामो भवेद्" इत्यर्थगतिः । विचिन्त्य = विचार्य । स्वयमेव निश्चितमर्थमाह— "कस्तत्र" इति । सन्देहः = संशयः । यथा न सन्देहस्तथोपपादयति— "मन्दम्" इति । समीरणः = अनिलः, मन्दम् = शनैः, याति = चलति । निदाघार्चिषः = निदाघे ग्रीष्मे सूर्यः प्रचण्डो भवतीति कालिकसम्बन्धेन लक्षणया निदाघपदस्य प्रचण्डोऽर्थः, प्रचण्डार्चिषः = सूर्यस्य भासः = दीप्तयः ( किरणा इत्याशयः ) परुषाः = कठोराः न = नैव सन्तीतिशेषः । अधुना = इदानीम्, मृग्योऽपि = हरिणाङ्गना अपि, सिंहैः = पञ्चास्यैः, सह = सार्धम्, अशङ्कम् = न शङ्का यस्यां क्रियायां तद्यथा तथा, त्रासरहितं सञ्चरन्ति = पर्यटन्ति, किन्तु न = नैव त्रस्यन्ति = भीतिं न प्राप्नुवन्तीत्यर्थः । तदध्यासिता = तेन सत्पुरुषेण रामेण अध्यासिता अधिष्ठिता छाया = अनातपः सूर्यबिम्बेति यावत्, मध्याह्ने = दिनस्य मध्यभागेऽपि गुल्मनिकटम् = स्तम्बसमीपं न याति ।

मध्याह्ने हि छाया धूमाकारा सती स्तम्बनिकटं धावति परं तादृशमहापुरुषाध्यासिता सा तत्सेवार्थं तत्रैव तिष्ठतीत्यहो चमत्कारविशेषो रामभद्रस्येति भावः ।

सोऽयम् = वेदलोकप्रसिद्धः रामाभिधानः = रामाख्यो हरिः = विष्णुः, इदं वनम् = अरण्यम्, उपागतः = प्राप्तः (इति) व्यक्तम् = स्फुटं नात्रसन्देहः तस्मादयं लक्ष्मणसहायो राम एव । कथमन्यथा—समीरस्य मन्दगतिः, सूर्यस्य भासां कठोरताऽभावः, मृगीणां सिंहत्रासनाशः, छायाया मध्याह्नेऽपि स्वस्थानपरित्याग इत्येवंरूपः प्रभावः प्राकृतजने भवितुमर्हेत्, तस्मादयं विष्णोरवतारभूतो राम एवेति भावः ।

न केवलमतिक्रान्तमानुषेण प्रभावेण, आकारेणापि शक्यत एव निश्चेतुम्।
( निर्वर्ण्य )

व्यायामकठिनः प्रांशुः कर्णान्तायतलोचनः ।
व्यूढोरस्को महाबाहुर्व्यक्तं दशरथात्मजः ॥ १५ ॥

तदेनमुपगम्य यथावस्थितमावेदयामि । ( उपगम्य ) राजन्, स्वस्ति ।

रा—अभिवादये ।

ऋ—विजयी भव ।

रा—किमागमनप्रयोजनमार्यस्य ?

---

अत्र—चतुर्थपादे पादत्रयवाक्यानि हेतव इति वाक्यार्थगतं **काव्यलिङ्गमलङ्कारः** । तथाच दर्पणे विश्वनाथः—" हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते" इति तल्लक्षणमाह । शार्दूलविक्रीडितम् ॥१४॥

" **न केवलम्** " इति । मानवानतिक्रम्य वर्तत इति अतिक्रान्तमानुषस्तेन प्रभावेण = प्रतापेन । अयं राम इति निश्चेतुं शक्यते, अपि तु आकारेण = मूर्त्याऽपि शक्यत एव निश्चेतुम् = निर्णेतुमित्यर्थः । निर्वर्ण्य = सम्यङ् निरूप्य । हस्तवद्धं मुखबद्धं भवतीति भावः ।

"**व्यायामे**" ति । व्यायामकठिनः = व्यायामेन दैहिकेन परिश्रमेण कठिनः कठोराङ्गतः, प्रांशुः=उन्नतदेहः, कर्णान्तमायते विशाले लोचने नयने यस्य सः, व्यूढोरस्कः = व्यूढं विपुलमुरो यस्य स " व्यूढोरस्कः " । " उरः प्रभृतिभ्यः कप् " ( ५ । ४ । १५१ ) इत्यनेन समासान्तः कप् । " व्यूढं विपुलं भद्रं स्फारं समं वरिष्ठञ्च " इति यादवः । महाबाहुः = महान्तौ दीर्घौ बाहू यस्य सः, एभिरेव हेतुभिः व्यक्तम् = स्पष्टमेवायं दशरथात्मजः=दशरथपुत्रो राम एव पितुरनुरूपत्वात्पुत्रस्येति भावः । एतेनास्य पिताप्येवमाकार आसीदित्यपि ध्वनितम् । अनुमानालङ्कारः ॥१५॥

उपगम्य = उपसृत्य । यथावस्थितम् = आवेदयामि = निवेदयामि । "स्वस्ति" इत्यव्ययं कल्याणार्थे ।

रामो मुनिं प्रणमति—" अभिवादये " इति । ऋषिराशीर्वादयति—" विजयी भव " इति । आगमनप्रयोजनम् = आगमनस्योद्देश्यम् ।

ऋ—परिसमाप्तसकलकर्मा भगवान् वाल्मीकिर्महाराजस्यागमनमुदीक्षमाणस्तिष्ठति ।

रा—(विलोक्य) अये ! अतिक्रान्तो मध्याह्नः । तथाहि—

प्रविश्य तरुमूलानि नीत्वा मध्यन्दिनातपम् ।
अध्वनीना इव च्छाया निर्गच्छन्ति शनैः शनैः ॥ १६ ॥

अपि च,

मध्याह्नार्कमयूखतापमधिकं तोयावगाहादयं
नीत्वा वारिकणार्द्रकर्णपवनैराह्लाद्यमाननः ।

परिसमाप्तसकलकर्मा = परिसमाप्तानि अवसितानि सकलानि समग्राणि कर्माणि सन्ध्याग्निहोत्रादीनि यस्य सः, उदीक्षमाणः=प्रतिपालयन् । अतिक्रान्तः=गतः ।

" प्रविश्य " इति । छायाः = सूर्यप्रियाः, तरुमूलानि = तरूणां द्रुमाणां मूलानि अधोभागान् प्रविश्य = उपेत्य, मध्यन्दिनातपम् = मध्यन्दिनस्य आतपं सूर्योद्योतं, नीत्वा = गमयित्वा, अध्वनीनाः = पथिका इव शनैः शनैः = मन्दं मन्दं निर्गच्छन्ति = निर्यान्ति । मध्याह्ने छायास्तरोर्मूलानि विशन्ति, पान्था अपि तत्रैव तथा मध्याह्नोत्तरं छायाः पान्थाश्च ततोऽपसरन्त्युपमानोपमेययोर्वाच्यं साम्यमिति पूर्णोपमालङ्कारः । " छाया सूर्यप्रिया कान्ति " रित्यमरः ॥१६॥

अपि चेति—किञ्चेत्यर्थः । मध्याह्नेति । " अधुनाऽयं करी मन्दं मन्दं कूलमुपैति " इति क्रियाकारकसम्बन्धः । अधिकम् = अत्यन्तं तोयावगाहात् = तोये जलेऽवगाहात् स्नानादेर्हेतोः ।

*अधिकं मध्याह्नार्कमयूखतापम् = मध्याह्नेऽर्कस्य सूर्यस्य मयूखानां किरणानां तापं घर्मं, नीत्वा = यापयित्वा दूरीकृत्येत्यर्थः । वारीति—वारिणः पानीयस्य कणैः बिन्दुभिः आर्द्रौ क्लिन्नौ यौ कर्णौ श्रवणौ तयोः पवनैः समीरणैः आह्लाद्यमाननः = आह्लाद्यमानं हृष्यमाणं प्रसन्नमाननं मुखं यस्य

* " अधिकम् " इति पदं देहलीदीपन्यायेनोभयत्रान्वेतव्यमिति शुद्धं भाति ।

**मन्दं मन्दमुपैति कूलमधुना वक्षःप्रणुन्नैर्जलै-**
**राक्रान्तं करघातभाङ्कृतिसरित्कल्लोलचक्रः करी ॥१७॥**

( इति निष्क्रान्ताः सर्वे )

---

स तादृशः । कर्णयोश्चलनं गजस्य स्वभावसिद्धो धर्मः । पुनः कीदृशः—करस्य शुण्डादण्डस्य ये घाताः ताडनानि, तैर्या भाङ्कृतिः "भौं भौं" इत्याकारो नादविशेषो यत्र तादृशः सरितोऽर्थात् गोमत्या एव कल्लोलानां महावीचीनां चक्रं येन सः, वक्षःप्रणुन्नैः = वक्षसा उरःस्थलेन प्रणुन्नैः प्रकर्षेण चोभङ्गमितैरुच्छालितैः, जलैः = नद्यम्बुभिः आक्रान्तम्=व्याप्तीकृतं कूलम् = तटम्, मन्दं मन्दम् = शनैः शनैः, उपैति = आयाति । मध्यान्हकालवर्णनमिदम् ।

"**उपैति**" इत्यत्र "एङि पररूप" (६।१।९४) इति प्राप्तस्य पररूप, गुणस्यापवादभूतेन–"एत्येधत्यूठ्सु" (६।१।८९) इत्यनेन वृद्धिः । "**प्रणुन्न**" इत्यत्र "**नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्**" (८।२।५६) इति निष्ठातस्य पक्षे नादेशः । तस्य "**प्रातिपदिकान्त**"—( ८।४।११ ) इति णत्वम् ।

**स्वभावोक्तिरलङ्कारः**, यथावस्थितस्य करिणश्चारुवर्णनात् । "स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्" इत्युक्तेः । अत्र केषाञ्चिद्व्यञ्जनानां सकृदसकृद्वा साम्यदर्शनाद् वृत्त्यनुप्रासोऽपि । तयोः परस्परं निरपेक्षस्थितेः संसृष्टिः । विश्वनाथमतेन—"लाटी" रीतिः । "लाटी तु रीतिर्वैदर्भीपाञ्चाल्योरन्तरा स्थिता" इति तल्लक्षणात् । प्रसादो गुणः । **शार्दूलविक्रीडितं वृत्तम्** । लक्षणमुक्तं प्राक् । "सूरसूर्यार्यमादित्य × × × विकर्तनार्कमार्त्तण्डमिहिरारुणपूषणः" "आपः स्त्री भूम्नि वार्वारि ×××× अम्भोर्णस्तोयपानीयनीरक्षीराम्बुशाम्बरम्" "वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्" "महत्सूल्लोलकल्लोलौ" "**कूलं** रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु" इति सर्वत्रामरः । "**करो** वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः" रिति मेदिनी ॥१७॥

इति श्रीपण्डितदेवीदासतनुजनुषा सारस्वतवंशावतंसेन सतां विष्णुदेवीगर्भजेन स्यालकोटवास्तव्य-जैनन्यायविशारद-नवतार्किक [ तन्त्रचक्रवर्ति ] दर्शनाचार्य-**नृसिंहदेव**शास्त्रिविरचितायां "सौरभोल्लासिनी" इत्यपराख्याया "सौभाग्यवती" नाम छन्दमालाव्याख्यायां तृतीयोऽङ्कः ।

# चतुर्थोऽङ्कः

( ततः प्रविशति तापसीद्वयम् )

**प्रथमा**—(१)हला, जअणवेदि, रामाअणसङ्गीदणिमित्तं वम्मीइतपोवणं संपत्ताए तिलुत्तमाए अहं एव्वं भणिदा—अहं पहावणिम्मिदेण सीदारूवेण

---

(१) हला ! यज्ञवेदि ! रामायणसङ्गीतकनिमित्तं वाल्मीकितपोवनं संप्राप्तया तिलोत्तमयाहमेवं भणिता—अहं प्रभावनिर्मितेन सीतारूपेण

---

**यन्नामस्मरणात्सद्यो महापातकिनोऽपि ये ।**
**यमभीतिं न पश्यन्ति रामं तं प्रणमाम्यहम् ॥ १ ॥**

तापसीद्वयम् = तपोऽस्यास्तीत्यर्थे—"अण् च" (५।२।१०३) इति मत्वर्थीयोऽण् । यद्वा—तपःशीलमस्येति—"छत्रादिभ्यो णः" (४।४।६२) इति शीलार्थे णः । तपःशब्दः छत्रादिषु पठ्यते । ततः स्त्रियां ङीप् । "तापसी" । "द्वित्रिभ्यां तयस्यायज्वा" (५।२।४३) इति सूत्रेण द्विशब्दात्तयपः अयचि कृते "यस्येति च" (६।४।१४८) इतीकारलोपः, द्वौ अवयवौ यस्यास्तयावेति इति "द्वयम्" तापस्योर्द्वयम् "तापसीद्वयम्" । "हला" इति सखीसम्बोधनेऽव्ययम् । रामायणेति । रामायणस्य वाल्मीकिमुनिप्रणीतस्यादिरामायणस्य यत् सङ्गीतकम् = नृत्यवाद्यगीतत्रयात्मकम् । "नृत्यं वाद्यं गीतञ्च त्रयं सङ्गीतमुच्यते" इत्युक्तेः । तन्निमित्तं = तदर्थमित्यर्थः । वाल्मीकितपोवनम् = वाल्मीकिमुनेराश्रमम् । सम्प्राप्तया = आयातया, तिलोत्तमया = तिलोत्तमा नाम देवी, या सुरलोके सङ्गीतकविद्यायां महाप्रसिद्धा तया । भणिता = कथिता । तस्या भणितमेवाह—"अहम्" मिति । प्रभावनिर्मितेन = प्रभावोऽत्र देवानां स्वाभाविकी यथेष्टनानारूपादिधारणपरिवर्तनशक्तिः, तेन प्रभावेण = दिव्यशक्त्या निर्मितेन रचितेन । देवा हि स्वमानसया यथेष्टं रूपं धारयन्तीति पुराणादिषु सुप्रसिद्धम् । स्पष्टश्चायमर्थः उपसंहारदर्शनाधिकरणे—"देवादिवदपि लोके" (ब्र० सू० २।१।२५) इति शाङ्करभाष्ये—"यथा लोके देवाः

रामस्स दंसणपहं ओदरिअ रामो सीदाए उवरि साणुकंपो ण वेत्ति जाणिदुं णु इच्छामि, ता तुमं रामं अण्णेसहि—त्ति । ता दसेदु पियसही रामस्स विस्समत्थाणं ।

यज्ञवेदिः (२)—हला, वेदवदि, तिलुत्तमाए जदा एसो आलावो पउत्तो तदा आसण्णगुम्मलदागहणपच्छण्णाट्ठिदेण रामवअस्सेण अज्जहसिएण सव्वं आअण्णिअदं ।

---

रामस्य दर्शनपथमवतीर्य रामः सीताया उपरि सानुकम्पो न वेति ज्ञातुं नु इच्छामि, तत्त्वं राममन्वेषय—इति । तद्दर्शयतु प्रियसखी रामस्य विश्रमस्थानम् ।

(२) हला ! वेदवति ! तिलोत्तमया यदैष आलापः प्रवृत्तस्तदासन्नगुल्मलतागहनप्रच्छन्नस्थितेन रामवयस्येनार्यहसितेन सर्वमाकर्णितम् ।

---

पितर ऋषय इत्येवमाद्यो महाप्रभावाश्चेतना अपि सन्तोऽनपेक्ष्यैव किञ्चिद्बाह्यं साधनमैश्वर्यविशेषयोगादभिध्यानमात्रेण स्वत एव बहूनि नानासंस्थानानि शरीराणि प्रासादादीनि च रथादीनि च निर्मिमाणा उपलभ्यन्ते" इत्यादिना । तस्माद्दिव्यप्रभाववती तिलोत्तमासत्ता । तत्कर्तृकरूपान्तररचनादिकं सम्भवदुपनिबद्धं कविनेत्यार्यो वैदिकसिद्धान्तो न शक्यशङ्क इत्यलं प्रासङ्गिकेन ।

दर्शनपथम् = दृष्टिमार्गं नेत्रगोचरतामिति यावत् । अवतीर्य = प्राप्य । सानुकम्पः = सदयः । नु = निश्चयेन । "त्वम्" इति प्रथमा तापसी प्रति सङ्गतम् । विश्रमस्थानम् = यत्र रामेण स्वावतारः कृतस्तं प्रदेशमित्यर्थः ।

तिलोत्तमया = सहेति शेषः । आलापः = आभाषणं वार्ताकरणमिति यावत् । "स्यादाभाषणमालाप" इत्यमरः । तदा = तस्यां वेलायाम् । आसन्नेति । आसन्ने = समीपवर्तिनि गुल्मानां लतानाञ्च गहने ( घने प्रदेशे ) प्रच्छन्नं = गुप्तं यथा तथा स्थितेन । यद्वा प्रच्छन्नश्चासौ स्थितश्च तेनेति कर्मधारयः । रामवयस्येन = राममित्रेण आर्यहसितनाम्ना । आकर्णितम् = श्रुतम् ।

वेदवती (१)—अच्चाहिदं खु आअरिदं, जइ गहिदसंकेअस्स तस्स अग्गदो तिलुत्तमा सीदाए चरिदाइं अणुवट्टिस्सदित्ति तदो विपरीदो उवहासो भवे, ता इमादो पिअसहिं तिलुत्तमं णिवारेमि।

य—(२) सहि, वेदवदि, सीदा दाणिं कहिं ?

वे—(३) सुणाहि अज्ज सत्तमे दिवहे संपादिदाहिं तपोवणवासिणीहिं विण्णविदो भअवं वम्मीई-एसा खु अस्समदीहिआ पदुमाअरपाअदिसु अत्तणो उवभोएसु दाणिं महाराअस्स सण्णिहाणेण परपुरुसणअणपरिक्खित्ता।

(१) अत्याहितं खलु आचरितम्, यदि गृहीतसङ्केतस्य तस्याग्रतस्तिलोत्तमा सीतायाश्चरितानि अनुवर्तिष्यत इति ततो विपरीत उपहासो भवेत्। तदस्मात्प्रियसखीं तिलोत्तमां निवारयामि।

(२) सखि! वेदवति! सीतेदानीं कुत्र?

(३) शृणु, अद्य सप्तमे दिवसे संम्पातिताभिस्तपोवनवासिनीभिर्विज्ञापितो भगवान् वाल्मीकिः—"एषा खलु आश्रमदीर्घिका पद्माकरप्रायादिषु इदानीं महाराजस्य सन्निधानेन परपुरुषनयनपरिक्षिप्ता न शक्या स्त्रीजनेनावगाहितुम्"

अत्याहितम् = महद्भयमनिष्टमित्यर्थः। आचरितम् = कृतम्। गृहीतसङ्केतस्य = गृहीतः ज्ञातः सङ्केतः तिलोत्तमाकर्तृकसीतारूपपरिवर्तनात्मको येन स तस्य। तस्य = रामस्य। अग्रतः = पुरतः। चरितानि = वृत्तानि। अनुवर्तिष्यते = अनुकरिष्यति। विपरीतः विरुद्धः, यत्र कामिनं तस्य पुष्येयमर्थः। उपहासः = नर्म। तस्मात्पदमिति तु निरर्थकम्। निवारयामि = परावर्तये, अमुष्माद् व्यापारादिति शेषः।

शृणु इति। सम्पातिताभिः = सद्धीभूताभिः मिलिताभिरिति यावत्। तपोवनवासिनीभिः = तपस्विनीभिः। आश्रमदीर्घिका = आश्रमवापी। दीर्घेवेति "दीर्घिका"। "संज्ञायां कन्" (५।३।७५)। "वापी तु दीर्घिका" इत्यमरः। सरसीविशेष इत्याशयः। पद्माकरप्रायादिषु = पद्मानां कमलानामाकरप्रायादिषु तडागादिषु। "वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्" इत्यमरः। आत्मनः = स्वस्य। उपभोगेषु = व्यवहारविशेषेष्वित्यर्थः। महाराजस्य राज्ञो रामस्य। सन्निधानेन = सामीप्येन। "परपुरुषनयनपरिक्षिप्ता" = इदं

ण सक्का इत्थिआजणेण ओगाहिदुं त्ति । तदा भअवदा वम्मीइणा णिज्झाणणिच्चलणअणेण मुहुत्तं णिज्झाइअ भणिदं—एदस्सिं दीहिआए वट्टमाणो इत्थिआजणो पुरुसणअणाणं अगोचरो भविस्सदित्ति । तत्पउदि सीदा रामस्स दंसणपहं परिहरन्ती दीहिआतीरे सअलं दिवसं अदिवाहेदि ।

य—(१) किं जाणन्ति कुसलवा रामस्स अत्तणो अ सम्बन्धम् ?

---

इति । तदा भगवता वाल्मीकिना निध्याननिश्चलनयनेन मुहूर्तं निध्याय भाषितम्—एतस्यां दीर्घिकायां वर्तमानः स्त्रीजनः पुरुषनयनानामगोचरो भविष्यति—इति । ततः प्रभृति सीता रामस्य दर्शनपथं परिहरन्ती दीर्घिकातीरे सकलं दिवसमतिवाहयति ।

(१) किं जानीतः कुशलवौ रामस्यात्मनश्च सम्बन्धम् ?

---

दीर्घिकायाः विशेषणम् । परपुरुषाणां राजपुरुषाणां नयनैः दृष्टिभिः परिजिता व्याप्ता राजपुरुषोपभुक्ता । यस्यां राजा राजपुरुषाश्च स्वच्छन्दं व्यवहरन्तीति फलितम् । न शक्या = नैव योग्या । स्त्रीजनेन अबलाजनेन अवगाहितुम् = विलोडितुं स्नातुमिति यावत् । पुरुषसञ्चारे स्त्रीणां स्नानादिकर्मसु स्वातन्त्र्यसौख्याभावादनुचितत्वाच्चेति भावः । सम्बन्धस्तु—" एषाश्रमदीर्घिका स्त्रीजनेनावगाहितुं न शक्या " इति ज्ञेयः । शक्येत्यत्र—"शकिसहोश्च" (३।१।९९) इत्यर्हार्थे यत् ।

निध्याननिश्चलेन = निध्यानं नितरां ध्यानं निध्यानं समाधिर्योगशास्त्रोक्तश्चित्तवृत्तिनिरोधविशेष, तेन समाधिना निश्चलेन एकाग्रमनसा । मुहूर्तम् = होराद्वयम् । निध्याय = समाधाय । पुरुषनयनानाम् = मनुष्यदृष्टीनाम् अगोचरः = अविषयः । तत प्रभृति=निध्यानोत्तर वाल्मीकिमुनिवचनादारभ्येत्यर्थः । दर्शनपथम्=दृष्टिमार्गम् , परिहरन्ती=परित्यजन्ती । दीर्घिकातीरे=सरसीतटे । अतिवाहयति=गमयति । मुनिदृष्टेः प्रभावाद्रामं पश्यति सीता रामस्तु तां द्रष्टुं न शक्नोति । तस्माद्विलोचमार्गतेऽपि सीतानुस्मरणे उपहासस्म्भावनैव नास्तीत्याशयो वेदवत्याः ।

जानीतः = अवबुध्येते । सम्बन्धम् = जन्यजनकभावम् ।

वे—(१ अत्तणो बालभावेण मुणिजणस्स अ संसग्गेण मादरं वि णामदो ण जाणन्ति, किं उण दीहप्पवासविच्छिण्णं रामस्स उत्तन्तम्।

य—(२) किं जाणासि रामो एत्थ तपोवणं पविसादित्ति।

वे—(३) कुदो तस्स आअमो।

य—(४) गच्छ तुमं तिलुत्तमाए सआसं, अहं अ सीदाए पस्सपरिव-ट्टिणी होमि। (इति निष्क्रान्ते।)

( प्रवेशकः )

(ततः प्रविशत्युत्तरीयकृतप्रावरणा सीता यज्ञवती च)

य—(५) सहि वेदेहि, केण तुह उपदिट्ठं अपुव्वं उत्तरीअजुअलधारणं?

---

(१) आत्मनो बालभावेन मुनिजनस्य च संसर्गेण मातरमपि नामतो न जानीतः, किमुत दीर्घप्रवासविच्छिन्नं रामस्य वृत्तान्तम्।

(२) [illegible] जानासि रामः अत्र तपोवनं प्रविशतीति।

(३) कुतस्तस्यागमः?

(४) गच्छ त्वं तिलोत्तमासकाशम्, अहं च सीतायाः पार्श्वपरिवर्तिनी भवामि।

(५) सखि! वैदेहि! केन तवोपदिष्टमपूर्वमुत्तरीययुगलधारणम्?

---

बालभावेन=शिशुत्वेन। मुनिजनस्येति। यो यस्य संसर्गी भवति [illegible] विशेषतस्त-मेव परिचिनोतीति भावः। नामतः = इयं सीताऽनयोर्मातेत्येवं विशेषरूपेणे-त्यर्थः। किमुत=किम्पुनः। दीर्घप्रवासविच्छिन्नम्=दीर्घेण चिरकालिकेन प्रवासेन= (अर्थात् मातुरेव, मातृसम्बन्धेन स्वस्यापि) परदेशवासेन विच्छिन्नं त्रुटितम्। वृत्तान्तम् = उदन्तम्। "वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्" इत्यमरः। पार्श्वपरिवर्तिनी = समीपगामिनी। "प्रवेशक" इत्यस्य लक्षणमुक्तं प्राक्।

पात्रान्तरप्रवेशमाह—" ततः " उत्तरीयकृतप्रावरणा = उत्तरीयेण संव्यानेन कृतं प्रावरणमाच्छादनं यया सा तादृशी सीता। "संव्यानमुत्तरीयञ्च" इत्यमरः। उत्तरस्मिन् देहभागे भवमुत्तरीयम्। उत्तरशब्दात्—"गहादिभ्यश्च" (४।२।१३८) इत्यनेन छः प्रत्ययः।

उपदिष्टम् = शिक्षितम्। अपूर्वम् = लोकोत्तरम्।

सी—(१) अच्चन्तसीअलेण तरङ्गवाहिणा दीहेण दीहिआमारुदेण।
य—(२) सहि, प्रवासविरुद्धं खु एदं सारदचंदकिरणरासिपरिपंडुरं सुरहिबहुलामोदसमारद्धमहुअरउलसंगीअमणहरं एदं पावरणं।

(१) अत्यन्तशीतलेन तरङ्गवाहिना दीर्घेण दीर्घिकामारुतेन।

(२) सखि! प्रवासविरुद्धं खल्वेतच्छारदचन्द्रकिरणराशिपरिपाण्डुरं सुरभिबहुलामोदसमारब्धमधुकरकुलसङ्गीतमनोहरमेतत्प्रावरणम्।

अत्यन्त=शीतलेन अतिमात्रं शिशिरेण, तरङ्गवाहिना=तरङ्गेभ्यो वीचीभ्यो वाहिना गोमती-(गङ्गा) तरङ्गस्पृष्टेन, वीचिस्पर्शवतेत्यर्थः। दीर्घेण = लम्बमानेन बहुकालं प्रवहतेति विवक्षितोऽर्थः। अल्पकालस्य शीतन्तु सोढुमपि शक्यमिति भावः। **एतेन** सीतायाः सुकुमारीत्वं व्यज्यते। दीर्घिकामारुतेन = दीर्घिकायाः वाप्या मारुतेन पवनेन, वापीसमुद्भूतेनाऽनिलेनेत्यर्थः।

**सखीति**—"प्रवासविरुद्धं खल्वेतत्प्रावरणम्" इति सम्बन्धः। प्रवासविरुद्धम् = प्रवासे भर्तृविरहावस्थायां विरुद्धं विपरीतम्। पतिव्रताया लक्षणे प्रवासे मालिन्यं कृशत्वञ्चोक्तं नत्वात्मनः शृङ्गारीकरणमिति भावः। **शारदचन्द्रेति**—शरदि भवः शारदः सचासौ चन्द्रः तस्य किरणानां मयूखानां राशिः समूहः तद्वत् परिपाण्डुरं परितः पाण्डुरं शुभ्रमित्यर्थः। तथा–सुरभिः इष्टगन्धः, तेन यो बहुलः प्रचुर आमोदो हर्षः तेन समारब्धमुपक्रान्तं मधुकराणां भ्रमराणां कुलेन वृन्देन यत्सङ्गीतं, तेन मनोहरं हृद्यम्,। मकरन्दाऽमन्दसन्दोहलुब्धभ्रमरमालागुञ्जनरञ्जितमित्यर्थः। एतत् = त्वदीयं प्रावरणम् = उत्तरीयम्।

* इष्टगन्धः सुगन्धिः स्यात्सुरभिर्घ्राणतर्पणः" इत्यमरः। "आमोदो गन्धहर्षयोः" इति मेदिनी। "आमोदः सोऽतिनिर्हारी" इत्यमरोक्तेस्तु सुरभिघ्राणतर्पणो यो गन्धः सचाऽसौ बहुलश्चामोदश्च—अर्थात् प्रचुरघ्राणतर्पणमनोहारी गन्धः तेन समारब्धमित्येवं व्याख्येयम्। शिष्टं पूर्ववत्।

**सी**—(१) सहि, जदा अहं महाराअसासणेण वणप्पवासे परिचत्ता चित्तऊडं परिच्चइअ दक्खिणापहं पत्थिदा तदा चिरणिवाससमुप्पण्णसहिसिणेहाए चिन्ताउलाए वणदेवदाए मायावईए सुमरणणिमित्तं चंदधवलं वासिदसुअंधं अत्तणो दिव्वं उत्तरीअअं मम पणीदं। तं अज्जउत्तस्स मम वि हत्थे अच्चन्तसहीभूदं चिरदुःखसहायंत्ति एत्थ अत्ताइ साअरं धारिदं। (इति रोदिति)

(१) सखि! यदाहं महाराजशासनेन वनप्रवासे परित्यक्ता चित्रकूटं परित्यज्य दक्षिणापथं प्रस्थिता तदा चिरनिवाससमुत्पन्नसखीस्नेहया चिन्ताकुलया वनदेवतया मायावत्या स्मरणनिमित्तं चन्द्रधवलं वासितसुगन्धमात्मनो दिव्यमुत्तरीयकं मम प्रणीतम्। तदार्यपुत्रस्य ममापि हस्तेऽत्यन्तसखीभूतं चिरदुःखसहायमिति अत्रात्मना सादरं धारितम्।

**महाराजशासनेन** = महाराजो दशरथः श्वशुरः तस्य शासनेन आज्ञया। **वनवासे** = चतुर्दशवर्षपर्यन्ते प्रथमे वनवासे। **परित्यक्ता** = आर्यपुत्रेण सहैव प्रेषिता सम्प्रतिवेकाकिनी। **चित्रकूटम्** = तदाख्यं प्रयागोपान्त्यवर्त्तिनं पर्वतम्। **दक्षिणापथम्** = दाक्षिणनाम्ना प्रसिद्धं भारतान्तर्वर्त्ति स्थानविशेषम्। **प्रस्थिता** = कृतप्रस्थाना गन्तुमुद्यतेति यावत्। **तदा** = तस्मिन् काले। **चिरनिवासेति**—चिरनिवासेन चिरायसहवासेन समुत्पन्नः सञ्जातः सख्याः मयस्यायाः स्नेहः प्रीतिर्यस्याः सा तया, **चिन्ताकुलया** = चिन्तया आधिना आकुलया विह्वलीभूतया। वियोगाद्धेतोरिति ज्ञेयम्। **मायावत्या**=मायावतीनाम्न्या। **स्मरणनिमित्तम्** = स्मरणार्थं चिन्हविशेषं, स्मरणं निमित्तं यस्य यस्मिन्वा। **चन्द्रधवलम्** = चन्द्र इव धवलमित्युपमितसमासः, चन्द्रवच्छुभ्रमित्यर्थः। **वासितसुगन्धम्** = वासितोऽनुवेशितः सु = सुष्ठु गन्ध आमोदो यत्र तत्। **दिव्यम्** = दिवि भवं दिव्यमलौकिकमनन्यजनसाधारणमित्यर्थः। **मम** = मह्यमिति तु विवक्षितम्, सम्बन्धविवक्षया षष्ठी। **प्रणीतम्** = दत्तम्। **तत्** = प्रावरणम्। **आर्यपुत्रस्य** = मम वल्लभस्य राज्ञो रामस्य, **ममापि** = मम च **हस्ते** = पाणौ। **अत्यन्तसखीभूतम्** = अत्यन्तमित्रतां गतं, बहुकालं सेवितत्वादिति भावः। **चिरदुःखसहायम्** = चिराय दुःखेऽपि सहैव वर्तमानम्। **इति** = हेतोः। मित्रस्य विपत्तौ त्यागानर्हत्वादिति भावः। **सादरम्** = ससत्कारम्, सार्द्रं वा। **आत्मना** = मयैव स्वीयया, **धारितम्** = परिहितम्।

य-(१)सहि मा रोदी, णहि ऐसा तपोवणवासो वणवासोत्ति पुश्चिग्रदि।

सी—(२) कहं ण रोइस्सं, कहं एदं तपोवणं आअदो अञ्ञउत्तोत्ति दिउण विद्दारं आस सअणं पत्थरेमि। एआइणी दीहणीसासेहिं रत्तिदिवं अदिवाहेमि। ता बलियं खु आवेअकारणं।

य-(३)आलक्खणीआइ एदाणि कदणाणि। तुमं एतस्सिं दीहिआतीर विहङ्गमिहुणविब्भमं अवलोअअन्ती अत्ताणं विणोदेहि। अहं वि अत्तणो णिओअं अणुचिट्ठामि। ( परिक्रामति )

---

(१) सखि! मा रोदीः, न होष तपोवनवासो वनवास इति प्रोच्यते।

(२) कथं न रोदिष्यामि? कथमेतत्तपोवनमागत आर्यपुत्र इति द्विगुण ……………… धारयामि। एकाकिनी दीर्घनिःश्वासैरात्रिन्दिवमतिवाहयामि। तद्बलवत् खलु आवेगकारणम्।

(३) आलक्षणीयानि एतानि कदनानि। त्वमेतस्मिन् दीर्घिकातीरे विहङ्गमिथुनविभ्रममवलोकयन्ती आत्मानं विनोदय, अहमपि आत्मनो नियोगमनुतिष्ठामि।

---

मारोदीः = विलापं माकार्षीः। "नह्येष" इति। महानुभावस्य भगवतो वाल्मीकेराश्रमे तवाऽयं निवासो वनवासतुल्यो नास्ति सकलप्रासनिवृत्तेरिति यज्ञवती सीतां समाश्वासयति। सीता स्वरोदने हेतुं दर्शयति—**कथमिति**। एकाकिनी = असहाया। दीर्घनिश्वासैः = लम्बमानैरुच्छ्वासैः। **रात्रिन्दिवम्** = रात्रौ च दिवा च रात्रिन्दिवम्। "**अचतुरविचतुर**"—(५।४।७७) इत्यनेन समस्तं निपात्यते। तत् = तदेवेत्यर्थः। बलवत् = प्रबलम्, आवेगकारणम् = हृदयक्षोभजनकं दुःखहेतुरित्यर्थः।

यज्ञवती पुनः समाश्वासयति—**आलक्षणीयानीति**। अचिन्तनीयानि अवश्यभवितव्यानीति यावत्। "अलक्ष०" इति युक्तम्। कदनानि=अनर्थाः। **विहङ्गमेति**-विहङ्गमाना पक्षिणां चक्रवाककलहंसादीनां मिथुनस्य द्वन्द्वस्य स्त्रीपुंसयुगलस्य विभ्रमं विलासम्, अवलोकयन्ती=पश्यन्ती। आत्मानम्=मनः। विनोदय = हर्षय। आत्मनो नियोगम् = स्वकर्तव्यम्। अनुतिष्ठामि = करोमि।

सी—(१) (दीर्घिकामालोक्य) अइधण्णं खु एदं रायहंसमिहुणं एवं अणासादिअ विरहं समाअमसुहं अणुहोदित्ति णत्थि दंपईणं मम विरहसमो उपदेसणिउणो उपज्झायो, जेण पक्खिणो वि अण्णोण्णाहिअग्गहणसमत्थललिअमहुरा चाडुप्पओअं पत्थावयन्ति ।

(१) अतिधन्यं खल्वेतद्राजहंसमिथुनमेवमनासादितविरहं समागमसुखमनुभवतीति नास्ति दम्पत्योर्मम विरहसम उपदेशनिपुण उपाध्यायः, येन पक्षिणोऽपि अन्योऽन्यहृदयग्रहणसमर्थललितमधुराश्चाटुप्रयोगं प्रस्थापयंति ।

" चक्रवत्परिवर्त्तन्ते दुःखानि च सुखानि च " इत्युक्ते नैकान्तिकं कस्यचित्सुखं दुःखं वा भवति इति धैर्यमास्थेयम् । यद्धंसमिथुनदर्शनेच केचित् चक्रवाकादयो रात्रौ वियुज्यन्ते, कलहंसादयश्च रात्रिन्दिवा सङ्गताएव तिष्ठन्तीत्यनैकस्य संसारस्याऽऽलोचनीयम्, तथाऽपि च विरहदुःखस्यान्तोऽवश्यं भविष्यति, भवति हि रात्रौ वियुक्तापि चक्रवाकी दिवा सङ्गता एवं तवापि स्याद्वल्लभसमागम इत्यभिप्रायो यत्तव भाः ।

सीता—दीर्घिकाम् = सरसीम् । आलोक्य = दृष्ट्वा अतिधन्यम् = अतिसुकृति । " सुकृती पुण्यवान् धन्यः " इत्यमरः । "धनगणं लब्धा" (४।४।८४) इति सूत्रेण धनशब्दाद् यत्प्रत्ययः । धनं लब्धेति धन्यः । "धन्या धात्र्यामलक्ष्म्योः स्याद् धन्यं पुण्यवति त्रिषु" इति विश्वमेदिन्यौ ।

राजहंसमिथुनम् = कलहंसस्त्रीपुंसयुगलम् । तत्कीदृशमित्याह—न आसादितः प्राप्तो विरहो वियोगो येन तत् । समागमसुखम् = सङ्गमानन्दम् । अनुभवति = भुङ्क्ते । "एतद्राजहंसमिथुनं समागमसुखमनुभवतीति" सम्बन्धः । विरहसमः = विरहेण समस्तुल्य इति विरहसमः, उपदेशनिपुणः = शिक्षाचतुरः । "उपाध्यायः" = उपेत्यास्मादधीयत इति । "इङश्च" (३।३।२१) इति घञ् । अध्यापक इत्यर्थः । उक्तञ्च मनुना—

य—(१) (निर्वर्ण्य) जह एसो सम्भ्रमतक्खणविमुत्तासणो परिग्गहधंसदेससमुस्खित्तवक्कलो सुग्रसग्रमणपाउग्रो विंमयोफुल्ललोग्रणो सव्वो जेव (एव्व) मुणिग्रणो एग्रमुसग्रो ग्रपसरिदो तह जाणामि संपत्तेण महाराएण होदव्वंति। (इति निष्क्रान्ता)

(ततः प्रविशति रामः सचिन्तः कण्वश्च)

कण्वः—ग्रादिष्टोऽस्मि भगवता वाल्मीकिना—कण्व ! कण्व ! दाशरथिं नैमिशारण्यरामणीयकदर्शनेन विनोदय—इति। एष पुनश्चिन्तापराधीनत्वात्पुरोगामिनमपि मां नावगच्छति। तथा हि—

(१) यथाय ससम्भ्रमतत्त्क्षणविमुक्तासन. परिग्रहसदेशसमुत्क्षिप्तवल्कल· · ·· ·· ·····विस्मयोत्फुल्ललोचन सर्व एव मुनिजनः एकमुखकः अपसृत स्तथा जानामि सम्प्राप्तेन महाराजेन भवितव्यमिति।

"**यथैष**" इति। ' एष मुनिजन" इति सम्बन्ध। **ससम्भ्रमेति**—ससम्भ्रम सत्वर तत्क्षणे श्रवणकाल एव विमुक्त परित्यक्तमासन स्वस्थितिर्येन स। परिग्रहस्य परिवारस्य शिष्यादेरसदेशे समुत्क्षिप्तानि परिधापितानि वल्कलानि वृक्षत्वचो येन सः। विस्मयेन उत्फुल्लानि विकसितानि लोचनानि नेत्राणि यस्य स। सर्व एव मुनिजनः=मुनिसङ्घः, एकमुखक = एकस्मिन्नेव (आगतस्य रामस्य स्वागतरूपे कर्मणि) मुख यस्य स', अपसृत = प्रस्थित। "तथा जानामी"त्यादि स्पष्टम्।

रामपात्रप्रवेशं सूचयति "**तत.**" इति। कण्वो रामस्य चिरन्तनसखा रामसत्काराय वाल्मीकिप्रेषितो मुनिविशेषः। "**सचिन्त**" इति रामकण्वयो द्वयोर्विशेषणम्। राम सचिन्त सीतावियोगात्, कण्वस्तु सीताविरहिणो रामस्य दशावलोकनात्। **नैमिशारण्येति**—नैमिशारण्यस्य यद् रामणीयक सौन्दर्यं तस्य दर्शनेन। दाशरथिम् = दशरथस्यापत्य पुमान् दाशरथिस्त राममित्यर्थ। विनोदय=हर्षय। रामणीयमेवेति "रामणीयकम्" स्वार्थे कन्।

एष = राम। चिन्तापराधीनत्वात् = चिन्तया = सीताविरहजनितमनोग्लान्या पराधीन. = परायत्त तस्य, भावस्तत्त्व तस्मात्, चिन्ताव्याकुलत्वादित्यर्थः। पुरोगामिनम् = पुर प्राप्त मा नावगच्छति = कण्वोऽयमिति पूर्वपरिचितमपि नावधारयति। यथा सचिन्तो दृष्टस्तथा वर्णयति—"**तथाहि**"

स्खलति मुहुरयं समेऽपि मार्गे
निभृतगतिः प्रविलम्बते विदूरात् ।
अवनतवदनो नितान्तरम्ये
नच नयने निदधाति काननेऽस्मिन् ॥ १ ॥

( उपसृत्य ) भो राजन् !

रा—हन्त ! वयस्य ! तापसविरुद्धमामन्त्रणम् । अथवा वयसः परिणामेनेदमपराद्धं न भगवता ।

---

इति । स्खलतीति—अयम् = रामः, समे = विषमेतरे, अत्रापि मार्गे = वर्त्मनि, मुहुः = पुनः पुनः स्खलति = सञ्चलति च्युतपदो भवतीत्यर्थः । निभृतगतिः = निभृता मन्थरा गतिर्यस्य सः शिथिलितपदन्यासः, विदूरात् = दूरतरम्, प्रविलम्बते = अत्यन्तं विलम्बं करोति अर्थात् अग्रे गन्तव्यं मार्गं परित्यज्य पश्चान्मार्गं प्रविचलति, किंवा अल्पीयस्यपि गन्तव्ये मार्गे अत्यन्तं विलम्बं करोति । ( किञ्च ) अवनतवदनः = अवनतं नम्रं वदनं मुखं यस्य सः तादृशः सन्, नितान्तरम्ये = अतिशयरमणीयेऽपि अस्मिन् कानने = वने, नयने = नेत्रे, नच = नैव निदधाति = दत्ते सञ्चारयतीत्यर्थः । कानने नयननिध्यानाभावम्प्रति अवनतवदनत्वं हेतुरिति पदार्थहेतुकः काव्यलिङ्गमलङ्कारः । चिन्तातुरस्य जातिरपि । "अथातिशयो भरः·········तीव्रैकान्त नितान्तानि गाढबाढदृढानि च" इत्यमरः । पुष्पिताग्राभिधं वृत्तम् । लक्षणमुक्तं प्राक् ॥१॥

उपसृत्य = राममिति शेषः । आमन्त्रयते "भो ! राजन्" इति ।

"हन्त—विषादे वाक्योपक्रमे वा । "हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः" इति । वयस्य=सखे ! बालमित्र कण्व ! "राजन्" इति माम्प्रति बालसखस्य तवामन्त्रणम् = सम्बोधनेनाभिमुखीकरणं तत् तापसविरुद्धम् = तापसानां तपोधनानां विरुद्धं विपरीतम् । तापसा हि राज्ञामपि पूज्याः, त्वञ्च मे बालमित्रं तस्मादेवमामन्त्रणं न शोभते किन्तु—"राम !" इत्येवमेव सम्बोधनीयोऽस्मीति रामस्याशयः । तापसत्वेन बालमित्रत्वेन च सर्वथामुचितमेवेति स्फुटोऽर्थः । अथवेति पक्षान्तरमाह—वयसः—आयुषो जीवितकालस्य, परिणामेन=वार्धक्येन, इदमपराद्धम्=एतद् एवाऽपराधः वाक्ये दद्वत्स्वाभ्यास

अहं रामस्तवाभूवं त्वं मे कण्वश्च शैशवे ।
यूयमार्या वयञ्चाद्य राजानो वयसा कृताः ॥ २ ॥

क—अहो धीरोदात्तोऽयमुपालम्भः ।

रा—उच्यतां यद्विवक्षितम् ।

क—सुरभिकुसुमगन्धैर्वासिताशामुखानां
फलभरनमितानां पादपानां सहस्रैः ।

---

आसीत् स इदानीं तारुण्ये सत्कारविशेषरूपेण परिणत इत्यर्थः । "आयुर्जीवितकालो ना जीवातु जीवनौषधम्" इत्यमरः ।

एतदेवोपपादयति—अहमिति । शैशवे=बाल्ये अहं तव रामोऽभूवम् त्वञ्च मे कण्वः "अभूः" रितिशेषः । अर्थात्—बालभावे "हे राम ! हे कण्व" इत्येवंनामग्रहणपूर्वक एव आवयोःपरस्परमामन्त्रणव्यवहार आसीत् । अद्य=सम्प्रति वयसा=युवावस्थाया यूयम् आर्याः वयञ्च राजानः कृताः । सम्प्रति वयं भवतः "आर्या !" इति सम्बोधयामहे, भवन्तश्चस्मान् 'राजन्!' इत्येवमामन्त्रयन्ते सोऽयमवस्थाभेदनिबन्धनो व्यवहार उचित एवेति भावः । अनुष्टुप् वृत्तम् ॥ २ ॥ कण्वो रामस्य बुद्धिवैभवं प्रशस्तं मन्वान आह—"अहो" ! इति । आश्चर्यमित्यर्थः । अयमुपालम्भः=परिभाषणम्, धीरोदात्तः=धीरश्चासावुदात्तश्च । धैर्यान्वितो हृदयङ्गमश्च । रामोऽपि नायको धीरोदात्त एव । "धीरो धैर्यान्विते स्वैरे बुधे क्लीबन्तु कुङ्कुमे" इति व्याख्यासुधायाम् । "उदात्तो दातृमहतोर्हृद्ये च स्वरभिदयपि" इति हैमः । राम आह—उच्यताम्=निगद्यताम्, विवक्षितम्=वक्तुमिष्टम् ।

सुरभीति । हन्त ! इति हर्षे, कच्चिदिति प्रश्ने । "कच्चिदयं वनान्तः ते हृदयं रमयति" इति क्रियाकारकसम्बन्धः । सुरभिकुसुमाना सुरभीणि च तानि कुसुमानि पुष्पाणि तेषा घ्राणतर्पणकराणा पुष्पविशेषाणां गन्धैः, वासिताशामुखानाम्=वासितानि सुरभीकृतानि आशानां दिशां मुखानि प्रदेशविशेषा यैस्तेषाम्, तथा—फलभरनमितानाम्=फलाना भरेण अतिशयेन नमिताना नम्राणाम्, पादपानाम्=तरूणाम्, सहस्रैः=तादृशैरसङ्ख्यातैस्तरुभिः,

विरचितपरिवेषश्यामलोपान्तरेखो
रमयति हृदयं ते हन्त ! कच्चिद्वनान्तः ॥ ३ ॥

रा—बहुमाननिरन्तरीकृतमानसं मां तपोवनमिदं रमयति न रमयतीति वचनावकाश एव नास्ति । पश्य—

दावाग्निं क्रतुहोमपावकधिया यूपास्थया पादपान्-
अव्यक्तं मुनिगीतसामगतया भक्त्या शकुन्तस्वनम् ।

---

विरचितेति—विरचितेन निर्मितेनोद्भावितेन परिवेषेण परिमण्डलेन श्यामला = कृष्णवर्णा उपान्ते अन्तसमीपवर्तिनि प्रदेशे रेखा राजिर्यस्य स एवम्भूतो वनान्तः=वनप्रदेशः, कच्चित् ते=तव हृदयम्=मनः, रमयति=सुखयति सन्तोषयतीति यावत् । कवेर्वनान्तविषयकरतिसत्त्वाद्भावाभासोऽयम् । वृत्त्यनुप्रासश्चालङ्कारः । मालिनी वृत्तम्, लक्षणमुक्तं प्राक् । "गन्धः सम्बन्धलेशयोः । गन्धकामोदगर्वेषु" इति हेमः । "सुरभिर्घ्राणतर्पणः" "परिवेषस्तु परिधिरुपसूर्यकमण्डले" "कच्चित्कामप्रवेदने" इति सर्वत्रामरः । "परिवेषः स्यात्परिधौ परिवेषणे" इतिमूर्धन्यान्ते रुद्रः ॥३॥

राम आह—बहुमानेति—बहुमानेन = बहुना प्रचुरेण मानेन सत्कारेण निरन्तरीकृतं निरवकाशीकृतमर्थात् सत्कारप्राचुर्यभरितं मानसं यस्य सः तं माम्, इदं तपोवनं "रमयति न रमयति" इति वचनस्यावकाशोऽवसर एव नास्ति । यथाचैतत्तथा दर्शयितुमाह—"पश्य" इति ।

दावाग्निमिति । अस्मिन्नैमिषे=नैमिषक्षेत्रे दावाग्निम् = वनवह्निम्, क्रतुहोमपावकधिया = क्रतौ यज्ञे होमः मन्त्रोच्चारणपूर्वकमाहवनीयादिवह्नौ हविःप्रक्षेपः सः क्रतुहोमः यस्य सः पावकोऽनलोऽर्थाद् आहवनीयाद्यग्निस्तद्धिया तद्बुद्ध्या सम्भावयन् = मानयन् । दावानले होमानलभावनां कुर्वाण इत्यर्थः । सम्भावयन्नित्यस्यानेकत्र सम्बन्धः । एवम्=पादपान् = आश्रमस्थान् द्रुमान् यूपास्थया = यूपो यज्ञस्तम्भः तस्य तस्मिन् वा या आस्था श्रद्धा सा यूपास्था तया यूपास्थया = यूपबुद्ध्या सम्भावयन् पादपेषु यज्ञियस्तम्भबुद्धिं तन्वानः । अव्यक्तम्=वर्णादिस्फोटविहीनमस्फुटमित्यर्थः शकुन्तस्वनम् = शकुन्तानां । पक्षिणां स्वनं शब्दम्, मुनिगीतसामगतया = मुनिभिर्गीतं यत्साम

वन्यांस्तापसगौरवेण हरिणान् सम्भावयन्नैमिशे
सोऽहं यन्त्रणया कथं कथमपि न्यस्यामि पादौ भुवि ॥ ४ ॥

क—युक्तरूपोऽयं धर्मैकपरायणस्य महाराजस्य सकलजगदभ्युदय-

गीतात्मकः सामवेदः, उक्तञ्च जैमिनिमुनिना पूर्वमीमांसायाम्—"गीतिषु सामाख्या ( २।१।२४ ) इति, एतादृशसामगतया सामनिष्ठया भक्त्या = परानुरक्तिरूपया श्रद्धया सम्भावयन् पक्षिणां शब्देषु सामाधियं विदधानः, वन्यान् = वने भवान् हरिणान् = मृगान्, तापसगौरवेण = तपस्विजनयोग्येन सत्कारेण सम्भावयन्, नैते हरिणाः किन्तु तपोधना एवैत इत्येवरूपेण वन्यमृगेषु तपस्विबुद्धिमाकलयन् अर्थात्—दावानलमाहनीयं, पादपान् यूपान्, शकुन्तस्वनं मुनिगीतसाम, हरिणान् तापसान् मन्वानः, यन्त्रणया = पीडयेव, कथं कथमपि=महता क्लेशेन, भुवि = नैमिशभूभागे, पादौ = चरणौ, न्यस्यामि= स्थापयामि। एवं नाम मयि श्रद्धातिरेको जागर्ति यदग्रत्यं तृणमप्यपराद्धं न भवेदिति रामहृदयम्।

धार्मिकस्य जातिरियम्। एवमनया स्वभावोक्त्याऽपह्नुतिरपि व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः। अनुप्रासस्तु स्फुट एव।

(को०) "दवदावौ वनारण्यवह्नी" "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" "कृशानुः पावकोऽनलः" XXX "शकुनिशकुन्तशकुनद्विजाः" इति सर्वत्रामरः।

(का०) युवन्त्यस्मिन् पशुमिति यूपः। युधातोः—"कुयुभ्याञ्च" ( ३०३।२७ ) इत्यौणादिकः पः प्रत्ययः धातोरुकारस्य दीर्घश्च।

अमी यूपः खादिरो वा बैल्वो वा भवति। अस्य परिमाणादिर्यथा स्मृतौ—

चतुर्हस्तो भवेद्यूपो यज्ञवृक्षसमुद्भवः।
वर्तुलः शोभनः स्थूलः कर्षको यूपमौलिकः ॥ इत्यादि ॥

शार्दूलविक्रीडितं छन्दः। ४॥

कण्वो महाराजस्य धर्मपरायणतां प्रशंसति—युक्तरूपोऽयमिति। "अयं महाराजस्य नैमिशे बहुमानो युक्तरूपः" इति सम्बन्धः। धर्मैकपरायणस्य = धर्मे—चोदनालक्षणेऽर्थेऽभ्युदयनिःश्रेयसहेतुभूते श्रौते स्मार्ते च ।

निःश्रेयसहेतोर्निष्प्रत्यूहतपःसिद्धिक्षेत्रे पूर्वराजर्षिवंशाध्यासिते नैमिशे वहुमानः ।

> आनाकमेकधनुषा भुवनं विजित्य
> पुण्यैर्दिवः क्रतुशतैर्विरचय्य मार्गम् ।
> इक्ष्वाकवः सुतनिवेशितराज्यभारा
> निःश्रेयसाय वनमेतदुपाश्रयन्ते ॥ ५ ॥

---

स्तत्परो यस्तस्य, अथवा—धर्म एकमद्वितीयं परायणं परमाश्रयो यस्य सः तस्य, ऐकान्तिकधर्मनिष्ठस्येत्यर्थः । सकलजगदिति—सकलस्य समग्रस्य जगतश्चराचरस्य योऽभ्युदयः स्वर्गादिसुखं, निःश्रेयसं = मोक्षाख्यं सुखं च तस्य हेतोः कारणस्य । "एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्" ( माण्डूक्य ६ ) "तथेशः सर्वाधिपत्यं कुरुते महात्मा" ( श्वे२ ता० ५ । ३ ) "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते" गी० ) इत्यादिश्रुतिस्मृतिषु भगवानेव सर्वकारणं प्रतिपादितः तस्मात्स एव स्वर्गमोक्षयोरपीति ज्ञेयम् । कथम्भूते नैमिशे—निष्प्रत्यूहेति—निष्प्रत्यूहा = निरन्तराया या तपःसिद्धिः अणिमादिरूपा मोक्षस्वरूपावाप्तिरूपा वा, तस्याः क्षेत्रे उत्पत्तिस्थाने, यत्र तपश्चरतां नकोऽपि विघ्नो भवति, सिद्धिलाभश्चावश्यम्भावीति भावः । तथा—पूर्वे ये राजर्षयः तेषां वंशेनाध्यासितेऽधिष्ठिते, यत्र पूर्वे राजानोऽपि ऋणत्रयापाकरणं विधाय तपश्चेरुस्तादृशे । एतदेव दर्शयति—आनाकमित्यनेन । एकधनुषा = एकेन धनुषा = शरासनेन आनाकम् = नाकं स्वर्गः तदवधि, भुवनम् = भूमण्डलं जगदित्यर्थः, विजित्य = वशीकृत्य, पुण्यैः = पवित्रैः, क्रतुशतैः = क्रतूनामर्थादश्वमेधानां शतैः शतगुणितैः क्रतुभिरित्यर्थः । दिवः = स्वर्गस्य, मार्गम् = पन्थानम्, विरचय्य = रचयित्वा, सुतेति—सुते राज्यवहनक्षमे सूनौ निवेशितः स्थापितो राज्यभारो राष्ट्रधूर्यैः ते, इक्ष्वाकवः = इक्ष्वाकुवंशभवा नरपतयः, निःश्रेयसाय = दुःखात्यन्तनिवृत्तिपूर्वकपरानन्दप्राप्तिरूपाय मोक्षाय, एतादृशमोक्षलाभार्थमित्यर्थः, एतत् = नैमिशं नाम वनम् = अरण्यम्, उपाश्रयन्ते = सेवन्ते । अत्रैवागत्य सकलाः कामनाः परिहृत्य यमनियमादीनि मुक्तिसाधनानि कुर्वन्तीति भावः ।

रा—( प्रणमति )

क—इदमनन्यतपोवनसाधारणं नैमिशस्य माहात्म्यमवलोकय—

अस्मिन् सन्निवस-महेश्वरशिरस्ताराधिपज्योत्स्नया
मिश्रीभूय कवोष्णतामुपगतस्तिग्मो निदाघातपः ।
न म्लानिं तरुपल्लवेषु सरसां तोयेषु नैव क्षयं
सन्तापं न जनस्य किन्तु जनयत्यालोकमात्रं दृशाम् ॥६॥

---

अन—"एकधनुषा" इति कथनेन समरे तेषां धनुर्भङ्गाभावेनापूर्वसामर्थ्यं सूचितम्, अपरशस्त्रस्य तेषामपेक्षैव नाभूदिति भावः। "आनाकम्" इत्यत्र "आङ्मर्यादाऽभिविध्योः" ( २ । १ । १३ ) इत्यनेन पञ्चमीसमासः, स चाव्ययीभावसञ्ज्ञकः । पक्षे "आनाकात्" इत्यपि भवति । "इक्ष्वाकवः" इत्यत्र "तद्राजस्य बहुषु तेनैवास्त्रियाम्" ( २।४ ६२ ) इत्यनेन "जनपदशब्दात् क्षत्रियादञ्" ( ४ । १ । १६८ ) इतिविहितस्याञो बहुषु लुक् । ( ऐक्ष्वाकः, ऐक्ष्वाकौ, इक्ष्वाकवः )। वसन्ततिलकावृत्तम् ॥ ५ ॥

कण्वो नैमिशमाहात्म्यप्रदर्शनेन रामोक्तिमेव समर्थयते—"अस्मिन्" इति । अस्मिन्=नैमिशारण्ये तिग्मः=तीक्ष्णोऽपि निदाघातपः=ग्रैष्मः (सौरः) प्रकाशः, सन्निवसन् अनारतं वासं कुर्वाणो यो महेश्वरो महादेवः तस्य शिरसि उत्तमाङ्गे ( विद्यमानस्य ) ताराधिपस्य चन्द्रस्य ज्योत्स्नया=कौमुद्या सहेति शेषः, मिश्रीभूय=सङ्गतो भूत्वा, कवोष्णताम्=ईषदुष्णभावम्, उपगतः=प्राप्तः सन्, तरुपल्लवेषु=तरूणां द्रुमाणां पल्लवेषु कोमलपत्रेषु म्लानिम्=हर्षक्षयं शुष्कताविशेषं, न=नैव जनयति=उत्पादयति ( जनयतीत्यस्य प्रत्येकवाक्येनान्वयः ) सरसाम्=सरोवराणां तोयेषु=नीरेषु, क्षयम्=शोषं नैव जनयति । जनस्य=लोकस्य ( देहे इति शेषः ) सन्तापं=तप्ततां न जनयति, किन्तु—दृशाम्=दृष्टीनाम्, अर्थात् जनस्य दृशाम्, आलोकमात्रम्=केवलं प्रकाशं जनयति=ददाति। यावता घटपटादिपदार्थसाक्षात्कारे दृशामुपकारः स्यात्तावानेवात्र सूर्यः प्रकाशत इति भावः । एवञ्च—लोकदृष्टयाप्यहो माहात्म्यं नैमिषारण्यस्य, किमु तत्सम्यगस्याभ्युदयानिःश्रेयसप्रदातृत्वविषये इति पूर्णं फलितम् ।

किञ्च,—

एतस्मिन्विततध्वरे प्रतिदिनं सान्निध्ययोगाद्धरे-
स्त्यक्त्वा नन्दनचन्दनावनिरुहानालानतां प्रापिताः ।
बिभ्रत्युच्चनिवेशितेन नयनेनालोकनीया अमी
मत्तैरावणकण्ठरज्जुवलयन्यासक्षतिं पादपाः ॥७॥

---

अत्र तरुपल्लवीयम्लान्यभावादिकम्प्रति चन्द्रशेखरचूडाश्रितचन्द्रचन्द्रिकामिश्रीभवनपूर्वकप्राप्तकोष्णभावो निदाघातपदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। येन च देशान्तरेभ्यो नैमिषारण्यस्य व्यतिरेकोऽपि व्यज्यते। सम्पृक्तमद्रस्तूपवर्णनादुदात्तालङ्कारोऽपि। अनयैव दिशाऽलङ्कारान्तरमप्यूह्यम्। गुणरीत्यादिकमपि अस्मद्व्याख्यातमार्गेण कल्पनीयम्। ग्रन्थगौरवभयात्तु नोच्यते।

" शिवः शूली महेश्वरः " " नक्षत्रेशः क्षपाकरः " " चन्द्रिका कौमुदी ज्योत्स्ना " " कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति " इति सर्वत्रामरः। "ज्योत्स्ना चन्द्रातपेऽपि स्यात् ज्योत्स्नायुक्तनिशि स्मृता" इति व्याख्यासुधा।

ज्योतिरस्त्यस्यामिति "ज्योत्स्ना"। "ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसा" ( ५।२।१४ ) इत्यनेन मत्वर्थे निपात्यते। शार्दूलविक्रीडितं वृत्तम् ॥६॥

( प्रकारान्तरेण ) भूयोऽपि नैमिषमाहात्म्यं दर्शयति—एतस्मिन्निति। विततध्वरे = विततः विशेषेण ततः नैरन्तर्येण प्रवृत्ता अध्वरा यज्ञा यत्र तस्मिन्, एतस्मिन् = नैमिषारण्ये, हरेः = इन्द्रस्य प्रतिदिनम् = दिने दिने इतीति प्रतिदिनं प्रतिदिवसम्, सान्निध्ययोगात् = सन्निकर्षेण: सान्निध्यम् = सामीप्यं तस्य योगः सम्बन्धः तस्माद्धेतोः, नन्दनेति—नन्दनमिन्द्रोद्यानं, तत्र ये

गा—( विलोक्य ) सततप्रवृत्तमहाध्वरेण धर्मारण्येन नन्दनवनमपि

कण्ठरज्जुना वलयस्य कङ्कणस्य न्यासेन अर्थात् घर्षणेन या क्षतिः त्वगुच्छेदरूपा ता बिभ्रति = धारयन्ति ।

अत्र निरन्तरं यज्ञाः प्रवर्त्यन्ते, इन्द्रश्च सवाहनोऽत्रैव तिष्ठति, अत्रत्यैः पादपैः सह बध्यमानो महाबली अपि तस्यैरावणो नाम गजो वृक्षाणां त्वगुच्छेदमात्रमेव करोति, न तु तेषामुत्पाटने समर्थः इति तद्बन्धनसहनक्षमपादपमाहात्म्यकथनेनारण्यमहिमैव दर्शितः ।

ऐरावणस्य तथाविधपादपबन्धनासम्बन्धेऽपि तद्वर्णनादसम्बन्धातिशयोक्तिरलङ्कारः । "सम्बन्धातिशयोक्तिः स्यादयोगे योगकल्पनम्" इति चन्द्रालोके जयदेवः । अनुप्रासस्तु स्फुटः । गौडी रीतिः । ओजो गुणः । अरण्यविषयकरतिसत्त्वाद् भावो भावाभासेत्यादिकं यथायथं विचार्यम् ।

( व्या० ) "बिभ्रति" इति भृञ्धातो र्लटि रूपम् । ( डुभृञ्धारणपोषणयोः ) "श्लौ ( ६।१।१० ) इत्यनेन धातोर्द्वित्वे, झस्वे । "भृञामित्" (७।४।७६) इत्यनेन अभ्यासस्य इत् ।

"यज्ञः सवोऽध्वरो यागः" इत्यमरः । "अध्वरः सावधाने स्याद्वसुभेदे क्रतौ पुमान्" इति मेदिनी । "ध्वृ" कौटिल्ये । अस्माद्धातो पचादित्वात् ( ३ । १ । १३४ ) अच् । अध्वानं स्वर्गमार्गं राति ददातीति "अध्वरः" । "नन्दनं वनम्" इतीन्द्रोद्यानमित्यमरः । "अथ नन्दनम्, इन्द्रोद्याने नन्दनस्तु तनये हर्षकारिणि" इति हैमः । नन्दयतीति "नन्दनः"। ल्यु प्रत्ययः ( ३ । १ । १३४ ) "आलानं बन्धस्तम्भे" ...... ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः" इत्यमरः । इरया उदकेन वणति शब्दं करोतीति पचाद्यचि "इरावणः" । ततः "प्रज्ञादिभ्यश्च" ( ५ । ४ । ३८ ) इत्यणि वृद्धौ—"पूर्वपदात्संज्ञायामगः" ( ८ । ४ । ३ ) इति नस्य णत्वे च "ऐरावण" इति सिद्धं भवति । वृत्तं पूर्वोक्तम् ॥ ७ ॥

सततप्रवृत्तेति—सततं नैरन्तर्येण (एकस्मादुत्तरं द्वितीयस्य प्रारम्भेण) प्रवृत्ता महान्तोऽध्वरा यज्ञा यत्र तेन । ध्वरतिर्धूर्वतीति हिंसार्थेषु पठितो तत्प्रतिषेधोऽध्वरः, "अहिंस" इति निरुक्तकाया दुर्गावृत्तः । "अध्वरः" इति यज्ञनामेति यास्कः । धर्मारण्येन = धर्मस्योत्पत्तिस्थानभूतेन, नन्दन

क—इदमपरं न पश्यसि—

आस्मिन् कपोलमदपानसमाकुलानां
विघ्नं न जातु जनयन्ति मधुव्रतानाम्।
सामध्वनिश्रवणदत्तमनोऽवधान-
निष्पन्दमन्दमदवारणकर्णतालाः ॥ ९ ॥

रा—( विहस्य ) किमत्राश्चर्यम्—

मुनीनां सामगीतानि पुण्यानि मधुराणि च।
प्रवासिनामपि मनो हरन्ति किमु दन्तिनाम् ॥ १० ॥

---

रामवचः श्रुत्वा पुनरपि कण्वोऽरण्यमहिमानं कीर्त्तयते—एतादिमामिति। अस्मिन्=नैमिशे वने, सामध्वनीति—साम्ना गीतिरूपेण उच्चार्यमाणाना सामवेदमन्त्राणां यो ध्वनिः अर्थात् गानमेव तस्य श्रवणेन आकर्णनेन दत्तस्य अर्पितस्य मनसो हृदयस्य यदवधानमेकाग्रीकरणम्, तेन निष्पन्दाः=निश्चेष्टाः, ( तथा ) मन्दोऽल्पो मदो दानवारिजनको हर्षविशेषो येषां ते च ते वारणाः गजा, तेषां कर्णा एव ताला वाद्यभाण्डानि ते, कपोलमदपानसमाकुलानाम्=कपोले गण्डपाल्यां यो मदो दानवारि तस्य पाने चूषणे समाकुलानां विह्वलानाम् "अहं पूर्वं पिबेयमहं पूर्वं पिबेयम्" इत्येवम्बुद्ध्या सम्यग् पर्युपरि व्यापृतानाम्, मधुव्रतानाम्=भ्रमराणाम्, जातु=कदाचिदपि, विघ्नम्, अन्तरायम्, न=नैव जनयन्ति=उत्पादयन्ति।

मत्तानां गजानां गण्डस्थलेभ्यो दानवारि प्राचुर्येण सरति, तत्पानाय भ्रमरास्तेषां गण्डपाल्यां संसजन्ति, गजाश्चोन्मादवशात् स्वभावतोऽपि कर्णचालनेन मधुपालीरुड्डाययन्ते, तावता भ्रमराणां मधुपाने विघ्न एव भवति। अत्र तु—मत्ता अपि गजाः सामध्वनिसमाकर्णनेन निस्तब्धास्तिष्ठन्ति, तेन च भ्रमराणां मधुपाने मात्रयाऽपि विघ्नो न जायते इति वस्तुवृत्तम्बोध्यम्।

अत्र—वृत्त्यनुप्रासः। वसन्ततिलकावृत्तम् ॥९॥

विहस्य=हास्यं नाटयित्वेत्यर्थः। मुनीनामिति—मुनीनाम्=मननशीलानां श्रद्धया यज्ञे कर्मणि सततप्रवृत्तानामृषीणाम्, पुण्यानि=पवित्राणि पापहरणात्, मधुराणि च,=तथा श्रवणे हृद्यानि विषयान्तरेभ्यो वृत्तेराकर्षणात्, एवम्-
२ ने सामगीतानि=साम्नां पाठाः प्रवासिनामपि=परित्यक्तस्वदेशानां विदेश

क—( आत्मगतम् ) अहो रामस्य प्रवासे महानिर्वेदः, यदयं तिर्यग्भ्योऽपि प्रवासिन एव शून्यहृदयानवगच्छति । ( प्रकाशम् ) इतस्तावदवधीयतां दृष्टिः—

मुक्त्वा वसन्तविरहेऽपि मुनिप्रभावा-
दुद्भिन्नसान्द्रकुसुमां सहकारशाखाम् ।
धावन्त्यमी मधुकराः क्रतुहोमधूम-
सन्त्रासिताः सरसि वारिरुहोदराणि ॥११॥

---

प्राप्तानामपि मनुष्याणाम्, ( विरहिणामिति तु निगूढम् ) मनः=हृदयम् हरन्ति=वशीकुर्वन्ति, ( एतच्छ्रवणेन विदेशिनामपि मनो गृहं यातुं नोत्सहते ) दन्तिनाम्=गजेन्द्राणामर्थात् अत्रैव नित्यं वसतां मत्तानामपि गजानां मनो हरन्तीति किमु वक्तव्यम् । तिर्यग्भ्योऽपि प्रवासिनः शून्यहृदया भवन्ति, तेषामपि चेतसो हरणात् सर्वथा धन्यं निरतिशयं पुण्यं धर्म्यं यशस्यञ्चैतद्वामेति भावः । अनुष्टुप् वृत्तम् ॥ १० ॥

" अहो "=आश्चर्यं खेदो वा । निर्वेदः=वैराग्यम् । तिर्यग्भ्यः=पशुभ्यः । प्रवासिनः=परदेशिनः । शून्यहृदयान्=शून्यमिष्टवस्तुविरहादन्यत्राऽसंसक्तं हृदयं चेतो येषां तान्, अवगच्छति=मनुते । अवधीयताम्=सावधानं दीयताम् ।

"मुक्त्वा" इति । क्रतुहोमधूमसन्त्रासिताः = क्रतुर्यज्ञः तत्सम्बन्धी यो होमः = देवतोद्देशेनाग्नौ हूयमानद्रव्यप्रक्षेपः तस्य ( प्रक्षिप्तद्रव्यसम्बन्धादसौरभितेन ) धूमेन सन्त्रासिताः = उपद्रवं प्रापिताः ( धूमस्थाने भ्रमरादीनां स्थितेरभावात् ) अमी = एते मधुकराः = भ्रमराः, वसन्तविरहेऽपि = वसन्तर्तोरपगमेऽपि, मुनिप्रभावात् = मुनीनां परिपक्वसमाधीनामृषीणां प्रभावात् = योगजसामर्थ्यात् उद्भिन्नसान्द्रकुसुमाम् = उद्भिन्नानि विकासमाप्तानि सान्द्राणि निबिडानि कुसुमानि = मञ्जर्यो यस्यां तां तादृशीं सहकारशाखाम् = रसालविटपम् मुक्त्वा = त्यक्त्वा सरसि = कासारे ( विद्यमानानि ) वारिरुहोदराणि = वारिरुहाणां कमलानामुदराणि कोशभागान् धावन्ति = गच्छन्ति धूमग्रस्ता भ्रमराः विकसितकमलमध्यभागे प्रविशन्ति येन धूमनिर्मुक्तिः स्यादित्यर्थः ।

रा—कथमनवरताहुतिसंवर्द्धितो धूमराशिर्मधुकरानिवास्मान् पर्याकुलयितुं प्रवृत्त । ( धूमसम्बाधां नाटयति )

क—भो ! भोः ! किं बाढं धूमेन पर्याकुलनयन इवासि संवृत्तः ।

रा—सीताविरहबाष्पेण स्मरता नित्यदुःखिते ।
बाढमायासिते भूयो धूमेन मम लोचने ॥१२॥

---

अन्योऽपि बलवता सन्त्रास्तो शून्यं स्थानं विशतीति वस्तुध्वनिः । होमधूमस्य प्राचुर्ये, तेनचर्षीणां वैदिककर्मानुष्ठाने श्रद्धातिरेकः, तेषां सद्धीभावश्चेत्यादिकं बहु व्यज्यते । "वसन्ते पुष्पसमयः सुरभिः," "आम्रश्चूतो रसालोऽसौ" "कासारः सरसी सरः" "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" इति सर्वेऽमरः । वृत्तमुक्तम् ॥ ११ ॥

कथमिति—अनवरताहुतिभिः=अनवरतं नैरन्तर्येण यथा तथा (प्रवृत्ता) या आहुतयो हूयमानाज्यादिद्रव्यप्रक्षेपाः ताभिः सवर्धितः वृद्धिं गतो धूमराशिः = धूमपुञ्जः । मधुकर निव = भ्रमरानिव, अस्मानपि पर्याकुलयितुम् = विह्वलीकर्तुम् । "धूमसम्बाधाम्" = धूमव्यथाम्, धूमोत्पादितं नेत्रयोः खेदमित्यर्थः । एतदवस्थं रामं वीक्ष्य करवः आह—"भो भोः किमि"ति । बाढम् = भृशमत्यन्तमित्यर्थः । पर्याकुलनयनः = परितः आकुले खिन्ने नयने नेत्रे यस्य सः । तच्छ्रुत्वा स्फुटितसीतादुःखो रामः आह—सीताविरहेति । स्मरता = प्रस्रवता सीताविरहबाष्पेण = सीताया विरहो वियोगः तेन यद् बाष्पं नेत्रात्स्रुतमस्रजलं तेन, नित्यदुःखिते = नित्यं सदा दुःखिते करमलीभूते मम लोचने = नेत्रे धूमेन भूयः=पुनरपि, बाढम् = भृशमत्यन्तम्, आयासिते = खेदिते । छिद्रेष्वनर्था बहुलीभवन्तीति न्यायादिति भावः ।

पूर्वन्तु सीताविरहजनिता स्रवद्बाष्पयोर्नेत्रयोः पीडाऽऽसीत्, पुनस्तत्रैव धूमजनितं दुःखमपीत्यहो चेते दुःखान्तरमिवापतितम् । अत्र—विषादनालङ्कार आभाति—तदुक्तं जयदेवेन—"इष्यमाणविरुद्धार्थसम्प्राप्तिस्तु विषादनम्" इति । सीताविरहजनितनित्यस्रवद्बाष्पाम्बुजनितं नयनदुःखनिवारणमिष्यमाणम्, परं तादृशहोमधूमयोगेन ततो विरुद्धार्थस्य भूयोनयनायासनरूपस्यार्थस्य प्राप्तिर्वर्णितः । सचेष्यमाणोऽर्थः क्वचित्स्फुटो भवति क्वचिचास्फुट इति तु वैयिनीव्याहृतिर्न शङ्कनीया ॥ १२ ॥

क—सदेनामग्रतोवर्तिनीमाश्रमदीर्घिकामवगाह्य शीतलेन सलिलेन क्षालितव्यपनीतनयनखेदं विश्रम्य मुहूर्तमत्र तिष्ठतु । अहमपि कुलपतेरग्निहोत्रवेलां सन्निधानेन सम्भावयामि । ( इति निष्क्रान्तः )

रा—( परिक्रम्य ) एतद्दीर्घिकातीरमवतरामि । ( अवतीर्य ) अहो प्रसन्नसलिलता कमलाकरस्य ! ( उदकमध्ये च्छायां निर्वर्ण्य ससम्भ्रमम् ) कथं सीताप्यत्रैव । ( हर्षविस्मयं नाटयति )

सी–( विलोक्य ) हद्धी हंसमिहुणदंसणवावुदाए मए अतक्किदसमागदो

हा धिक् हंसमिथुनदर्शनव्यापृतया मया अतर्कितसमागत

कण्वो रामखेदमपनेतुं सम्प्रत्याह—सदेनामिति—अग्रतोवर्तिनीम् = पुरतोविद्यमानाम् । आश्रमदीर्घिकाम् = आश्रमसरसीम् । अवगाह्य = स्नात्वा । शीतलेन = शिशिरेण । सलिलेन = वारिणा । क्षालितेति—क्षालितेन = धावनेन व्यपनीतो दूरीभूतो नयनयो र्नेत्रयोः खेदः क्लेशो यस्यां क्रियायां तद्यथा स्यात्तथा, विश्रम्य = श्रममपनीय । मुहूर्तम् = द्वादशक्षणपर्यन्तम् इदमपि क्रियाविशेषणम् । " ते तु मुहूर्तो द्वादशास्त्रियाम् " इत्यमरः । "लिङ्याशिष्यङ्" ... "ऊर्ध्वमौहूर्तिके" ( ३।३।१६४ ) इति निर्देशान्निपातनात् सिद्धमित्येके । कुलपतेः = वाल्मीकेरित्यर्थः । कुलपतिलक्षणं प्राहुराचार्याः—

मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् ।
अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः ॥ इति ॥

अग्निहोत्रवेलाम् = अग्नये होत्रमस्मिन्निति " अग्निहोत्रम् " सायं प्रातःकालयो र्नियमेनाऽनुष्ठेये होमकर्म तस्य वेला समयस्ताम्, सन्निधानेन=सामीप्येन, सम्भावयामि अर्थात् अग्निहोत्रवेला निकटवर्त्तिनीति निवेदयामि ।

दीर्घिकातीरम् = सरसीतटम् । अहो ! आश्चर्यम् । प्रसन्नसलिलता = प्रसन्नं निर्मलञ्च तत्सलिलं पानीयं तस्य भावस्तत्ता, कमलाकरस्य = दीर्घिकायाः । उदकमध्ये = जलस्यान्तःप्रदेशे । छायाम् = प्रतिबिम्बम् । हर्षविस्मयम् = हर्षेण मनोमोदेन विस्मयमाश्चर्यम् । स्पष्टमन्यद्याख्यातप्रायञ्च ।

" हा ! धिक् " इति । कष्टमित्यर्थः । हंसेति—हंसमिथुनस्य = हंसयुगलस्य (हंसदम्पत्योरित्यर्थः) दर्शनेऽवलोकने व्यापृतया व्यग्रया अतर्कित

अंमपुत्तो ण संलक्खिदो । ता ओसरिस्सं । ( तथा करोति )

रा—कथमसम्भाव्यैव मां प्रस्थिता सीता ।

आपाण्डरेण मयि दीर्घवियोगखेदं
लम्बालकेन वदनेन निवेदयन्ती ।
एषा मनोरथशतैः सुचिरेण दृष्टा
क्वापि प्रयाति पुनरेव विहाय सीता ॥ १३ ॥

---

आर्यपुत्रो न संलक्षितः । तदुपसरामि ।

समागतमागमनं यस्य सः । संलक्षितः = नैव प्रतीत इत्यर्थः । तत् = तस्मात् कारणात् । "अपसरामि" अस्मात्प्रदेशादिति शेषः । असम्भाव्य = असम्भाल्य मामुपेक्ष्यैवेत्यर्थः । प्रस्थिता = प्रयाता (सीता) ।

**आपाण्डरे**ति । आपाण्डरेण = समन्ततः श्वेतेन प्रियविरहजनितशुचा लौहित्यस्य शुष्कत्वात् । "विशदश्वेतपाण्डराः" इत्यमरः । "आपाण्डुरेण" इति पाठे तु—समन्ततः पीतसंवलितशुक्लेनेत्यर्थो बोध्यः । "हरिणः पाण्डुरः पाण्डुः" इत्यमरोक्तेः । तथा—लम्बालकेन=लम्बा लम्बमानाः कङ्कतिकादिव्यापाराभावादितस्ततो विसृत्वराः अलकाश्चूर्णकुन्तला यस्य तेन, वदनेन=मुखेन, मयि=मद्विषये, दीर्घवियोगखेदम्=दीर्घश्चिरकालिको यो वियोगो विरहस्तेन यः खेदः मानसी व्यथा तम्, निवेदयन्ती=प्रदर्शयन्ती एषा=समीपतरवर्तिनी, मनोरथशतैः=मनोरथाना मनःसङ्कल्पाना शतैः असङ्ख्यातैर्मनोव्यापारैर्या अनेकवारं भावनयोपनीता सैवेदानीं सुचिरेण = बहुकालानन्तरं दृष्टा = विलोकिता सीता पुनरेव=पुनरपि, विहाय=परित्यज्य मामिति शेषः, क्वापि= अनिर्दिष्टे प्रदेशे, प्रयाति=गच्छति ।

अत्र—असीताभूताया सीताच्छायाया तद्बुद्धिकरणाद् **भ्रान्तिमान**लङ्कारः । उक्तञ्च दर्पणकारेण—" **साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान्** प्रतिभोत्थितः " इति । **प्रसिद्धिविरुद्धश्च** दोषो भाति, जले प्रतिबिम्बसाक्षात्कारेऽपि आपाण्डरादितद्विशेषसाक्षात्कारस्यासम्भाव्यमानत्वात् । वसन्ततिलकावृत्तम् ॥ १३ ॥

तदेनामवलम्बे ( बाहू प्रसार्य ) नैषा वैदेही, किन्तु—

वैदेह्याः क्वापि गच्छन्त्या दीर्घिकातीरवर्त्मना।
अन्तर्गतजलच्छाया मया सैवेति वीक्षिता ॥ १४ ॥

तदस्याः प्रतिकृतेर्मूलप्रकृतिमन्वेषयामि । ( अन्वेषणं नाटयति ) निःसम्पातविविक्तमिदं दीर्घिकातीरम्, बिम्बेन च विना प्रतिबिम्बमित्यसम्भाव्यमेतत्। किमिदम् ?

सी—(१) पेक्खदे पडिकिदिं, कहं ण पेक्खदि मं अय्यउत्तो।

( विचिन्त्य ) होदु विण्णादं; मुणिप्पसादो एसो तपोवणवासिणीणं

---

( १ ) प्रेक्षते प्रतिकृतिं कथं न प्रेक्षते मामार्यपुत्रः। (—) भवतु, विज्ञातम् मुनिप्रसाद एष तपोवनवासिनीनां स्त्रीणामेतस्मिन् दीर्घिकातीरे

---

प्रयान्तीं तां गृहीतुमिच्छयाऽऽह—तदेनामिति । अवलम्बे=गृह्णामि । बाहू=भुजे । " भुजबाहू प्रवेष्टो दो "रित्यमरः। बाधज्ञाने उत्पन्ने आह—" नैषा वैदेही " इति । एषा वैदेही=विदेहस्य पुत्री जनकजा न, किन्तु—" वैदेह्याः " इति । दीर्घिकातीरवर्त्मना=दीर्घिकायाः सरस्याः तीरवर्त्मना तटमार्गेण क्वापि=ममाज्ञाते स्वाभीष्टे प्रदेशे गच्छन्त्याः=प्रयान्त्याः वैदेह्याः=जानक्याः, अन्तर्गतजलच्छाया=अन्तर्गता अन्तःप्रविष्टा चाऽसौ जलच्छाया=जले छाया जलच्छाया जलवर्त्ती प्रतिबिम्बः, सैवेति=सा पूर्वानुभूता सीतैवेयमिति ( बुद्ध्या ) मया=रामेण वीक्षिता=दृष्टा, तस्मान्मम भ्रान्तिरेवैयमिति भावः ॥१४॥

अस्याः प्रतिकृतेः = प्रतिच्छायायाः । मूलप्रकृतिम्=मूलभूतामाकृतिं प्रतिमामिति यावत्; अन्वेषयामि=गवेषयामि । प्रतिबिम्बस्य बिम्बमन्तराऽनुपपत्तेः, बिम्बसत्तानतिरिक्तसत्ताकत्वाच्च प्रतिबिम्बस्येत्याशयेनाह—" बिम्बेन च विना " इति । असम्भाव्यम् = अशक्यम् ।

तदवस्थं रामं दृष्ट्वा सीता आह—" प्रेक्षते प्रतिकृतिम् " इत्यादि । प्रेक्षते = आलोकते । प्रतिकृतिम्=प्रतिबिम्बम् । कथं न=कुतो नेत्यर्थः । विचार्य आह—भवत्विति । मुनिप्रसादः = मुनेर्वाल्मीकेः । प्रसादः = प्रसन्नता

पुरिथश्चाय एदस्सिं दीहिआतीरे पुरसयणाणाय्र अगोअरदा। जदि पडिकिदिए वि अदसणं महेसिणा आदिट्ठं भव तदा अअ जणो अणुग्गहिदो भवे। अहं वि जाव जइ एसा पडिकिदी ण दीसइ तह ओसारिस्स। (अपसरति)

रा—तामेव तावत् प्रसन्नसलिलमध्यवर्तिनीं प्रतिमासीतामवलोकयामि। (विलोक्य कथं साप्यन्तर्हिता। (मोहं गच्छति)

सी—हद्धी ! हद्धी ! मोहं गदो अज्जउत्तो। उपसप्पिस्सं। ( परिक्रामति ) अहवा जदि सलक्खिदो अज्जउत्तो, पुणो वि कुप्पिस्सदि। तदा मुणिणअणा अविणीदेत्ति मं सम्भावइस्सति। ता गमिस्सं। (निवृत्य) अहवा

पुरुषनयनानामगोचरता। यदि प्रतिकृतेरप्यदर्शनं महर्षिणा आदिष्टं भवेत् तदाय जनोऽनुगृहीतो भवेत्। अहमपि तावत् यथैषा प्रतिकृतिर्न दृश्यते तथापसरामि।

१ हा धिक्, हा धिक्, मोहं गत आर्यपुत्रः। उपसर्पामि। (——) अथवा यदि सलक्षित आर्यपुत्रः पुनरपि कोपिष्यति। तदा मुनिजना अविनीतेति मां सम्भावयिष्यन्ति। तद्गमिष्यामि। (—) अथवा नैव युक्तायुक्त

अनुमह इत्यर्थः। यत् पुरुषनयनानाम्—मनुष्यदृष्टीनाम्। अगोचरता = अविषयता। हृदयोद्वेगमसहमाना भङ्ग्यन्तरेणाऽह—"यदि" इति। अनुगृहीत = अनुकम्पित। मम प्रतिकृतिं दृष्ट्वा आर्यो दुःखितो भविष्यति, यदीयमपि न दृश्येत तदेतद्दुःखितस्य दुःखानालोकनेनानुकम्पैव स्यादिति भाव। **एतेन** सीताया निरतिशयपतिभक्तिपरायणत्वं व्यज्यते।

राम—**तामेवेति**। पूर्वदृष्टामेवेत्यर्थः। प्रसन्नसलिलमध्यवर्तिनीम् = निर्मलजलान्तःप्रविष्टाम्। प्रतिमासीताम्=छायासीताम् सीताया छायामित्यर्थः। अन्तर्हिता = लुप्ता मम दृष्टेर्विषयतान्नता। मोहम् मूर्छाम्॥[१]

हा धिक्'—अतिनिन्दितं महत्कष्टमित्यर्थः "धिङ्निर्भर्त्सननिन्दयो" रित्यमरः। सलक्षित = अवलोकित। कोपिष्यति = क्रोधं करिष्यति। **कुप** क्रोधे। दैवादिक। लृटि रूपम्। मुनिजना = मननशीलत्वात् सभ्यताया परां काष्ठां प्राप्ता ऋषयः। अविनीता=अशिक्षिता। सम्भावयिष्यन्ति = निश्चेष्यन्ति। भावान्तरोदयाद्गमनसङ्कल्पं विहाय आह—**अथवेति**। एष काल = आर्यपुत्रस्य मोहकालः। युक्ताऽयुक्त

ण एसो जुत्ताजुत्तविआरणस्स कालो, कुप्पदु वा मं अज्जउत्तो, सुणिअणो वा अविणीदेत्ति संभावेदु । सव्वहा ण सक्कणोमि एदारिसावत्थं गदं अज्जउत्तं उवेक्खिदुं । ( परिक्रमति ) सुणंतु भवन्तो लोअवाला, अहं अज्जउत्तेण णिव्वासिदा, संपदं अविणीददाए अज्जउत्तस्स ण सासणं खु अदिक्कमामि, किंदु सोआवेअबलक्कारिदा अत्तणो ण प्पहवन्ती ईदिसं साहसं अणुचिट्ठामि । ( उपसृत्य निर्वर्ण्य ) हद्धी हद्धी ! परिचत्तचेदणो विअ अज्जउत्तो । ( परिष्वजते )

रा—( प्रत्यागमनं नाटयति )

सी—( अपसरणं नाटयति )

रा—कथमकस्मादेव रोमाञ्चितोऽस्मि ?

सी—२ तह णाम णिव्वासिदा ईदिसं साहसं अणुचिट्ठिअ जं सच्चं भीदम्हि संवुत्ता ।

---

विचारणस्य कालः, कुप्यतु वा मामार्यपुत्रः, सुजनो वाविनीतेति सम्भावयतु । सर्वथा न शक्नोमि एतादृशावस्थं गतमार्यपुत्रमुपेक्षितुम् । (——) शृण्वन्तु भवन्तो लोकपालाः, अहमार्यपुत्रेण निर्वासिता साम्प्रतमविनीततयार्यपुत्रस्य न शासनं खलु अतिक्रमामि, किन्तु शोकावेगबलात्कारिता आत्मनो न प्रभवन्ती ईदृशं साहसमनुतिष्ठामि । (——) धिक् हा धिक् परित्यक्तचेतन इवार्यपुत्रः (——)

२ तथा नाम निर्वासिता ईदृशं साहसमनुष्ठाय यत्सत्यं भीतास्मि संवृत्ता ।

---

विचारणस्य=कर्तव्याऽकर्तव्यविवेकस्य । कस्याञ्चिदवस्थायां किञ्चिदकर्तव्यमपि कर्तव्यं भवति यथा प्राणापगमकाले शौद्रान्नस्यापि ग्रहणमिति भावः ।

कुप्यतु=कोपं करोतु । मामुद्दिश्येति शेषः । उपेक्षितुम्=आर्यपुत्रविषये औदासीन्यमाश्रयितुमित्यर्थः। स्वकर्मणि लोकपालान् साक्षीकरोति—"शृण्वन्तु, भवन्त" इत्यादिना । शासनम्=आदेशम् । अतिक्रमामि = उल्लङ्घयामि । शोकावेगबलात्कारिता = शोकस्यावेगेन प्रवाहेण बलात्कारिता पराधीनतां गमिता । परित्यक्तचेतनः = परित्यक्ता चेतना सञ्ज्ञा येन सः । स्पष्टमन्यत् । पारिप्लजने— ति ।

रा—( विलपन् )—गाढमालिङ्ग वैदेहि !—

सी—(१) अपावरद्धंमि ।

रा— देहि मे दर्शनं प्रिये !

सी—(२) पहवदि सिद्धसासणं, किं एत्थ करेमि मंदभाश्रा ।

रा—त्यज्यतां दीर्घरोषोऽयं—

सी—(३) अहं वि अज्जउत्तं एव्वं विण्णवेमि ।

रा— किं नु निष्करुणा मयि ॥ १५ ॥

---

( १ ) अनपराद्धास्मि ।

( २ ) प्रभवति सिद्धशासनं, किमत्र करोमि मन्दभागा ।

( ३ ) अहमप्यार्यपुत्रमेवं विज्ञापयामि ।

---

सीतास्पर्शेन प्राप्तसञ्ज्ञो रामः विलापं करोतीति दर्शयति—"विलपन्" इति "राम" इति शेषः । हे ! वैदेहि ! जनकपुत्रि ! गाढं यथा तथा उर स्थलोपपीड-मित्यर्थः । मामिति शेषः । आलिङ्ग = आश्लिष्य परिष्वजस्वेति यावत् । एतच्छ्रुत्वा सीताऽऽह—अनपराद्धास्मीति । अपराधशून्यास्मि संवृत्तेति । रामस्य मोहावस्थायां या सम्भावना सीताया हृदि प्रावर्तिष्ट कदाचिदार्यपुत्रः कोपं करिष्यतीति सदाना रामस्य भूयो गाढालिङ्गनप्रार्थनेन दूरीभूतेत्याशयः सीतायाः ।

दर्शनं प्रार्थयते—"देहि" इति । हे ! प्रिये ! प्राणेश्वरि ! मे = मह्यम् दर्शनं देहि । येन मम चक्षुषोरपिसाफल्यं भवेदिति भावः । सीताऽऽचष्टे—"प्रभवति" इति । (एतस्मिन् दर्शनविषये) सिद्धशासनम् = सिद्धः = प्रकृते योगबलनाणिमादसामार्थ्यं प्राप्तो महामुनिर्वाल्मीकिः तस्य शासनम् = अत्र दीर्घिकापरिसरे कोपि नरो नारी द्रष्टुं न शक्यतीत्येवंरूप आदेशः स, प्रभवति = समर्थोऽस्ति, तेनाहमार्यपुत्रेण द्रष्टुमशक्या । पुनाराम आह—त्यज्यतामिति । अयं दीर्घरोषः = चिराय कोपः, त्यज्यताम् = परिहीयताम्, सम्प्रति मयि सापराधेऽपि रोष माकार्षीरित्यर्थः । ततः सीताऽऽचष्टे—अहमपीति । मयापि एवमेव प्रार्थ्यते यदार्यपुत्रेण दीर्घरोषस्त्यज्यतामित्यर्थः । पुना रामोक्तिः—"किन्विति—किन्विति प्रश्ने । मयि = त्वद्विरहातुरे रामे भवती किन्तु

सी—अयउत्त, विवरीदो खु उवालम्भो ।
रा—देवि विज्ञापयामि त्वां,—
सी—(५) अवहिदम्हि एसा, आणवेहि ।
रा— यत्त्वं चारित्रशालिनी ।
सी—(६) अहो-अच्चाहजोग्गा पाणा ।
रा—निर्वासितासि विषयात्—
सी—(७) पहवदि अय्यउत्तो सअलस्स परिअणस्स ।

(४) आर्यपुत्र ! विपरीतः खलूपालम्भः ।
(५) अवहितास्म्येषा, आज्ञापय ।
(६) अहो ! अत्यागयोग्याः प्राणाः ।
(७) प्रभवत्यार्यपुत्रः सकलस्य परिजनस्य ।

निष्करुणा = दयाशून्या वर्तते, येन ममाभ्यर्थनां न स्वीकरोषीति भावः ।
॥१५॥ सीतावाक्यानि विहाय रामस्तं पद्यमेवं पठनीयम्—

गाढमालङ्ग वैदेहि ! देहि मे दर्शनं प्रिये ।
त्यक्ताश्रमा दीर्घरोषेण किन्तु निष्करुणा मयि ॥ इति ॥

"वैदेहि देहि" इत्यत्र पादान्तादियमकम् । सीता चतुर्थपादोक्तिं श्रुत्वा कथयति—"विपरीत" इति । कठोरगर्भा निरपराधामेकाकिनी त्यजन् भवानेव निष्करुणो नाहमिति विपरीतः = अयुक्तः उपालम्भः = परिभाषणम् । पुनाराम आह—देवीति । त्वां विज्ञापयामि = प्रार्थयामि । सीता स्वधर्मं मत्वाऽऽह—आज्ञापयेति । प्रार्थनाकरणं तु ममैव दास्याः, श्रीमतामाज्ञाप्रदानं धर्म इत्याशयः सीतायाः ।

यत्त्वमिति—यत् = यस्मात्कारणात् त्वं चारित्रशालिनी = सदाचारपरायणा पतिव्रताधुरीणेत्यर्थः । एतच्छ्रुत्वा सीता स्वजीवनं साधु मनुते, तदाह—"अहो अत्यागयोग्याः" इति । रामोक्तिः—"निर्वासिता" इति । विषयात् = स्वदेशात् निर्वासिताऽसि = निष्कासितासि । सीता स्ववल्लभस्य मात्रयाऽपि दोषं कल्पयितुं न कामयते इत्याह—"प्रभवत्यार्य पुत्र" इति । स्वामी यथाज्ञापयेत्तथैव सेवकैः शिरोधार्यमिति भावः । आर्यपुत्रेण दीयमानो

रा— अस्मिन् दोषे प्रसीद मे ॥ १६ ॥
सी—(१) तुम पसीद, णिच्चप्पसण्णा अहं ।
रा—कदा बाहूपधानेन पटान्तशयने पुनः ।
गमयेयं त्वया सार्द्धं पूर्णचन्द्रां विभावरीम् ॥ १७ ॥

---

( १ ) त्वं प्रसीद, नित्यप्रसन्नाहम् ।

---

ऽयं प्रवासो मयापि सेव्यत एवेति गूढं हृदयम् । रामोक्ति—"अस्मिन्" इति । एवम्भूते चारित्र्यशालिन्या निरपराधायास्तव स्वविषयात् निर्वासनरूपे दोषे = (मत्कृते) दूषणे विद्यमानेऽपि, मे प्रसीद = ममोपरि प्रसन्ना भव, दोषमेकं क्षमस्वेत्यर्थः । सर्वान् श्लोकपादान्मेलयित्वाऽयं श्लोक एवं पाठ्यः—

देवि ! विज्ञापयामि त्वां यत्त्वं चारित्रशालिनी ।
निर्वासिताऽसि विषयाद्–अस्मिन्दोषे प्रसीद मे ॥ १६ ॥ इति

नित्यप्रसन्ना = तवाज्ञापालनं मम परोधर्म इति सर्वथा सर्वदा प्रसन्नास्मि । अर्थात् रोषस्तु भवन्तमवतैव कृतो येनाहं निर्वासिता, अहन्तु कदापि त्वयि प्राणनाथे रोषं न भजे ।

"कदा" इति । पटान्तशयने पटस्य वस्त्रस्य अन्तोऽवयवः पटान्तः, पटान्तेनास्तृतं शयनं = शय्येति पटान्तशयनं तत्र, शाकपार्थिवादित्वा मध्यमपदलोपः । हृदयङ्गमास्तरणविशिष्टायां शय्यायामिति निर्गलितोऽर्थः ।"अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयो अवयवेऽपि" इति हैमः । अथवा— "मृतावसिते रम्ये समाप्तावन्त इष्यते" इतिशब्दार्णवप्रमाणात्—अन्तं रम्यम्, पटेनान्तं रम्यं रत्युक्तासक्तम दन्तशयनं तत्रेति व्याख्येयम् । बाहूपधानेन = बाहुरेवोपधानमिति बाहूपधानं, भुजामेवोपधानं कृत्वेत्यर्थः । उपधानमुपबर्हः । त्वया सार्धम् = सह कदा = कस्यां वेलायाम्, पुनः = भूयोऽपि, पूर्णचन्द्राम् = पूर्णश्चन्द्रो यस्यां ताम्, विभावरीम् = रात्रिम्, गमयेयम् = यापयेयमित्याशंसा । अत्र—रूपकं सद्योक्तिश्च । १७ ॥

सीता—रामम्प्रति धैर्ये व्यवहारस्य गोपनीयत्वञ्च स्मारयति—

**सी—**(८) अयि! जणवादभीरुअ, एत्थ संणिहिदे जणे संतपसि।

**रा—**हा! प्रिये! जनकराजपुत्रि! देहि मे प्रतिवचनम्। (मोहं गच्छति)।

**सी—**(१) कहं पुणो वि अय्यउत्तो मोहं गदो। समस्ससं।

**रा—**(हस्तं प्रसार्य पटान्तं गृह्णाति।) कथं पटान्त इव संलक्ष्यते। कोनु खल्वेष भविष्यति ?। (विचिन्त्य) अथवा—

जनकदुहितरं विहाय देवीं
जनमपरं भुवने तथाप्रभावम्।

---

(८) अयि! जनवादभीरुक! अत्र संनिहिते जने सन्तपसि।

(१) कथं पुनरपि आर्यपुत्रो मोहं गतः। समाश्वासयामि। (पटान्तेन वीजयति)।

---

"अयि" इति। अयीत्यव्ययं कोमलालापे। जनवादभीरुक != जनानां वादोऽपवादो जनवादः ततो भीरुक! सन्त्रस्त!। अत्र संनिहिते जने = समीपवर्तिनि लक्ष्मणरूपे तापसरूपे वा जने विद्यमाने सति रहस्योक्तिपुरःसरं तापमुपैषि। तत्त्वैतन्नोचितमिति भावः।

**अथवा**—संनिहिते = एकान्ते समीपवर्तिनि जने = मादृशे सीतारूपे सन्तपसि दृष्टस्तु न, यतो जनवादभीरुकोऽसीति व्याख्येयम्।

रामः पुनर्विलपन्नाह—"हा! प्रिये!" इति। प्रतिवचनम्=प्रत्युत्तरम्। सीता रामस्य मूर्च्छामपनेतुं प्रवर्तमाना आह—"कथम्" इति। पटान्तेन = वस्त्रकोणेन। वीजयति = वातयति व्यजनव्यापारं करोति। पटान्त इव = वसनप्रान्त इव विलक्षणपवनलाद्दिति भावः। संलक्ष्यते = प्रतीयते।

"को नु खल्वेष" इति सम्भावना रामस्य। सम्भावनोत्तरं सिद्धान्तकोटिमवलम्ब्याह—"अथवा" इति। जनकदुहितरमिति। जनकस्य ब्रह्मविदो महाप्रभावस्य राज्ञो दुहितरं पुत्रीं जानकीं नाम देवीम्=दिव्यगुणोपेतां चारित्र्यशालिनीं मम पट्टाभिषिक्तां विहाय = परित्यज्य तां विनेत्यर्थः, तथाप्रभावम् = तादृशलोकोत्तरप्रभावशालिनम् अपरं जनम् = अन्यां काञ्चन

अहमिह न विलोकयामि या मे
स्पृशति पटान्तसमीरणैः शरीरम् ॥१८॥

तदेनामवलोकयामि । ( चक्षुरुन्मीलयन् ) अनवरतबाष्पपिहितलोचनतया न किञ्चिदपि दृश्यते । तस्मादेनमपकृष्य तावदपनयामि । ( तेनैवोत्तरीयान्तेनाश्रूणि प्रमार्जनाकर्षति )

सी—(उत्तरीयं मुञ्चति) (१) अज्जउत्त ण तुए परकेरएण उत्तरीएण पणअकोविदस्स विअ जणस्स अस्सुप्पमज्जणं अणुचिट्ठिदव्वं ।

---

(१) आर्यपुत्र ! न त्वया परकीयेनोत्तरीयेण प्रणयकोविदस्य (कोपितस्य) इव जनस्याश्रुप्रमार्जनमनुष्ठातव्यम् ।

---

व्यक्तिमित्यर्थः । इह = अस्मिन् लोके अहं न विलोकयामि = नैव पश्यामि । या = स्त्रीरूपा काचन व्यक्तिः पटान्तसमीरणैः = वस्त्रप्रान्तपवनैः, मे = मम शरीरम् = देहम्, स्पृशति=शरीरस्पर्शं करोति व्यजनयतीत्यर्थः । एकपत्नीव्रते मयि अन्यस्याः कस्याश्चन साहसमेव न भवितुमर्हति यैवं कुर्यादिति भावः । पुष्पिताग्राभिधं वृत्तम् ॥ १८ ॥

एनाम् = पटान्तेन वीजयन्तीं प्रियाम् । उन्मीलयन् = उद्घाटयन् । **अनवरतेति**—अनवरतं निरन्तरं बाष्पैरस्रैः पिहिते आच्छादिते लवदले ये लोचने नयने तयोर्भावस्तत्ता तया, न किञ्चिदपि दृश्यते = दृष्टिपथमवतरति । तस्मात् = कारणात्, एवम् = पटान्तम् । अपकृष्य = कर्षयित्वा, तावत् = आदौ । अपनयामि=अश्रून् प्रमार्जयामीत्यर्थः । स्पष्टमन्यत् ।

एवं रामेणाकृष्टे वसने सीता वस्त्रं त्यजतीत्याह—**उत्तरीयमिति** । प्रावरणम् मुञ्चति = त्यजति । सोपालम्भञ्च ब्रूते—**आर्यपुत्रेति** । परकीयेन = अपरस्य वस्तुभूतेन । प्रणयकोविदस्य = प्रणये = प्रेम्णि कोविदः पण्डितः तस्य प्रीतिभाजनस्य "कोपितस्ये"ति पाठे तु प्रणयेन कोपितस्य रोषक्रमितस्य । अश्रुप्रमार्जनम् = अस्रप्रोञ्छनम्, अनुष्ठातव्यम् = कर्त्तव्यम् । एतस्योत्तरं सीतया (सीतारूपिण्या तिलोत्तमया) वस्त्रं त्यक्तं, रामेण च गृहीतमिति कवि-

रा—( उत्तरीयं पतितमवलोक्य ) कथमुत्तरीयमात्रमेव पश्यामि, न पुनः परिधानकम् ।

**अन्यांशुकमतिरभसादविमृश्यविधायिना मयाकृष्टम् ।**
**गगनतलात्परिगलितं ज्योत्स्नानिर्मोकललितमिदम् ॥१६॥**

(पुनर्निर्वर्ण्य) किमपरमकस्मादेवासमीक्ष्यकारिणमात्मानमवगच्छामि । सुव्यक्तं तयैव (दे) व चित्रकूटवनदेवतया मायावत्या प्रदर्शितम्—

---

दर्शयति—"उत्तरीयं पतितमवलोक्य" इति। कथमिति विस्मयेनोक्तीरामस्य। **न पुनरिति**—परिधानकम् = उत्तरीयस्य धारणकरं जनन्तु न पश्यामीत्यर्थः।

**अत्रेदं** ध्यातव्यम्—परिधीयत इति "**परिधानम्**"। डुधाञ् धारणे। अस्माद्धातोः "कृत्यल्युटो बहुलम्" (३ । ३ । ११३) इत्यनेन ल्युट्। परिधानमेव "परिधानकम्"। स्वार्थे कन्। परिधानकमस्यास्तीति "परिधानकः" वासोधारणकर्त्तेत्यर्थः। अथवा—"परिधानकरम्" इति पाठे तु रेफो लेखकप्रमादाद् भ्रष्टो मन्तव्यः।

रामो वस्त्राकर्षणे स्वस्याऽविचारकारितां परामृशति—"**अन्यांशुकम्**" इति। अविमृश्यविधायिना = अविचार्यकारिणा मया = रामेण, अतिरभसात् = अतिवेगात् ज्योत्स्नानिर्मोकललितम् = ज्योत्स्ना कौमुदी, निर्मोकः सर्पत्वक्, ज्योत्स्ना च निर्मोकश्च तौ ज्योत्स्नानिर्मोकौ तद्वत् ललितम् = अतिसुन्दरम्, इदम् = पुरोवर्त्ति, अन्यांशुकम् = अन्यस्य अनिर्दिष्टस्य कस्यचित् कस्याश्चन नरस्य नार्या वेति अंशुकं वस्त्रम्, गगनतलात् = आकाशमण्डलात् परिगलितम् = परिस्खलितं पतितं सत् आकृष्टम् = आगृहीतम्। अत्र लुप्तोपमया वस्त्रस्यातिश्वैत्यं तानवञ्च व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। आर्याच्छन्दः ॥१६॥

**पुनरिति**। भूयोऽपि निर्वर्ण्य = विचार्येत्यर्थः। **किमपरमिति**। असमीक्ष्यकारिणम् = अविचार्यकारिणं चपलमित्यर्थः, आत्मानमवगच्छामि। वस्तुतश्चापल्येन कृतमप्येतत् संवादिभ्रमवत् साफल्यं प्राप्तमिति भावः। तदेवाचष्टे—"सुव्यक्त" मित्यादिना। तयैव = पूर्वं परिचितयैव। चित्रकूटवनदेवतया = चित्रकूटाख्यस्य वनस्य अधिष्ठात्र्या देव्या नामतो मायावत्या, प्रदर्शितम् = सीतायै पुरा दत्तमित्याशयः।

द्यूते पणः प्रणयकेलिषु कण्ठपाशः
क्रीडापरिश्रमहरं व्यजनं रतान्ते ।
शय्या निशीथकलहे हरिणेक्षणाया
प्राप्तं मया विधिवशादिदमुत्तरीयम् ॥२०॥

सी—(१) दिट्ठिआ अहिण्णाद अज्जउत्तेण ।

रा—कीदृशमिदानीमस्य प्रियावल्लभस्य समानविशेषमनुतिष्ठामि ।

---

(१) दिष्ट्या अभिज्ञातमार्यपुत्रेण ।

---

सम्प्रति तद्विषये निश्चिर्ति प्रमाणीकरोति "द्यूते" इति । द्यूते=दुरोदरे, पणः=ग्लहः, प्रणयकेलिषु=प्रणयः प्रेमा, केलयः क्रीडाः, प्रेम्णा प्रचलितासु क्रीडासु नर्मक्रीडास्वित्यर्थः कण्ठपाशः=उद्बन्धनम् परस्परमाकर्षणहेतोः कण्ठे बन्धनमिवेत्यर्थः, नतु वास्तवं बन्धनं वैरसाभावादिति प्रणयपदबोध्यमेव । किञ्च रतान्ते=सुरतावसाने, क्रीडापरिश्रमहरम्=क्रीडया अर्थात् सुरतक्रीडया यः परिश्रमो ग्लानिः तस्य हरम्=निवर्तकं व्यजनम्=तालवृन्तकम्, निशीथकलहे= प्रणयवशादर्धरात्रे दम्पत्योर्जायमानः कलहो निशीथकलहः तत्र शय्या= शयनीयम्, एतादृशं हरिणेक्षणाया=मृगाक्ष्याः सीतायाः, इदमुत्तरीयम्= सव्यानं मया=रामेण, विधिवशात्=दैवगत्यैव प्राप्तम्=अधिगतमुपलब्धमिति यावत् । अत्र—उपमेयस्थानीयस्योत्तरीयस्योपमानस्थानीयानां द्यूतादीनां विवक्षितादतिसाम्यादभेदारोपणात् व्यस्तं रूपकम् । लक्षणमुक्तं प्राक् । (को०) 'द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि' 'पणो ऽक्षेषु ग्लहः' 'प्रणयस्त्वमी । विश्रम्भयाच्ञा प्रेमाणः' इति "अर्धरात्रनिशीथौ द्वौ' सर्वेऽमरः । "प्रणयः प्रसरे प्रेम्णि याच्ञाविश्रम्भयोरपि । निर्वाणेऽपि' इति मेदिनी । वसन्ततिलकावृत्तम् ॥२०॥

सीता सहर्षमाह—'दिट्ठिआ' इति अभिज्ञातम्=पूर्वानुभूतस्य पुनरिन्द्रियसन्निकर्षे सति संस्कारजं ज्ञानमभिज्ञानम् । तद्विषयता प्रापितमित्यर्थः । रामस्तत्प्रीतिपरवशतया सघातहर्षं आह—"कीदृश" इदानीमस्य प्रियावल्लभस्य=प्रियायाः प्रियस्य सव्यानस्य कीदृ-

रा—( उत्तरीयं पतितमवलोक्य ) कथमुत्तरीयमात्रमेव पश्यामि, न पुनः परिधानकम्।

अन्यांशुकमतिरभसादविमृश्यविधायिना मयाकृष्टम्।
गगनतलात्परिगलितं ज्योत्स्नानिर्मोकललितमिदम् ॥१६॥

(पुनर्निर्वर्ण्य) किमपरमकस्मादेवासमीक्ष्यकारिणमात्मानमवगच्छामि। सुव्यक्तं तयैव (दे) व चित्रकूटवनदेवतया मायावत्या प्रदर्शितम्—

ईर्शयति—"उत्तरीयं पतितमवलोक्य" इति। कथमिति विस्मयेनोक्तीरामस्य। न पुनरिति—परिधानकम् = उत्तरीयस्य धारणकर्त्रं जनन्तु न पश्यामीत्यर्थः।

अत्रेदं ध्यातव्यम्—परिधीयत इति "परिधानम्"। डुधाञ् धारणे। अस्माद्धातोः "कृत्यल्युटो बहुलम्" (३।३।११३) इत्यनेन ल्युट्। परिधानमेव "परिधानकम्"। स्वार्थे कन्। परिधानकमस्यास्तीति "परिधानकः" वासोधारणकर्त्रैत्यर्थः। अथवा—"परिधानकरम्" इति पाठे तु रेफो लेखकप्रमादाद् भ्रष्टो मन्तव्यः।

रामो वस्त्राकर्षणे स्वस्याऽविचारकारितां परामृशति—"अन्यांशुकम्" इति। अविमृश्यविधायिना = अविचार्यकारिणा मया = रामेण, अतिरभसात् = अतिवेगात् ज्योत्स्नानिर्मोकललितम् = ज्योत्स्ना कौमुदी, निर्मोकः सर्पत्वक्, ज्योत्स्ना च निर्मोकश्च तौ ज्योत्स्नानिर्मोकौ तद्वत् ललितम् = अतिसुन्दरम्, इदम् = पुरोवर्ति, अन्यांशुकम् = अन्यस्य अनिर्दिष्टस्य कस्यचित् कस्याश्चन नरस्य नार्या वेति अंशुकं वस्त्रम्, गगनतलात्=आकाशमण्डलात् परिगलितम् = परिस्खलितं पतितं सत् आकृष्टम् = आगृहीतम्। अत्र लुप्तोपमया वस्त्रस्यातिधैर्यं तानवञ्च व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। आर्याच्छन्दः ॥१६॥

पुनरिति। भूयोऽपि निर्वर्ण्य = विचार्येत्यर्थः। किमपरमिति। असमीक्ष्यकारिणम् = अविचार्यकारिणं चपलमित्यर्थः, आत्मानमवगच्छामि। वस्तुतश्चापलेयेन कृतमप्येतत् संवादिभ्रमवत् साफल्यं प्राप्तमिति भावः। तदेवाचष्टे—"सुव्यक्त" मित्यादिना। तयैव = पूर्वं परिचितयैव। चित्रकूटवनदेवतया = चित्रकूटाख्यस्य वनस्य अधिष्ठात्र्या देव्या नामतो मायावत्या, प्रदर्शितम् = सीतायै पुरा दत्तमित्याशयः।

द्यूते पणः प्रणयकेलिषु कण्ठपाशः
क्रीडापरिश्रमहरं व्यजनं रतान्ते ।
शय्या निशीथकलहे हरिणेक्षणाया
प्राप्तं मया विधिवशादिदमुत्तरीयम् ॥२०॥

सी—(१) दिट्ठिया अहिण्णाद अज्जउत्तेण ।

रा—कीदृशमिदानीमस्य प्रियावल्लभस्य समानविशेषमनुतिष्ठामि ।

---

(१) दिष्ट्या अभिज्ञातमार्यपुत्रेण ।

---

सम्प्रति तद्विषये निश्चिति प्रमाणीकरोति "द्यूते" इति । द्यूते=दुरोदरे, पणः=ग्लहः, प्रणयकेलिषु=प्रणयः प्रेमा, केलयः क्रीडा, प्रेम्णा प्रचलितासु क्रीडासु नर्मक्रीडास्वित्यर्थः कण्ठपाशः=उद्बन्धनम् परस्परमाकर्षणहेतो कण्ठे बन्धनमित्येत्यर्थः, नतु वास्तवं बन्धनं वैशसाभावादिति प्रणयपदबोध्यमेव । किञ्च रतान्ते=सुरतावसाने, क्रीडापरिश्रमहरम्=क्रीडया अर्थात् सुरतक्रीडया यः परिश्रमो ग्लानिः तस्य हरम्=निवर्त्तकं व्यजनम्=तालवृन्तकम्, निशीथकलहे= प्रणयवशादर्धरात्रे दम्पत्योर्जायमानः कलहो निशीथकलहः तत्र शय्या= शयनीयम्, एतादृशं हरिणेक्षणायाः=मृगाक्ष्याः सीतायाः, इदमुत्तरीयम्= सव्यानं मया=रामेण, विधिवशात्=दैववशादेव प्राप्तम्=अधिगतमुपलब्धमिति यावत् । अत्र—उपमेयस्थानीयस्योत्तरीयस्योपमानस्थानीयानां द्यूतादीनां विवक्षितादतिसाम्यादभेदारोपणात् व्यस्तं रूपकम् । लक्षणमुक्तं प्राक् । (को॰) 'द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि' 'पणो ऽक्षेषु ग्लहः' "प्रणयस्त्वमी । विश्रम्भयाच्ञा प्रेमाणः" इति "अर्धरात्रनिशीथौ द्वौ' सर्वेऽमरः । "प्रणयः प्रसरे प्रेम्णि याच्ञाविश्रम्भयोरपि । निर्वाणेऽपि' इति मेदिनी । वसन्ततिलकावृत्तम् ॥२०॥

सीता सहर्षमाह—"दिट्ठिआ" इति अभिज्ञातम्=पूर्वानुभूतस्य पुनरिन्द्रियसन्निकर्षे सति संस्कारजं ज्ञानमभिज्ञानम् । तद्विषयता प्रापितमित्यर्थः । रामस्तत्प्रीतिपरवशतया सभावहर्षं आह—"कीदृश"मित्। इदानीमस्य प्रियावल्लभस्य=प्रियायाः प्रियस्य सव्यानस्य कीदृशं समा

( विचिन्त्य ) भवतु, अयमेवास्यानन्यसाधारणः संमानविशेषः । ( प्रावृणोति ) ( आत्मनं प्रावृत्य अवलोक्य ) द्वितीयप्रावरणं मामवलोक्य किमपि चिन्तयिष्यति मुनिजनः । तस्मादात्मीयमुत्तरीयं परित्यजामि । ( इति उत्क्षिपति )

सी—( गृहीत्वा सहर्षम् ) (१) पिअं मे संवुत्तं चिरजीविदाए फलं । ( आघ्राय ) दिट्ठिआ असंकंतविलेवणामोअं अज्जउत्तस्स उत्तरीअं । सव्वहा सच्चसंधा राहवा । ( प्रावृत्य ) अम्हे एदं पिअजणसंसग्गसुहप्परिसं

(१) प्रियं मे संवृत्तं चिरजीवितायाः फलम् । (—) दिष्ट्या असङ्क्रान्तविलेपनामोदमार्यपुत्रस्योत्तरीयम् । सर्वथा सत्यसन्धा राघवाः । (—)

विशेषम्=विशिष्टं सत्कारम्, अनुतिष्ठामि=सम्पादयामि कुर्यामित्यर्थः । अनन्यसाधारणः=लोकोत्तरः । सम्मानविशेषः=विशिष्टः सत्कारः । प्रावृणोति= तत्संव्यानं धारयतीति नाट्यक्रिया । द्वितीयप्रावरणम्=द्वितीयं प्रावरणं यस्य स तं प्रावारकयुगलोपेतं मामवलोक्येत्यर्थः । किमपि=गुप्तं वेदनीयम् । आत्मीयम्=स्वीयम् । उत्क्षिपति=ऊर्ध्वं क्षिपति । सीता—गृहीत्वा=रामस्योत्क्षिप्तं परिधानीयमादायेत्यर्थः ।

" प्रियं मे " इति । " मे चिरजीवितायाः प्रियं फलं संवृत्तम् " इति योजना । चिरजीविनो भावश्चिरजीविता । यन्मया पतिपरित्यक्तयापि प्राणा न परित्यक्तास्तदुचितमेव जातमिति भावः ।

दिष्ट्येति हर्षे । असङ्क्रान्तेति । न सङ्क्रान्तः प्रतिगतो विलेपनस्य अङ्गरागस्य आमोदो निर्हारी गन्धो यस्मिन् तत् तादृशमुत्तरीयं संव्यानम् । कामिनो हि रत्युद्दीप्तिहेतवे शृङ्गाररूपेण चन्दनादिसुरभिद्रव्यभावितमङ्गरागं गात्रेषु विलेपयन्ति, विलेपितं तद्वासःसु सङ्क्रान्तं भवति, रामोत्तरीयं च न तथेति सीताविरहिणस्तस्य विषयसेवानपेक्षा व्यक्तीकृता । अमुमेवार्थं धारयन्ती सीता ऽऽह—सर्वथेति । सत्या सन्धाः प्रतिज्ञा येषां ते सत्यसन्धाः= सत्यप्रतिज्ञाः । लक्ष्मणसन्दिष्टं रामस्य दारान्तरपरिणयशून्यत्वं तथैव संवृत्तमिति भावः । राघवाः=रघुवंशीयाः

उत्तरीअं पावरिअ अज्जउत्तवच्छत्थळपरिस्संतं विअ अविरलसमुद्भिण्णरोमंचणिरंतरं अत्ताणं उव्वहामि ।

रा—( सविस्मयम् ) यथैतदुत्तरीयमप्राप्तमहीतलमेव केनाप्यपहृतं तथा जानामि प्रत्यासन्नफलो मे मनोरथ इति । ( विचिन्तयन् ) उत्तरीयापहारो जलच्छायायां दृश्यते, न सीता; किमेतत् ? भवतु सिद्धाश्रमवासिभ्यो जनेभ्योऽस्याः प्रभावो भविष्यति । तत् को नु खल्वस्याः

---

अहो एतत् प्रियजनसंसर्गसुखस्पर्शमुत्तरीयं प्रावृत्यार्यपुत्रवक्षःस्थलपरिश्रान्तमिवाविरलसमुद्भिन्नरोमाञ्चनिरन्तरमात्मानमुद्वहामि ।

---

"अहो" इति हर्षे । प्रियजनेति—प्रियजनो रामः तस्य संसर्गेण सम्बन्धेन सुखं स्पर्शो यस्य तदेतदुत्तरीयम् । प्रावृत्य=धारयित्वा । आर्यपुत्रस्य वक्षःस्थले उर स्थले परिश्रान्तमायासितमिव । अविरलेति—अविरलो घनः समुद्भिन्नः प्रस्फुरितो यो रोमाञ्चो लोम्नां ततिः तेन निरन्तरमन्तररहितमशून्यमिति यावत्, एवम्भूतमात्मानम् । उद्वहामि=धारयामि ।

सर्वतो रोमाञ्चिताहं परिश्रान्तेवार्यपुत्रस्य वक्षःस्थले लेटितेवास्मि संवृत्तेति भावः ।

सविस्मयम्=साश्चर्यम् । यथेति—एतदुत्तरीयम्=मया प्रक्षिप्तं ममैवोत्तरीयम् । न प्राप्तं स्पृष्टं महीतलं भूमिभागो येन तत् । केनाप्यपहृतम्=मम दृष्टयगोचरेण जनेन गृहीतम् । तथा=तेन प्रकारेण । "मे मनोरथः प्रत्यासन्नफलः इति जानामि" इत्यन्वयः । निपातोक्ते प्रथमा । प्रत्यासन्नं समीपवर्ति फलं सीताप्राप्तिरूपं यस्य स तथाभूतः । मनोरथः=सङ्कल्पः । सीतयैव गृहीतं स्यादिति मन्य इत्याशयो रामस्य । जले वस्त्रापहरणप्रतिबिम्बं दृष्ट्वा पुनर्विचारयति—"उत्तरीयापहार" इति । जलच्छायायाम्=नीरवर्त्तिनि प्रतिबिम्बे । "वस्त्रापहरणप्रतिबिम्बमालोके, सीता तु नालोक्यते किमाश्चर्यम्" इत्याह—**किमेतदिति** । पश्चान्तरं मुनिप्रभावं विचार्याह—"**भवतु**" इति । सिद्धाश्रमवासिभ्यः=वाल्मीकिमुन्याश्रमवासिभ्यः, जनेभ्यः=मुनिभ्य एव । आगत इति शेषः । अस्याः=सीतायाः । प्रभावः=पुरुषान्तर-

प्रत्यासन्नदर्शनेऽभ्युपायः। अयि! वैदेहि! न किञ्चित् स्मरसि कस्यचित् पूर्ववृत्तान्तस्य, यस्मादेवं दर्शनमात्रेणापि न सम्भावयसि।

सी—(१) अजवि कीदिसो पुव्ववुत्तन्तो।

रा—अविदितमनुसृत्य चित्रकूटे
सुतनु! सुमापचयाय निर्गतां त्वाम्।
कुसुममपचितं विकीर्य भूमौ
स्मरसि रसेन मया धृतं पटान्तम् ॥२१॥

(१) अद्यापि कीदृशः पूर्ववृत्तान्तः।

कृतदर्शनानर्हतारूपः प्रतापः। प्रत्यासन्नदर्शने=समीपालोकने। पूर्ववृत्तान्तस्य= चित्रकूटादिस्थले वनवासोदन्तस्य। दर्शनमात्रेणापि=केवलं दर्शनेनापि। सम्भावयसि=सम्भालयसि।

सीता श्रुत्वाऽऽह—"अज्जवि" इति। अद्यापि=मय्येवं निर्वासितायामपि पूर्ववृत्तान्तः स्मार्यते, किमिदं योग्यमिति सीताया अभिप्रायः।

रामस्तमेव वृत्तान्तं स्मरति—अविदितमिति। हे सुतनु!= शोभना तनुः शरीरं यस्याः सा तत्सम्बुद्धौ। सुन्दरीत्यर्थः। चित्रकूटे= चित्रकूटनामनि पर्वते, सुमापचयाय = सुमानां पुष्पाणामपचयाय अवचयनाय पुष्पाण्याचेतुमित्यर्थः, निर्गताम्=निर्यातां त्वाम्, अविदितम्= अज्ञातं (त्वयेति शेषः) यथा स्यात्तथा अनुसृत्य=अनुगम्य, अपचितम्= अवचितम्, कुसुमम्=पुष्पम्, (चितानि पुष्पाणीत्यर्थः जातावेकवचनम्) भूमौ=पृथिव्याम्, विकीर्य=प्रक्षिप्य, रसेन=रागेण भावातिशयेन, मया धृतम्= आकृष्टम्, पटान्तम्=वसनकोणम्, स्मरसि=चेतयसि किमिति शेषः। तदैवमावयोर्विलास आसीत् यत्र त्वयेदानीमुपेक्षा क्रियत इति विरहिणो रामस्याकूतकम्।

"रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः" इति मेदिनी। "शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः" इति चामरः। पुष्पिताग्राभिधं वृत्तम्। लक्षणमुक्तं प्राक् ॥२१॥

सी—( विहस्य ) (१) साहसिअ अदो एव्व दूरे परिहरिअसि।

रा—कथं न किञ्चिदपि प्रतिवचनं प्रयच्छति ?

सी—(२) आसण्णा मम दिअहावसाणवेला। ण जुत्तं अ एतावत्थं गदं अज्जउत्तं देवदादुदिअं कदुअ अपक्कमिदुं। ता किं एत्थ करइस्सं। ( दिशोऽवलोक्य ) दिट्ठिआ एसो पिअवअस्सो कोसिओ किंवि अण्णेसंतो विअ कोदूहलसमावेसणिक्खित्तलोअणो इदो एव्व आअच्छइ, ता ओसरिस्सं। ( निष्क्रान्ता )

---

(१) साहसिक ! अत एव दूरे परिहियसे।

(२) आसन्ना मम दिवसावसानवेला। न युक्तं चैतदवस्थां गतमार्यपुत्र देवताद्वितीयं कृत्वापक्रमितुम्। तत् किमत्र करिष्यामि। (—) दिष्ट्या एष प्रियवयस्यः कौशिकः किमप्यन्विष्यन्निव कौतूहलसमावेशनिक्षिप्तलोचन इत एवागच्छति। तदपसरामि।

---

साहसिक !=अविमृश्यकारिन् !' "साहसन्तु दमो दण्ड" इत्यमरः। "साहसन्तु दमे दुष्करकर्मणि। अविमृश्यकृतौ धार्ष्ट्ये" इति हैमः। अतएव=अविमृश्यकारित्वादेव, परिहियसे=त्यज्यसे। प्रणयकालुष्योक्तिरियं सीतायाः। प्रतिवचनम्=उत्तरम्। आसन्ना=समीपवर्तिनी। दिवसावसानवेला= दिवसस्य अह्नोऽवसान समाप्तिस्तद्वेला प्रदोषसमय इत्यर्थः। एषा चासौ अवस्था=विरहदशेत्येतदवस्था तामवस्था गतं प्राप्तम्। मदीयविरहेण व्याकुलीभूतमित्यर्थः। देवताद्वितीयम्=देवता वनाधिष्ठात्री देव्येव द्वितीया यस्य स तम्, एकाकिनमिति निर्गलितोऽर्थः। प्रियवयस्यः=आर्यपुत्रस्येति शेष। अन्विष्यन्=गवेषयन्निव। अय प्रयोगः कविकल्पद्रुममतेन अनूपसृष्टस्य "इष्य" धातो शतरि, तथा—पाणिनिमतेन दैवादिकस्य "इष" धातोर्युक्तः। कौतूहलेति—कौतूहलस्य आश्चर्यस्य समावेशेन प्रसक्त्या निक्षिप्ते विक्षिप्ते लोचने नयने यस्य स तादृशः। अपसरामि=यथायं न पश्येत्तथा ऽस्मात्स्था- -स्थानान्तर यामि।

विस्सद्धपउत्तसंकहाणं मुणिकण्णआणं अच्चराणं वि मुहादो किंवि तवोवणरहस्सं मंतिअमाणं। तं तुह अप्पिअं आसी। अब्भंरट्ठिदं विअ गूढगब्भं अहिअदरं बाहेइ।

रा—कीदृशं तपोवनरहस्यम्?

वि—(१) भो किं ण आणासि तत्तहोदी।

रा—(कर्णौ पिधाय) स्त्रीसंबद्धमेव तद्रहस्यम्, तदलमनेन श्रुतेन।

वि—(२) मा भआहि, रामवअस्सो खु अहं। ण आणासि तत्तहोदिं

---

विस्रब्धप्रवृत्तसङ्कथानां मुनिकन्यकानामप्सरसामपि मुखतः किमपि तपोवन-रहस्यं मन्त्र्यमाणम्। तत् तव च (अ) प्रियमासीत्। अभ्यन्तरस्थितमिव गूढगर्भमधिकतरं बाधते।

(१) भोः किं न जानासि, तत्रभवतीम्।

(२) मा भीः, रामवयस्यः खल्वहम्। न जानासि तत्रभवतीं

---

पुण्ड्रकः स्याद्वासन्ती माधवी लता" इत्यमरः। "अतिमुक्तस्तु निःसङ्गे वासन्त्यां तिनिशेऽपि च" इति मेदिनी। "मण्डपोऽस्त्री जनाश्रयः" इत्यमरः। प्रच्छन्नस्थितेन=गुप्तस्थितेन। विस्रब्धेति—विस्रब्धं विश्वस्तं निःशङ्कमिति यावत् प्रवृत्ताः सङ्कथाः रहोवार्ता यासां तास्तथाभूताः तासां मुनिकन्यकानाम्=ऋषिकुमारिकाणाम्, तथा—अप्सरसाम्=देवीनामपि मुखतः किमपि=अनिर्वाच्यम्, तपोवनरहस्यम्=तपोवने रहस्यं तपोवनरहस्यम्। मन्त्र्यमाणम्=विचार्यमाणम्। प्रियम्=हितम्। अभ्यन्तरस्थितमिति—"अभ्यन्तरस्थित इव गूढगर्भः" इति पाठो युज्यते। गूढगर्भो मूढगर्भ इत्यर्थः। स यथान्तःस्थितः पीडयति तथाऽभ्यन्तरस्थितं तद्रहस्यं मां बाधते। रामः पृच्छति कीदृशमिति। विदूषक आह—किमिति। कर्णौ=श्रुती। विधाय=आच्छाद्य। स्त्रीसम्बद्धम्=नारीवृत्तान्तविशिष्टम्।

मा भीः=भयं मा कार्षीः। अत्रेदं ध्यातव्यम्—"मा भी"रिति कथं प्रयोग इति? यावता "मा भैषी"रिति सिद्ध्यतीति पश्यन्तु पण्डिताः। अथवा "मा भीः"=भयं ते मा भवत्विति शेषेण व्याख्येयम्। रामवयस्योऽहम्=रामस्य तव वयस्यो मित्रम्, अतः सहवासित्वात्त्वच्चरित्रज्ञोऽस्मीति

( ततः प्रविशत्यन्वेषमभिनयन् विदूषकः )

वि–(१) कहिं णु खु तत्तभवं भविस्सदि राआ । (परिक्रम्यावलोक्य च) एसो पिअवअस्सो चिन्ताउलो विअ णिहुदमणोहराए आकिदीए दीहिआतीरं अलंकरेइ, ता उवसप्पिस्सं । ( उपसृत्य ) जेदु भवं ।

रा—( विलोक्य ) दिष्ट्या प्रियवयस्यः कौशिकः प्राप्तः । वयस्य कौशिक, ! कुतो भवान् ?

वि—(२) अज्ज सूरोदअप्पहुदि मम तुमं अण्णेसमाणस्स सअलो दिअहो अदिक्कंदो ।

रा—किंकृतोऽयमस्मदन्वेषणे भवतः प्रयासः ?

वि–(३) सुदं मए पहादए समए अदिमुत्तमंडवब्भंतरे पच्छण्णट्ठिदेण

---

(१) कुत्र खलु तत्रभवान् भविष्यति राजा । (—) एष प्रियवयस्यश्चिन्ताकुल इव निभृतमनोहरया आकृत्या दीर्घिकातीरमलङ्करोति । तदुपसर्पामि । (—) जयतु भवान् ।

(२) अद्य सूर्योदयप्रभृति मम त्वामन्वेषमाणस्य (?) सकलो दिवसोऽतिक्रान्तः ।

(३) श्रुतं मया प्राभातिके समयेऽतिमुक्तामण्डपाभ्यन्तरे प्रच्छन्नस्थितेन

---

अन्वेषम्=गवेषणम् । अभिनयन्=नाट्येन दर्शयन् ।

तत्रभवान्=पूज्यः । चिन्ताकुलः=चिन्तया मानस्या व्यथया आकुलो विह्वलीभूतः । निभृतमनोहरया=निभृतमत्यन्तं मनोहरया=हृदयङ्गमया । आकृत्या=मूर्त्या ।

दीर्घिकातीरम्=सरसीतटम् । सूर्योदयप्रभृति=सूर्योदयादारभ्येत्यर्थः । अन्वेषमाणस्य=गवेषयतः । परस्मैपदिनोऽपि केचन चान्द्रमतेनात्मनेपदिनो भवन्तीतिसूक्तप्रायम् । अतिक्रान्तः=गतः । किङ्कृतः=किमर्थः किम्प्रयोजन इति यावत् ।

अस्मदन्वेषणे=अस्माकमन्वेषणे । प्रयासः=उद्योगः । प्राभातिके= प्रातःकालिके । अध्यात्मादित्वात् ठञ् । अतिमुक्तेति—अतिमुक्तः=माधवी तस्या मण्डपस्य जनाश्रयस्याऽभ्यन्तरे=अन्तर्वर्तिनि प्रदेशे । " अतिमुक्तः

विस्सद्धपउत्तसकहाण मुणिकण्णआण अच्छराण वि मुहादो किंवि तवोवणरहस्स मंतिश्रमाणं । तं तुह अप्पिअ आसी । अब्भरट्ठिदं विअ गूढगब्भं अहिअदरं बाहेइ ।

रा—कीदृशं तपोवनरहस्यम् ?

वि—(१) भो किं ण आणासि तत्तहोदीं ।

रा—( कर्णौ पिधाय ) स्त्रीसंबद्धमेव तद्रहस्यम्, तदलमनेन श्रुतेन ।

वि—(२) मा भआहि, रामवअस्सो क्खु अहं । ण आणासि तत्तहोदिं

---

विस्रब्धप्रवृत्तसङ्कथानां मुनिकन्यकानामप्सरसामपि मुखत किमपि तपोवन रहस्यं मन्त्र्यमाणम् । तत् तव च (अ) प्रियमासीत् । अभ्यन्तरस्थितमिव गूढगर्भमधिकतरं बाधते ।

(१) भो किं न जानासि, तत्रभवतीम् ।

(२) मा भी, रामवयस्य खल्वहम् । न जानासि तत्रभवतीं

---

पुण्ड्रकः स्याद्वासन्ती माधवी लता " इत्यमरः । " अतिमुक्तस्तु नि सङ्गे वासन्त्यां तिनिशेऽपि च " इति मेदिनी । " मण्डपोऽस्त्री जनाश्रय " इत्यमरः । प्रच्छन्नस्थितेन=गुप्तस्थितेन । विस्रब्धेति—विस्रब्धं विश्वस्तं निःशङ्कमिति यावत् प्रवृत्ता सङ्कथा रहोवार्त्ता यासां तास्तथाभूताः तासां मुनिकन्यकानाम्=ऋषिकुमारिकाणाम्, तथा—अप्सरसाम्=देवीनामपि मुखतः किमपि=अनिर्वाच्यम्, तपोवनरहस्यम्=तपोवने रहस्यं तपोवनरहस्यम् । मन्त्र्यमाणम्=विचार्यमाणम् । प्रियम्=हितम् । अभ्यन्तरस्थितमिति—' अभ्यन्तरस्थित इव गूढगर्भः ' इति पाठो युज्यते । गूढगर्भो मूढगर्भ इत्यर्थः । स यथान्तः स्थितः पीडयति तथाऽभ्यन्तरस्थितं तद्रहस्यं मां बाधते । राम पृच्छति कीदृशमिति । विदूषक आह—किमेति । कर्णौ=श्रुती । विधाय=आच्छाद्य । स्त्रीसम्बद्धम्=नारीवृत्तान्तविशिष्टम् ।

**मा भी**=भयं मा कार्षीः । अत्रेदं ध्यातव्यम्—"मा भी" रिति कथं प्रयोग इति ? यावता " मा भैषी " रिति सिद्ध्यतीति पर्यन्तु पण्डिताः । अथवा " मा भीः "=भयं ते मा भवत्विति शेषेण व्याख्येयम् । रामवयस्योऽहम्=रामस्य तव वयस्यो मित्रम्, यन् सहवासितया तच्चरित्रज्ञोऽसीति

पुराणसग्गदासिं ।

रा—( आत्मगतम् ) देवगणिकासम्बद्धैषा कथा, न कश्चिद्दोषस्तदाकर्णने । ( प्रकाशम् ) कतमासौ पुराणस्वर्गदासी किमुर्वशी ? किं तिलोत्तमा ?

वि—(१) हे राम, पिअवअस्स, रामत्ति खणे खणे अलिअमहुरेहिं वअणेहिं आउलयसि ।

रा—किं तिलोत्तमा ?

वि—(२)ण आणामि किं तिलुत्तमा सिलुत्तमेत्ति । सा किल तत्तहोदीए

---

पुराणस्वर्गदासीम् ।

(१) हे राम ! प्रियवयस्य ! रामेति क्षणे क्षणे अलीकमधुरैर्वचनैराकुलयसि ।

(२) न जानामि किं तिलोत्तमा सिलोत्तमेति । सा किल तत्रभवत्या-

---

भावः । पुराणस्वर्गदासीम्=पुराणा चासौ स्वर्गदासी स्वर्गणिका । किमुर्वशीति—स्वर्वेश्यामूर्धन्यत्वादस्याः प्रथमं कीर्तनम् । इयञ्च-नरनारायणौ मोहयितुमायाते सपरिवारे कामदेवे भगवता स्वमहिम्नैवोत्पादिता यामालोक्य सर्वे स्वर्वासिन एव मुमुहुरिति पौराणिकी गाथा । तथा च—श्रीमद्भागवतस्यैकादशे स्कन्धे चतुर्थेऽध्याये—

> ते देवानुचरा दृष्ट्वा स्त्रियः श्रीरिव रूपिणीः ।
> गन्धेन मुमुहुस्तासां रूपोदार्यहतश्रियः ॥१६॥
> ओमित्यादेशमादाय नत्वा तं सुरवन्दिनः ।
> उर्वशीमप्सरःश्रेष्ठां पुरस्कृत्य दिवं ययुः ॥१७॥ इति

देवगणिकासम्बद्धा=अप्सरःसम्बन्धेनावतीर्णा । "तदाकर्णने न कश्चिद्दोष" इत्यन्वयः । दिव्यत्वादेव दोषानर्हा सा कथेति भावः । यदि्वदं कथा तु, स्त्रीसम्बन्धिनी मया न श्रोतव्येत्यत्रापि रामहृदयम् । कतमासाविति । "कतमा"मिति तु युक्तं मन्ये । अलीकमधुरैः=मिथ्यामधुरैः प्रियैः । सा किल=तत्सम्बद्धा मया वार्ता श्रुता सा । तत्रभवत्याः=पूज्यायाः ।

चिरकालविउत्ताए विदेहराअतणआए चरिदं अणुचिट्ठिय पिअवअस्सं उपहसिदु इच्छइ।

रा—( आत्मगतम् ) कष्टं सम्यगुपलक्षितं कौशिकेन। अन्यथा हि दृश्यमाने प्रियासन्निधानाभिज्ञाने स्वयं न दृश्यत इत्यसम्भाव्यमेतन्मानुषीषु सर्वथा वञ्चितोऽस्मि कामरूपिण्या तिलोत्तमया।

तृषितेन मया मोहात् प्रसन्नसलिलाशया।
अञ्जलिर्विहितः पातुं कान्तारमृगतृष्णिकाम् ॥२२॥

---

चिरकालवियुक्ताया विदेहराजतनयायाश्चरितमनुष्ठाय प्रियवयस्यमुपहसितुमिच्छति

चिरकालवियुक्तायाः = चिराणाय त्वद्विरहिण्याः। विदेहराजतनयायाः = विदेहराजो जनकः, तस्य तनयायाः पुत्र्याः श्रीजानक्या इत्यर्थः। चरितम् = तदीयभूमिकारूपं चरित्रम्। अनुष्ठाय=विधाय। उपहसितुम्=उपच्छन्दयितुम्।

उपलक्षितम् = ज्ञातम्। प्रियासन्निधानेति—प्रिया = सीता तस्याः सन्निधानम् = सामीप्यं समीपेऽवस्थितिरिति यावत्, तस्य ( सन्निधानस्य ) अभिज्ञानं = ज्ञापकं चिह्नविशेषस्तत्रेत्यर्थः। स्वयमिति। स्वयं दृष्टिपथं नावतरति, एतत् = एतादृशं सामर्थ्यम्, अमानुषीषु = अदिव्यासु योषासु असम्भाव्यमित्यन्वयः। वञ्चित = प्रतारितः। कामरूपिण्या = यथेच्छं रूपान्तरपरिवर्तनकारिण्या। तिलोत्तमया = एतन्नाम्न्या स्वर्वेश्यया। सर्वथा= सर्वप्रकारेण, वञ्चितोऽस्मि = प्रतारितोभवामि।

वंचनामेवाह—तृषितेनेति—तृषितेन = पिपासितेन मया मोहात् = अज्ञानात्, प्रसन्नसलिलाशया = प्रसन्नं निर्मलञ्च तत् सलिलं नीरं तस्याशया वासनया, कान्तारमृगतृष्णिकाम् = कान्तारे जङ्गले ( मरुभूमौ ) मृगतृष्णिकाम् = मिथ्याध्यवसितं पानीयं पातुम्=अञ्जलिः = पाणिपुटः, विहितः = कृतः। ग्रीष्मोष्मसन्निपाताद् मरौ भासमानं जलं पातुं तृषार्त्ता मृगा धावन्ति, तेषामनीरे या नीरबुद्धिः सा "मृगतृष्णिका" "मृगतृष्णा" चोच्यते, एवम्भूता याऽनात्मिस्तद्बुद्धि तस्या विषयभूतं प्रातिभासिकं जलमपि मृगतृष्णाशब्दवाच्यं भवति। यथा मृगा मृगतृष्णाया धावन्त परमार्थ-

( उत्तरीयमवलोक्य ) कथमुत्तरीयमपि निर्मितमतिमायाविन्या । अहो परवञ्चनायामतिमहन्नैपुणम् ।

वि—(१)भो वयस्स, विळक्खमुहो विअ दीससि । किं ताए वंचिदोसि?

रा—वञ्चितः कृतोऽस्मि ।

वि—(२) किं मए सुदं रहस्सं होदि ?

( नेपथ्ये )

सन्ताप्य लोकमखिलं निरवग्रहेण
तीव्रो नरेश्वर इव प्रथमं स्वधाम्ना ।

(१) भो वयस्य ! विलक्षमुख इव दृश्यसे । किं तया वञ्चितोऽसि ।
(२) किं मया श्रुतं रहस्यमन्यथा भवति ।

वस्तुनोऽलाभात्केवलं क्लेशभाजो भवन्ति एवमेवाहमपि प्रतिच्छायायां सीताबुद्धया तथा सङ्कल्पं कुर्वाणो निष्फलप्रयत्न एवास्मि संवृत्त इति भावः ।

अत्र तिलोत्तमाकर्तृकं मत्कर्मकं यद्वञ्चनं तन्मत्कर्तृकमृगतृष्णिकाजलेऽञ्जलिविधानमिति उपमानोपमेयवाक्यार्थयोरैक्यारोपरूपा **निदर्शना** । अथवा—मत्कर्मकतिलोत्तमावञ्चने मृगतृष्णिकासम्बन्धिजलविषयकाञ्जलिविधानरूपपदार्थारोपो " निदर्शना " ( पदार्थवृत्तिरूपा निदर्शना ) इति मे भाति । अत्र पण्डिताः प्रमाणम् । "भ्रान्ति"स्तु न चारुत्वाऽभावात्, मोहस्य स्पष्टतरप्रतिपत्तेः ॥२२॥

निर्मितम् = रचितम् । अतिमायाविन्या = अज्ञानसिद्धशक्तिमत्या । परव्यामोहनैकहेतुर्मायेति **वेदान्तिनः** । विलक्षमुखः = विलक्षं सविस्मयं मुखं यस्य सः, विस्मितानन इत्यर्थः । " विलक्षो विस्मयान्विते " इत्यमरः । तया = तिलोत्तमया वञ्चितः कृतोऽस्मीति—सत्यं प्रतारित एवास्मि । सीताप्राप्तौ च न क्वापि मे प्रत्याशेति भावः ।

विदूषकः स्वोक्तिं समर्थयते—किं मया श्रुतमिति । सन्ताप्येति । **सूर्या**स्तमनवर्णनमिदम् । निरवग्रहेण = प्रतिबन्धराहित्येन, स्वधाम्ना = स्वेन तेजसा स्वस्य तेजसेति वा, अखिलम् = समग्रम्, लोकम् = भूर्भुवःस्वरित्याख्यं त्रिभुवनम्, तीव्रः = उग्रस्वभावः, नरेश्वर इव = राजेव, प्रथमं सन्ताप्य = तापयित्वा,

सोऽयं वयःपरिणतेरिव शान्ततेजाः
सायं मृदुर्भवति तिग्मरुचिः क्रमेण ॥२३॥

रा—( निर्वर्ण्य ) अस्तं गच्छति भगवान् दिवाकरः ।
प्रियजनरहितानामङ्गुलीभिर्वधूना-
मवधिदिवससङ्ख्याव्यापृताभिः सहैव ।
भजति किरणमालिन्यस्तमेकैकशोऽस्मिन्
सरसकमलपत्रश्रेण्यः सङ्कुचन्ति ॥२४॥

---

वयःपरिणतेरिव = वय आयुः तस्य परिणतिः परीपाकः परिणामः तस्मादिव, क्रमेण = मध्याह्नादिक्रमेण, शान्ततेजाः = शान्तं शममुपेतं तेजः राजपक्षे कोपादिरूपम् पराक्रमो वा सूर्यपक्षे सौरं प्रकाशरूपं यस्य सः तादृशः सोऽयम्= सर्वलोकसाक्षी, तिग्मरुचिः=तिग्मा तीव्रा प्रचण्डा रुचि दीप्तिर्यस्य सः चण्डांशुः सूर्यः, सायम् = सायङ्काले मृदुः = कोमलः सह्ययोत इति यावत्, भवति = वर्तते । सन्ध्यादिवैदिककर्मानुष्ठानकालो जात इति व्यञ्जनम् ।

(को०) " तेजःप्रभावेदीप्तौ च बले शुक्रेऽपि " इत्यमरः । "तेजो धाम्नि पराक्रमे । प्रभावेरेतसोश्च" इति विश्वः । भरतस्तु—

अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् ।
प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ॥ इत्याह ॥

"वयः परिणतेरिव" त्युपमा । सा च श्लेषोपस्कृता वसन्ततिलकावृत्तम् ॥२३॥

निर्वर्ण्य = निरूप्य । भगवान् = इति ब्रह्मरूपत्वात् । दिवाकरः = सूर्यः । "दिवाविभानिशाप्रभा० (३।२।२१) इतिसूत्रेण टप्रत्यये सिध्यति ।

प्रियजनेति—प्रियजनरहितानाम् = प्रियजनेन बल्लभेन रहितानां विरहिणीना वधूना सीमन्तिनीनाम्, अवधि० = अवधिदिवसाना प्रोषितस्य भर्तुरवधिदिनाना या सङ्ख्या गणना तस्या व्यापृताभिः सलग्नाभिः प्रवर्तमानाभिः, अङ्गुलीभिः = करशाखाभिः, सहैव = सार्धमेव अस्मिन्=मद्दृष्टिविषये, किरणमालिनि = भास्वरे, अस्तम् = अस्ताचलम्, भजति = याति सति, सरसकमलपत्रश्रेण्यः = सरसानां रसान्वितानामशुष्काणां कमलपत्राणां पद्मदलानां श्रेण्यः = राजयः, एकैकशः = क्रमशः (एकस्या उत्तरमेकैकेत्यर्थः) सङ्कुचन्ति = निमीलिता भवन्ति ।

अपि च,—

आकर्षात्प्रग्रहाणां नियमितगतयश्चोदितास्तोत्रपातै-
र्नैव स्थातुं न यातुं सचकितचरणाः सारथेः पारयन्तः।
दुर्विन्यस्तैः खुराग्रै विंषमपरिसरादस्तशैलस्य शृङ्गा-
द्वाह्यन्ते वारिराशिं कथमपि विधुरा वाजिनस्तिग्मरश्मेः॥२५

(इति निष्क्रान्ताः सर्वे)

## इति चतुर्थोऽङ्कः

यथा—प्रोषितभर्तृका नार्यो विरहदुर्बलाः सत्यो वल्लभस्य प्रत्यागमनं प्रतिपालयन्त्योऽङ्गुलीभिर्दिवसान् गणयन्त्यस्ताः क्रमेण सङ्कोचयन्ति तथैव कमलिन्योऽपि क्रमशो निजपत्त्राणां सङ्कोचं कुर्वत्यो भर्तुः सूर्यस्य प्रत्यागमनमुदीक्षन्त इति भावः।

अत्र सहोक्तिरलङ्कारः। उक्तञ्च जयदेवेन—"सहोक्तिः सहभावश्चेदुच्यते जनरञ्जन" इति। अत्राङ्गुलीनां कमलपत्रश्रेणीनाञ्च सङ्कोचरूपः समानोधर्मः, कर्तृत्वं तृतीयार्थः, तस्य सहार्थान्वयः, सहार्थस्य च समकालीनत्वसम्बन्धेन सङ्कोचक्रियायान्वयः। "अङ्गुलीकर्तृकसङ्कोचसमकालीनसङ्कोचकर्त्र्यः कमलपत्रश्रेण्य" इत्यन्वयबोधः। अत्र द्वयोः सङ्कोचयोरभेदाध्यवसायः। केचित्त्वेतादृशस्थले निरूपितत्वं तृतीयार्थः। "अङ्गुलीनिरूपितसाहित्यवत्यः कमलपत्रश्रेण्यः सङ्कोचाश्रयः" इति बोध इत्याहुः। प्रपञ्चस्तु ग्रन्थभूयस्त्वभिया न क्रियते। अन्यत्स्वयमूह्यम्। "मालिनी" वृत्तम्॥ २४॥

आकर्षादिति। सारथेः = सूरसूतस्यानूरोः, प्रग्रहाणाम् = रश्मीनाम्, आकर्षात् = आकृष्टिहेतोः, नियमितगतयः = नियमिता स्तब्धीभूता बद्धेति यावत् गतिश्चालो येषां ते, तथा-तोत्रपातैः = तोत्रस्य प्राजनस्य पातैः सम्पातनैः वैणुकमारणैरित्यर्थः, सचकितचरणाः = सचकिता भीत्या कम्पनं प्राप्ताश्चरणाः पादा येषामेवम्भूताः, अतएव-विधुराः = कष्टङ्गताः, तिग्मरश्मेः = सूर्यस्य, वाजिनः = वेगवन्तोऽश्वाः, नैव स्थातुम् = स्थितिं कर्तुम्, न यातुम् = नच गन्तुमपि, पारयन्तः समर्था भवन्तः विषमपरिसरात् = विषमो निम्नोन्नतः

परिसरः = प्रान्तभूभागो यस्य तस्मात्, अस्तशैलस्य = अस्ताचलस्य शृङ्गात् = शिखरात्, दुर्विन्यस्तैः = दुःखेन महता कष्टेन विन्यस्तैः स्थापितैः, खुराग्रैः = खुराणां शफानामग्रभागैः, वारिराशिम् = जलनिधिं समुद्रम् अवगाहन्ते = प्रविशन्तीत्यर्थः, अस्तमनकालेऽम्बुव्येव सूर्यस्य प्रवेशात्। तथाच—श्रुतिः "अप्सु अस्तमेति" इति।

अत्र सूर्याश्वानां शास्त्रीयप्रमाणबलासिद्धतया तथावर्णनं स्वभावोक्तिरेव। अन्यथाऽद्भुतातथ्यवर्णनाद् अत्युक्तिमहुः। इयानेवातिशयोक्तेर्विशेषो यदत्युक्तावत्यन्तातथ्यस्वरूपः। अतएव—

अनयोरनवद्याङ्गि! स्तनयोर्जृम्भमाणयोः।
अवकाशो न पर्याप्तस्तव बाहुलतान्तरे॥

इति पद्यानन्तरं दण्डिना क्रम्—"इत्यसम्भाव्यमेवैतदि"ति। ततः—

लोकातीत इवात्यर्थमध्यारोप्य विवक्षितः।
योऽर्थस्तेनातितुष्यन्ति विदग्धा नेतरे यथा॥ इत्युक्त्वा—

अल्पं निर्मितमाकाशमनालोच्यैव वेधसा।
इदमेवंविधं भावि भवत्याः स्तनमण्डलम्॥

इत्यभिहितमिति कृतं बहुना। अनुप्रासादिलापनप्रकारोऽपि असद्व्याख्यानदिशोह्नीयः॥ स्रग्धरा वृत्तम्। लक्षणमुक्तं प्रागिति शम्॥३१॥

इति श्रीपण्डितदेवीदासतनुजनुषा सारस्वतवंशावतंसेन सती-विष्णुदेवीगर्भजेन स्यालकोटवास्तव्य-जैनन्यायविशारद-कवितार्किक [ तन्त्रचक्रवर्ति ]
दर्शनाचार्य-नृसिंहदेवशास्त्रिविरचितायां "सौरमोल्लासिनी"
इत्यपराख्यायां "सौभाग्यवती" नाम-कुन्दमालाव्याख्यायां
चतुर्थोऽङ्कः।

# पञ्चमोऽङ्कः

( ततः प्रविशति विदूषकः )

वि—(नेपथ्याभिमुखमवलोक्य) (१) आसण्णो तवोधणाणं संपातसमओ, ता तुवरेदु भवं।

( ततः प्रविशति रामः )

रा—सवनमवसितं हुतं कृशाना-
वुदयगतः समुपासितो विवस्वान्।

(१) आसन्नस्तपोधनानां सम्पातसमयः, तत् त्वरतु भवान्।

कामरूपाय रामाय नमो मायामयाय च।
उमाधवाय शान्ताय शिवाय च नमो नमः॥

नेपथ्याभिमुखमिति। "नेपथ्यं" वर्णिकापरिग्रहयोग्यं नटवर्गस्थानमिति पूर्वं विशिष्टमप्युक्तं १२ पृष्ठे। त्रिपुरारिरपि—"कुशीलवकुटुम्बस्य स्थली नेपथ्य इष्यते" इत्याह। तदभिमुखं दृष्ट्वेत्यर्थः। आसन्नः = समीपवर्ती। तपोधनानाम् = तपो ज्ञानमयं चान्द्रायणादिर्वा (एव) धनं येषां तेषां तपस्विनामित्यर्थः। "तपः कृच्छ्रादि कर्म चे"त्यमरः। "तपो लोकान्तरे ऽपि च। चान्द्रायणादौ धर्मे च पुमाञ्शिशिरमाघयोः" इति मेदिनी। अथवा—हितमितमेध्याशनं तपस्तद्वतां विविदिषूणामित्यर्थः। सम्पातसमयः = सङ्घीभूयोपस्थानवेला। त्वरतु = शीघ्रं करोतु।

रामः स्वकृतं कर्तव्यं भावयति—सवनमिति। सवनम् = स्नानम्। अवसितम् = समाप्तम्, कृशानौ = अनले (वह्नौ) हुतम् = हूयमानस्य वैधस्याज्यादिद्रव्यस्य प्रक्षेपः कृतः, उदयगतः = उदितः उदयाचलम्प्राप्त इत्यर्थः विवस्वान् = भास्वान्, (सूर्यः) समुपासितः = सम्यगुपासितः निध्यातः अर्थात् सन्ध्यान्तर्गतैः "उद्वयं तमसस्परिस्वः" इत्यादिभिर्वेदमन्त्रैः प्रात्याह्निकं सूर्योपस्थानमपि कृतम्। अथवा—पञ्चदेवार्चनविधया अर्घादिप्रदानेन

इति विधिमवसाय्य वासरादौ
नियमधनानहमागतः प्रणन्तुम् ॥१॥

वि—(१) एदं अत्थाणमण्डप, पविसदु भव ।

रा—( प्रविष्टकेन चिन्ता नाटयन् )

(१) एतदास्थानमण्डपम्, प्रविशतु भवान् ।

भगवान् सूर्योऽप्युचितः । इति = एवंरूपेण, वासरादौ = दिवसस्य प्रथमे भागे, विधिम् = विधानं नित्य कर्म, अवसाय्य = समाप्य नियमधनान् = नियमाः *शौचसन्तोषतपःप्रमृतयो योगशास्त्रोक्ता ( एव ) धन वित्तं येषा ते तान् योगिनो मुनीन्, प्रणन्तुम् = अभिवादयितुम्, अहमागत = आयातोऽस्मीत्यर्थः । अत्र—नियमधनविषयको रामस्य भाव. ।

" अवसाय्य " इति अत्रोपसृष्टस्य " षोऽन्तकर्मणि " इति दैवादिकस्य धातोः ण्यन्ताया ल्यपि रूपम् ॥

"सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च" इति मेदिनी । "सुत्याभिषवः सवनञ्च सा" 'कृशानु पावकोऽनल'' "भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मय " "विधिर्विधाने दैवे च" इति सर्वत्रामर । पुष्पिताग्राभिधं वृत्तम् । लक्षणमुक्तं प्राक् ॥ १ ॥ आस्थानमण्डपम् = सदोमण्डपम् । " समज्या परिषद् गोष्ठी सभा समितिसंसदः । आस्थानी क्लीबमास्थानम् " इत्यमर. । " आस्थानमण्डपम् " इति पाठ प्रसिद्धिवशात् सम्यक् प्रपद्ये । " मण्डपोऽस्त्री जनाश्रय " इत्यमर । परन्तु अप्पय्यदीक्षितविरचिताया श्रीकण्ठभाष्यटीकाया शिवार्कमणिदीपिकायां "मण्टप" शब्दोऽप्यस्माभिः पठित तस्माद्रायन्ताऽप्रसिद्धमिदम् । आतिष्ठन्त्यनेनेति "आस्थानम्" "करणाधिकरणयोश्च" (३।३।११७) इत्यधिकरणे ल्युट् । प्रविष्टकेन=प्रवेशन "प्रविष्टम्" भावे क्तः, प्रविष्टमेव "प्रविष्टकम्" स्वार्थे कन् । प्रवेशनेनेत्यर्थः । चिन्ताम् = स्मृतिम् । " स्याच्चिन्ता स्मृतिराध्यानम् " इत्यमर । चिन्तिपूजि—( ३ ।

* शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः । ( योग० पा० २ । सू० ३२ )

आ ! आश्चर्यमस्माकं किं वृत्तमतीतेऽहनि !

**अतिप्रसादादसतीव तस्मिन्**
**दृष्टा मया वारिणि पङ्कजाक्षी ।**
**लम्बालकं पाण्डुरपीनगण्डं**
**प्रसादरम्यं वदनं वहन्ती ॥२॥**

१ । १०५ ) इत्यङ् । चिन्तनं " चिन्ता " । वृत्तम् = भूतम् । अतीते = गते । अहनि = दिवसे । " अहन् " शब्दस्य सप्तम्येकवचने रूपम् । " **विभाषा** ङिश्योः " ( ६ । ४ । १३६ ) इतिसूत्रेण पक्षेऽनोऽकारस्य लोपाभावः । लोपपक्षे—" अह्नि " इति स्मर्तव्यम् ।

दृष्टमाश्चर्यमेव वर्णयति—**अतिप्रसादा**दिति । अतिप्रसादात् = अत्यन्तं निर्मलताकारणात् जलस्यातिनिर्मल्यादित्यर्थः, असतीव = अविद्यमाने इव तस्मिन् वारिणि = दीर्घिकाजले, पङ्कजाक्षी = पङ्कजे इवाऽक्षिणी यस्याः सा कमलनयना सीता, मया दृष्टा = साक्षात्कृता । कथम्भूता सा—वदनम् = मुखम् वहन्ती = धारयन्ती. .। कीदृशं वदनम्—लम्बालकम् = लम्बा लम्बमाना अलकाश्चूर्णकुन्तला यत्र तत् प्रवृतकेशमित्यर्थः । पुनः कीदृशं वदनम्—पाण्डुरपीनगण्डम्=पाण्डुरौ श्वेतरक्तौ पीनौ (नैमिशे यज्ञानुष्ठानपरस्य भर्तुर्दर्शनसम्भावनया) स्थूलौ प्रफुल्लौ गण्डौ = कपोलौ यस्य तथाविधम्, अतएव—प्रसादरम्यम् = प्रसादेन प्रसन्नतया रम्यं मनोहारि ।

दण्डान्वयस्तु—" अतिप्रसादात् असतीव तस्मिन् वारिणि लम्बालकं, पाण्डुरपीनगण्डम्, प्रसादरम्यं वदनं वहन्ती ( सा ) पङ्कजाक्षी ( सीता ) मया दृष्टा " इत्येवं ज्ञातव्यः ।

कथं वारिणि प्रतिबिम्बितस्य वदनस्य पीनगण्डतायां द्रष्टुं शक्यायामपि पाण्डुरताऽपि द्रष्टुं शक्येति चेद् ? मा गर्वं वह—" एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम् " इति न्यायेन विरहिणस्तस्य तथाभावनयाप्युत्प्रेक्षितुं शक्यत्वादिति कृतं बालमतिव्याकुलताजनकेन बहुविचारेण । .

" पङ्कजाक्षी " इत्यत्र " शेषो बहुव्रीहिः " ( २ । २ । २३ ) इति समासे " बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् " ( ५ । ४ । ११३ ) इत्यनेन

अथ वा विलोक्यते तिलोत्तमया कृतोऽय परिहास इति ।

तस्याः स्वहस्तरचितामिव कुन्दमालां
सादृश्यवन्ति सिकतासु पदानि तानि ।
छायां च देवगणिका विदधातु येन
रामं कथं स्पृशति हस्तपटान्तवातैः ॥३॥

( चिन्तां नाटयति )

समासान्त• यच् । पित्वात् ङीप् । अत्र धर्मवाचकयोर्लोपे लुप्तोपमालङ्कार । सतोपि वारिणोऽसत्सम्भावनयो प्रेक्षाचेत्यनयोर्द्वयोर्निरपेक्षयोः संसृष्टि• । इन्द्रवज्रोपेन्द्रवज्रयोरुपजाति ॥२॥

तिलोत्तमाकृत परिहासं भावयित्वाऽऽह—अथवेति। प्रकारान्तरेणाश्चर्यमेव प्रतिपादयति—तस्या इति । या देवगणिका = स्वर्वेश्या तिलोत्तमा, तया । "तस्या" इति—तस्या =सीताया , स्वहस्तरचिताम्=स्वस्य हस्तेन पाणिना रचिता गुम्फितामिव, कुन्दमालाम्=माध्यकुसुमदाम । (सीतारचितकुन्दमाला सम्या कुन्दमालामित्यर्थः) तया—सिकतासु=वालुकासु, तानि=मया पूर्वमनेकवारमनुभूतानि, सादृश्यवन्ति- सदृशस्य भावः सादृश्यं तद्वन्ति सीतापदतुल्यानि, पदानि = चरणचिह्नानि, तया—छायाम् = प्रतिबिम्बं विदधातु = करोतु (रचयितु) नामेति शेषः। येन=कारणेन "मम सीताविभ्रमो भवेदि"ति शेष । परं सा देवगणिका हस्तपटान्तवातै = हस्ते (धृतस्य) पटान्तस्य वस्त्रप्रान्तभागस्य वातैः पवनैः, रामम् = मा=रामेकपत्नीव्रतं परकीयाया सर्वथाऽऽसक्तिशून्यम्, कथम् = केन प्रकारेण, स्पृशति=स्पर्शं करोतीदमसम्भाव्यमेवेत्यर्थः ।

इदमत्राकूतकम्—सीतातुल्यचातुर्यवशात् तिलोत्तमयापि तादृशी कुन्दमाला ग्रथितुं शक्यते, सुन्दरीषु प्रायः सौन्दर्यसादृश्यमहिम्ना पदविन्याससाम्यमपि सम्भाव्येत, स्त्रीत्वसादृश्यादाकारच्छायातौल्यमपि नाऽसम्भवीति सर्वं सीतावत्तिलोत्तमा कर्तुं शक्नुयादित्ययाऽपि मन्येत, परन्तु स्वाभाविकसमुच्छलत्प्रेमोद्गारपूर्वकं मम मन्दवारकं पटान्तपवनसेवनं सा वारवनिता कदापि सीतावत्कर्तुं न पारयते, नचापि परमशुद्धे मयि तस्यास्तादृशप्रभावोऽपि शक्यसम्भव इत्यतो मन्ये सीतयैव तत्कृतं भवेदिति ।

वि—(१)एसो सचिन्तो विअ, अज्ज ता उपविसिअ णिव्वन्धइस्सम्।
( उपविश्य )
(२)भो भो वअस्स, मा तुमं एत्थ ठिदो क्खु कहिं ठिदो क्खु तुमं णवमेहसिणिद्धसामलो परिणद्धमुत्ताहारो अच्चंदसमुण्णदुदुरारोहाणं इंदनीलमआणं भवणक्खंभाणं अण्णदमो विअ मम हिअविब्भमं उप्पादेसि । ता एसस्स

(१) एष सचिन्त इव, अथ तदुपविश्य निर्बन्धयिष्यामि ।
(२) भो ! भो ! वयस्य ! मा त्वमत्र स्थितः खलु कुत्र स्थितः खलु त्वं नवमेघस्निग्धश्यामलः परिणद्धमुक्ताहारोऽत्यन्तसमुन्नदुरारोहाणामिन्द्रनीलमयानां भवनस्तम्भानामन्यतम इव मम हृदयविभ्रममुत्पादयसि । तदेतस्य लक्ष्मी-

एतेन—सीताजीवनसम्भावनया रामस्य कथमप्याश्वसनं व्यज्यत इति वस्तुध्वनिः । अत्र न्यूनपदतादोषोऽपि भाति । वसन्ततिलकावृत्तम् ॥१॥

एषः = रामः । सचिन्तः = साध्यानः । उपविश्य = स्थित्वा निर्बन्धयिष्यामि = साग्रहं प्रार्थयिष्ये । **"मा त्वमत्र"** इति । " भो ! भो ! वयस्य ! त्वमत्र स्थितः खलु कुत्र स्थितः खलु मम हृदयविभ्रमं मा उत्पादयसि " इत्यन्वयः । खल्विति वाक्यालङ्कारे । यत्र तत्र स्थितस्त्वमित्यर्थः । कथम्भूतस्त्वमिति विशेषणानि दर्शयति—नवेति । नवो नूतनो यो मेघो वारिदस्तद्वत् स्निग्धः सान्द्रस्निग्धश्चासौ श्यामलः श्यामवर्णश्च । अत्रोपमानोपमेयभूतयोर्मेघरामयोः स्निग्धश्यामलत्वे साधारणधर्मः । उपमावाचकानुपादानाद्वाचलुप्तोपमेयम् । परिणद्धमुक्ताहारः = परिणद्धः परितो नद्धो धृतः स्वस्थाने दोलन्मुक्ताहारो मौक्तिकदाम यस्य येन वा सः । अत्यन्तेति—अत्यन्तमतिमात्रं समुन्नताः सम्यगुन्नता बहून्नता अतएव दुरारोहा दुःखेनारोढुं शक्यास्तेषाम्, इन्द्रनीलमयानाम् = इन्द्रनीलाख्यमणिनिर्मितानाम्, भवनस्तम्भानाम् = भवनस्य प्रासादस्य स्तम्भानां स्थूणानाम्—अन्यतम इव=प्रासादस्तम्भविशेष इव, मम हृदयविभ्रम् = हृदये अन्तःकरणे विभ्रमं भ्रान्तिम् चित्तविक्षुब्धतामित्यर्थः । उत्पादयसि = जनयसि, जनयत्वित्यर्थः ।

भवनस्तम्भौपम्येन रामस्य दीर्घकायत्वं विशालवक्षःस्थलत्वादिकं च व्यज्यते असद्भावनया—" खलु त्व " मित्यन्तं वाक्यं " भव " इति क्रियापदमध्याहृत्य पृथग्व्याख्यातव्यम् । अग्रे—" उत्पादयसि " इत्यन्तो

लक्खीणिवासभवणस्स सेवासमअसमुवागदसामंतणरिंदमहुरसद्दोपगीतस्स अत्थाणदासेरमंडपपुंडरीअस्स कण्णिआमण्डले विअ एदस्सिं सिंहासणे महुमहणणाभीकमलकण्णिआसमारूढस्स भअवदो पिदामहस्स महत्तणं अधिक्खिवंतो उवविट्ठो होहि।

---

निवासभवनस्य सेवासमयसमुपागतसामन्तनरेन्द्रमधुरशब्दोपगीतस्यास्थानदासेरमण्डपपुण्डरीकस्य कर्णिकामण्डल इवैतस्मिन् सिंहासने मधुमथननाभीकमलकर्णिकासमारूढस्य भगवतः पितामहस्य महत्त्वमधिक्षिपन्नुपविष्टो भव।

---

मन्थमन्त्र गमकतया सुष्ठु सङ्गतो भवति। "अन्यतम इव" इत्यत्र प्रकृतस्य रामस्य समेन सम्भावनत्वादुत्प्रेक्षा।

**तदेतस्येति**—'तदेतस्य लक्ष्मीनिवासभवनस्य एतस्मिन् सिंहासने' इति सम्बन्धः। एतस्य=समीपवर्त्तिनः, लक्ष्मीनिवासभवनस्य=यज्ञानुष्ठानसमये तत्रैव निर्मापितस्य "लक्ष्मीनिवास" इत्याख्यस्य प्रासादस्य, कीदृशस्य लक्ष्मीनिवासभवनस्येत्याह—**सेवासमयेति**। सेवासमये सेवाकाले अर्थात् महाराजस्य तत्रोपस्थानकाले समुपागताना सङ्घशः समेताना सामन्तनरेन्द्राणा माण्डलिकाना नृपाणा मधुरशब्दैः=मधुरैर्हृद्यैः प्रियैः जयजयेत्यादिभिस्तवोपस्कारकैः शब्दैः, उपगीतस्य=शब्दायमानस्य, **आस्थानदासेरमण्डपपुण्डरीकस्य**=आस्थानं सभास्थानं, तत्र ये दासेराः सेवकाः, तेषा मण्डपं मण्डलं समुदाय एव पुण्डरीकम्, कर्णिकामण्डल इव=कर्णिकामण्डल पद्मबीजकोषः तस्मिन्निव, एतस्मिन् सिंहासने=राज्यासने, उपविष्टः=स्थित आरूढो भवेत्यन्वयः। अर्थात्—इतस्ततः परिभ्रमणं परित्यज्य सिंहासनमारुह्य तिष्ठ, स्थानहीनस्य शोभाभावात्। किं कुर्वन्नित्याह—**मधुमथनेति**। मधुर्मधुनामा योऽसुरः तस्य मथनो हिंसको यो विष्णुर्भगवान् मधुसूदनः तस्य, नाभ्या यत्कमलं पद्मं तस्य कर्णिका बीजकोषमारूढस्य अवस्थितस्य, भगवतः=पूज्यस्य पितामहस्य=परमेष्ठिनः, महत्त्वम्=महिमानमैश्वर्यं अधिक्षिपन्=तिरस्कुर्वन्। एतावता रामे पितामहस्यौपम्यं व्यज्यते।

(को॰) "सम्पत्तिः श्रीश्च लक्ष्मीश्च" इत्यमरः। "लक्ष्मीः श्रीशोभासम्पत्प्रियङ्गुषु" इति हैमः। "पुण्डरीकं सिताम्भोजम्" "कर्णिका कर्णभूषणे करिहस्ताङ्गुलौ पद्मबीजकोशयाम्" "परमेष्ठी पितामहः" इति सर्वत्रामरः।

**रा**—यथाह भवान्। ( उपविश्य चिन्तां नाटयन् ) अद्याहमभिनवसुखदुःखस्य सचेतन इवास्मि संवृत्तः, (ध्यानमभिनीय हस्तं च हृदये निवेश्य)

**आसीदियत्सु दिवसेषु निरस्तजाने-**
**नैराश्यलुप्तमनसो न सुखं न दुःखम्।**
**छायादिदर्शनबलादधुना मनो मे**
**दुःखं सुखं च परिगृह्य पुनः प्रसूतम्॥ ४॥**

( चिन्तां नाटयति )

---

रामो विदूषकवचः श्रुत्वाऽऽह—**यथाहेति**। **अभिनवेति**। अभिनवं सद्यस्कञ्च तत्सुखदुःखं तस्य, सचेतनः = ज्ञातेवास्मि संवृत्तः। इतः पूर्वं सुखदुःखानुसन्धानं मम नाभूदित्यर्थः। वस्तुतस्तु सीताविरहजनितं दुःखमासीदेव किन्तु—तत्तिरोहितमितीदमभिनवपदद्योत्यम्। तदेव स्फुटीकरोति—**आसीदिति**। इयत्सु दिवसेषु = सीतात्यागदिवसमारभ्याद्यपर्यन्तेषु वासरेषु, नैराश्यलुप्तमनसः = निराशस्य भावो नैराश्यम् = आशाशून्यता तेन लुप्तं नष्टं मनश्चित्तं यस्य तस्य, निरस्तजानेः = निरस्ता त्यक्ता जाया येन तेन निर्वासितवल्लभस्य "मम सुखं न आसीत् दुःखञ्च नासीत्" = सीतात्मकविषयसत्ताऽनुसन्धानाभावात्तत्सम्बन्धेन सुखदुःखानुभवस्याभाव एवाऽसीदिति भावः। अधुना= इदानीम्, छायादिदर्शनबलात् = दीर्घिकायां सीतायाः प्रतिबिम्बसाक्षात्कारसामर्थ्यात्, मे = मम, मनः = अन्तःकरणम् दुःखं सुखञ्च परिगृह्य = आदाय सुखदुःखयोराकारं धृत्वा, पुनः = भूयः प्रसूतम् = उत्पन्नमिव।

आदिपदेन वालुकायां पदपङ्क्तेः, गङ्गायां कुन्दमालादेश्च परिग्रहः।

अत्र—विद्यमानस्यापि मनसः सीतासम्बन्धेनोत्पन्नायाः सुखदुःखाकारवृत्तेस्तादात्म्यसम्भावनेन **स्वरूपोत्प्रेक्षा**। सा च वाचकशब्दाभावाल्लुप्ता। नित्यञ्च मन इति दर्शनं न श्रौतम् "**तन्मनोऽकुरुत**" ( ) इत्यादिश्रुतौ मनसोऽप्युत्पादविनाशदर्शनात्। प्रपञ्चितश्चायमर्थोऽस्माभिरन्यत्र दर्शनविरोधपरिहारपूर्वकमिति बह्वर्थव्यवधानं मत्वा नात्र वर्णितः। सादृश्यदर्शनसमुद्बुद्धसंस्कारत्वात्तातीतविषयकसुखदुःखस्मृतेः स्मरणालङ्कारोऽपि। स चोत्प्रेक्षयोपस्कृत इति तयोरङ्गाङ्गिभावात्सङ्करः। वसन्ततिलकावृत्तम्॥ ४॥

**वि**—( निर्वर्ण्यात्मगतम् ) अहो से संपदं अभिप्पाअं लक्खइस्सन्। ( प्रकाशम् ) भो राअं, एदे आसणकेसरिणो गुरुदरभरुव्वेहणजादपरिस्समा विअ मुहविवरविणिग्गअमुत्ताकलावच्छलेन फेणधारं उव्वमंति, तह तक्केमि बाहुजुअलेण पुढवीं हिअएण पुढवीदुहिदरं धव्वहंतो अदीव गुरुअरो संवुत्तोत्ति।

(१) अहो! अस्य साम्प्रतमभिप्रायं लक्षयिष्ये। (——) भो! राजन्! एते आसनकेसरिणो गुरुतरभारोद्वहनजातपरिश्रमा इव मुखविवरविनिर्गतमुक्ताकलापच्छलेन फेनधारामुद्वमन्ति, तथा तर्कयामि बाहुयुगलेन पृथिवीं हृदयेन पृथिवीदुहितरमुद्वहन्नतीव गुरुतरः संवृत्त इति।

निर्वर्ण्य=विचार्य। आत्मगतम् = स्वगतम्। "अहो"......अभिप्रायम् = आशयम्। लक्षयिष्ये = इङ्गितादिना ज्ञास्यामि। एते=**आसनकेसरिणः**=आसनसिंहाः, राजासनं हि निर्मितैः सिंहैरुह्यते। अतएव **गुरुतरे**ति–गुरुतरस्य महताऽपि महीयसो भारस्य भरस्य उद्वहनेन उत्थापनेन जातः प्राप्तः परिश्रमो ग्लानिर्येषां ते तादृशाः। **मुखविवरे**ति–मुखविवरात्=आस्यबिलाद् विनिर्गता बहिरुच्छलिता ये मुक्तानां कलापाः समूहास्तयो मौक्तिकदामभूषणानि तेषां छलेन व्याजेन, फेनधाराम् = फेनस्य अब्धिकफस्य धारा सन्ततिम्, उद्वमन्ति = उद्गिरन्तीवेति कैतवापह्नुतिमूलोत्प्रेक्षा। "**कैतवापह्नुति**र्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैः" रित्याह **जयदेवः**। अर्थात्सत्यत्वाभिधायिना छलपदेन नैते मुक्ताकलापाः किन्तु फेनधारा एता इत्यपह्नवः प्रतीयते, तन्मूलायेयमुत्प्रेक्षा, सिंहासनकेसरिमुखरन्ध्रस्थितमुक्ताकलापस्य फेनोद्गमनतादात्म्यसम्भावनात्। क्रियास्वरूपोत्प्रेक्षेयमित्यपि न विस्मर्तव्यम्।

तथा तर्कयामि=तेन प्रकारेण सम्भावयामि। "यत्तदो र्नित्यमभिसम्बन्ध" इति नियमेन प्राचि गद्ये "भो राजन्" इत्यस्याग्रे "यथा-( एते आसनकेसरिण. ) इति पाठ्यम्। बाहुयुगलेन=भुजद्वन्द्वेन। पृथिवीम्=भूमिम्। हृदयेन पृथिवी दुहितरम् = सीताम्, उद्वहन् = धारयन्, अतीव=अत्यन्तमेव, गुरुतरः = अतिशयेन गुरुरिति गुरुतर, संवृत्तः = जात इति। भारद्वयोद्वहनान्मवान् महान् गुरुर्जात अत एव त्वद्गुभारश्रान्ताना सिंहासनकेसरिणा मुखादधिकफ एव निःसरतीति भावः।

रा—( आत्मगतम् ) सीताकथामुपश्रुत्य ( विप्य ) कौशिको नूनं जिज्ञासते; एष बालमित्रम्, तदस्मै यथास्थितं निवेदयामि। ( प्रकाशम् ) वयस्य! अस्त्येतत् स्मराम्यहमविच्छेदेन वैदेहीम्।

वि—(१) किं दोसदो आदु गुणदो ?

रा—न दोषतो नापि गुणतः।

वि—(२) एदं उभयं उज्झिअ कहं सीमन्तिणीओ सुमरीअंति ?

रा—अन्यदम्पतीविषय एवं कारणानुरोधी प्रेमावेशः, सीतारामयोस्तु न तथा।

---

(१) किं दोषतः, उत गुणतः ?

(२) एतदुभयमुज्झित्वा कथं सीमन्तिन्यः स्मर्यन्ते ?

---

( कौ० ) " समुद्राब्धिकफः फेनः " " कलापो भूषणे बर्हे तूणीरे संहतेऽपि च " इत्यमरः।

सीताकथाम्=सीतोदन्तम्, उपश्रुत्य=आकर्ण्य " उपश्लिष्य " इति पाठे सीताकथां सन्निधिरित्यर्थः। उभयथापि नायुक्तमत्र तयोगात्। जिज्ञासते= ज्ञातुमिच्छति। बालमित्रम्=कौपीनसखः। शैशवादारभ्य मैत्रीचरणात्। अस्मै=कौशिकाय। यथास्थितम्=यथार्थम्। वस्तुतत्त्वमित्यर्थः। निवेदयामि= वर्णये। अस्त्येतत्=यथा त्वं वदसि तत्तथैव। स्मरामि=चिन्तये अविच्छेदेन= नैरन्तर्येण वैदेहीम्=विदेहसुतां जानकीम्। वि० पृच्छति किमिति। रा० उत्तरयति—नेति। वि० तर्कयते एतदिति। उभयम्=गुणदोषावित्यर्थः। उज्झित्वा=त्यक्त्वा। सीमन्तिन्यः=स्त्रियः। रा० स्वपक्षे उपपत्तिमाह— " अन्यदम्पतीविषय " इति। अन्यौ रामसीताभिन्नौ यो दम्पती जायापती तद्विषये। कारणानुरोधी=कारणसम्बन्धी गुणसम्बन्धेन प्रवर्तमानः प्रेमावेशः= आसक्त्यतिशयः। सीतारामयोस्तु, न=नैव तथा=तादृशः। कीदृशस्तर्हीति जिज्ञासां राममिनुमाह—दुःखे सुखेष्विति।

दुःखे सुखेष्वप्यपरिच्छदत्वा-
दसूच्यमासीच्चिरमात्मनीव ।
तस्यां स्थितो दोषगुणानपेक्षो
निर्व्याजसिद्धो मम भावबन्धः ॥५॥

वि—मा सुमं वैदेहिं अलिअमहुरवअणेहिं अंहारिसं वंचेसि । सो क्खु तुमं देविं अंतरेण ।

(१) मा सुमं (?) वैदेहीमलीकमधुरवचनैरस्मादृशं वञ्चयसि । स खलु त्वं देवीमन्तरेण ।

तस्याम्=सीतायाम्, दोषगुणानपेक्ष=दोषा वैरस्यादयः गुणाः सौन्दर्याद्या. तेषां नास्त्यपेक्षा यस्य स तादृशः, निर्व्याजसिद्धः=स्वाभाविसिद्धो निष्कारण इत्यर्थः, मम भावबन्धः=प्रीतिबन्धः, दुःखे=दुःखेषु प्रतिकूलवेदनीयेषु सुखेषु=अनुकूलवेदनीयलक्षणेषु अपि अपरिच्छदत्वात्=अनावृतत्वात् स्पष्टत्वादिति यावत्, असूच्यम्=न सूच्यं वचनीयमित्यसूच्यं सीताप्रियोऽहमस्मि सीता च मम प्रियेति वाचा निरूपणानर्हं यथा तथा, आत्मनि इव=स्वस्वरूप इव, चिरम्=चिरकालाय स्थितः=विद्यमान=आसीत्=अभूत् ।

यथा स्वात्मनि गुणदोषमनपेक्ष्यैव निरतिशयः प्रेमा सन्दृश्यते आनन्दरूपत्वादात्मनः । श्रुतिश्च भवति—" नवाऽरे ! पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति " (बृहदा० ४।४।५) इत्याकारा ऽऽत्मनः प्रियतारूपप्रतिपादिका, तद्वत् सीतायामपि मम भावबन्धो नैव दोषगुणानुरोधी, किन्तु स्वाऽभिन्नतया निरभिसन्धिप्रेमाऽस्तीति युक्तमुक्तं मया—" न दोषतो नापि गुणत " इति रामाशयः । अत्र—त्रयः पादा उपेन्द्रवज्रायाः, अन्तिमस्तु—इन्द्रवज्राया इति द्वयोरुपजातिः ॥५॥

**मा सुममिति** । यथा सुमं वैदेहीमलीकमधुरवचनैर्वञ्चयसि तथा ऽस्मादृशं जनमपि मा वञ्चयसि=प्रतारणार्थं यत्नं मा कुर्वित्यर्थः । अत्र न्यूनपदतादोषः । अर्थात् तव हृदि सीताविषयकः प्रेमा तु नास्ति केवलमुपरि प्रेमाणं दर्शयित्वा तया सह दिनान्यगमयः, वस्तुतस्तु तस्यां विरक्तोऽसि, अन्यथा तस्यागाऽसम्भवात् । एतदेवाह—" स त्वं देवीम तरेण " इति । अत्र "निर्दाहमकरो"रिति शेषपूर्त्या व्याख्येयमिति भाति ।

रा—नैवमध्यवसितं—एकान्ते सीतानिरपेक्षो राम इति ।
अन्तरिता अनुरागा भावा मम कर्कशस्य बाह्येन ।
तन्तव इव सुकुमाराः प्रच्छन्नाः पद्मनालस्य ॥६॥
वि-(१) तुमं अदिप्पवलेण हिअअसंदावेण बडवाणलेण विअ भअवं

(१) त्वमतिप्रवलेन हृदयसन्तापेन वडवानलेनेव भगवान्महासमुद्र आत्मनो

कौशिकवचनमश्रद्धेयं मत्वा राम आह—नैवमध्यवसितमिति । अध्यवसितम्=निश्चयः । तवैवमध्यवसितं न युक्तमित्यर्थः । किन्त्वित्याह—"एकान्त" इति—" राम एकान्ते सीतानिरपेक्ष इति " एवं यत्तवाध्यवसितमिति । अन्वयस्तु—" एकान्ते सीतानिरपेक्षो राम इत्येवमध्यवसितं न" युक्तमिति शेषः । " एकान्तसीतानिरपेक्ष " इति पाठः समीचीनो भाति । कथमित्याह—" अन्तरिता "इति । बाह्येन कर्कशस्य=प्रजारञ्जनात्मककार्यव्यग्रतया बहिरेव कठोरस्य शुष्कस्वभावस्य मम=रामस्य, अनुरागाः=( सीताविषये ) प्रीत्यात्मकाः भावाः=चित्तावस्थाविशेषाः, सुकुमाराः=अत्यन्तकोमलाः, अन्तरिताः=प्रच्छन्नाः सन्तीति शेषः । कस्य के इव—पद्मनालस्य=नलिन ( कमल ) दण्डस्य, प्रच्छन्नाः=अन्तर्गुप्ताः तन्तवः=सूत्राणि इव । कथम्भूतस्य पद्मनालस्य—बाह्येन कर्कशस्य=बहिः कठोरस्य खरतरस्य, कीदृशास्तन्तवः—सुकुमाराः=मृदुलाः । यथा—मृणालदण्डो बहिः कर्कशो भवति, परं तदन्तरवस्थितास्तन्तवस्तु नितान्तं कोमला भवन्ति तद्वन्ममापि अनुरागात्मकान्भावानत्यन्तं कोमलान् मम बहिरेव कर्कशं विद्धि । एतेन रामस्य धीरोदात्तधौरेयत्वं व्यज्यते ।

"सूत्राणि नरि तन्तवः" "वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्" इत्युभयत्रामरः । " नालं न ना पद्मदण्डे नालीशाककदम्बके " इति कोषान्तरम् । उपमालङ्कारः । पथ्यावृत्तम् ॥६॥

अतिप्रबलेन=बहुवेगवताऽसह्येनेत्यर्थः । हृदयसन्तापेन=मनोदुःखेन । वडवानलेनेव=सागरवह्निनेव । भगवान्=गरिष्ठः महासमुद्रः=वाराशिधिः आत्मनो

महासमुद्दो अत्तणो महत्तणेण परिहीअसि । अह उण सहावलहुदाए देवीए सीदाए गइ सुमरिअ दावाणलेण विअ तुसारविंदु णिरवसेस पुरिसुस्सामि, ता परित्ताएहि म । (इति रोदिति)

रा—यदि त्व स्मरणयोग्या सीतामवगच्छसि कस्मादह तत्परित्याग-प्रवृत्तस्त्वया न प्रतिषिद्ध ?

वि—(१) पसादसुमुहो वि राआ दुव्विण्णवणिज्जो सेवएहिं, किं उण कोवभीसणो ।

---

दावानलेनेव तुषारबिन्दुर्निरवशेष परिशुष्यामि । (—)

(१) प्रसादसुमुखोऽपि राजा दुर्विज्ञाप्य सेवकै किं पुन कोपभीषण. ।

---

महत्त्वेन=स्वस्य महिम्ना, परिहीयसे=त्यज्यसे । स्वभावलघुतया=स्वभावेन क्षुद्रतया अल्पाशयतयेत्यर्थ । देव्या = पट्टाभिषिक्ताया सीताया, गतिम् = गर्भभराया अपि वनवासरूपामवस्थाम् । स्मृत्वा = चिन्तयित्वा । "दावानलेन तुषारबिन्दुरिवे"त्यन्वय । दावानलेन = वनवह्निना तुषारबिन्दु = हिमकण । निरवशेषम् = अवशेषरहित ( सर्वथैव ) यथा स्यात्तथेति क्रियाविशेषणम् । परिशुष्यामि = शुष्को भवामि तप्य इत्यर्थ ।

यथा महान् समुद्रो वडवानलेन दह्यमानोऽप्यन्त सारो गाम्भीर्य न मुञ्चति तद्वत्त्व तु गाम्भीर्येण सीताशुच स्वात्मस्था कर्तुं पारयसे, अहम्पुन. तुषारकण इव नि सारतया तद्दु खेन नितान्त तप्ता भवामी यथ । त्वदपेक्षया महाराज्ञ्या परित्यागजनित क्लेशो ममाधिक एवास्तीति विदूषकाशय ।

एतद्वाक्यर्थ रामस्तस्य बुद्धिदौर्बल्य प्रकटयति—" यदित्वम् " इति । स्मरणयोग्याम् = गुणै स्मरणार्हाम् । अवगच्छसि = मनुषे । कस्मात् = हेतो । तत्परित्यागप्रवृत्त = तस्या सीताया परित्याग वनवास प्रवृत्त उद्यत , त्वया एतादृश सीतात्यागदु ख भावयता प्रतिषिद्ध = निषेधविषयीकृत । विदूषको रामस्यैव दोष समर्थयन्नाह—"प्रसादसुमुख" इति । प्रसादसुमुख =प्रसादेन सुमुख शोभनानन परितोषस्वभाव इत्यर्थ । सेवकै = भृत्यै , दुर्विज्ञाप्य = दु खेन विज्ञापनीय कष्ट निवेदनीयो भवति, किं पुन कोपभीषण = कोपेन क्रोधेन भीषणो भयङ्कर कथ पुनर्विज्ञापनीय स्यात् ? । कोपभीषण-त्वादेव भवान् तदानी मया न प्रतिषिद्ध इति तत्रैवापराधो न ममेति भाव ।

**रा**—वयस्य न हि मादृशास्तादृशीं कोपावस्थामवगाहन्ते, यस्यां वर्तमानायां सुहृदामनाश्रवा भवन्ति ।

नरपतिरधिकप्रवृत्ततेजा
गुणनिहितैः सचिवैर्निवारणीयः ।
भुवनमभितपन् सहस्ररश्मि-
र्जलगुरुभिर्व्यपनीयते हि मेघैः ॥७॥

---

रामः स्वकीयं कोपभीषणत्वं वारयति—**वयस्येति** । मादृशाः = प्रसादपरायणाः, तादृशीम् = अविवेकप्रयुक्ताम्, कोपावस्थाम् = क्रोधदशाम्, (नहि = नैव) अवगाहन्ते = प्राप्नुवन्ति । यस्यां वर्तमानायाम् = विद्यमानायाम्, सुहृदाम् = मित्राणाममात्यादीनामन्तरङ्गभूतानाम्, अनाश्रवाः = वचने स्थिता आश्रवाः, न आश्रवोऽनाश्रवाः उच्छृङ्खला अवशा इति यावत् ।

अत्र प्रकृतं मान्त्रिकृत्यमेव दृष्टान्तेनोपपादयति—**नरपतिरिति**—अधिकप्रवृत्ततेजाः = अधिकं मात्रातीतं प्रवृत्तमुद्भूतं तेजः प्रभावः कोपविशेषो यस्य सः, गुणनिहितैः = गुणेषु फलानुसारिमन्त्रणादिकर्मसु निहितैर्नियुक्तैर्दत्ताधिकारैः, सचिवैः = अमात्यैः, निवारणीयः = प्रतिषेधनीयः सर्वथैव रोधनीय इत्यर्थः । हि = तथाहि—( तादृशनरपतिवारणरूपोऽर्थो योग्य एव ) भुवनमभितपन् = त्रिलोकीं समन्ततः तापयन् सहस्ररश्मिः = चण्डांशुः ( सूर्यः ) जलगुरुभिः = जलेन गुरुभिः नीरपरिपूर्णैः मेघैः = वारिदैः व्यपनीयते = दूरीक्रियते प्राच्छाद्यते इत्यर्थः । कीदृशः सहस्ररश्मिः—अधिकप्रवृत्ततेजाः = अधिकं प्रवृत्तं तेजो दीप्तिर्यस्य सः । अत्र दृष्टान्तालङ्कारः । "चेद् बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः" इति तल्लक्षणात् । यत्रोपमानोपमेयवाक्ययोर्भिन्नावेव धर्मौ बिम्बप्रतिबिम्बभावेन निर्दिश्येते तत्र दृष्टान्तालङ्कारः । अत्र—"नरपति"रित्याद्युपमेयवाक्यम्, "भुवनमभितपन्" इत्याद्युपमानवाक्यम् । नरपतिर्वारणीयः, सहस्ररश्मिरपनीयत इति नरपतिसहस्ररश्म्योर्वारणाद्यन्वयेन बिम्बप्रतिबिम्बभावः ।

वस्तुतो भिन्नयोरप्युपमानोपमेयधर्मयोः परस्परसादृश्यादभिन्नयोः पृथगुपादानं **बिम्बप्रतिबिम्बभावः** । लोको हि दर्पणादौ बिम्बात्प्रतिबिम्बस्य भेदे

वयस्य ! वर्तमाना सीताकथा द्वयो सन्तापकारिणी । तद्गच्छ प्रतीहारभूमिम् । समाज्ञापय दौवारिकान्, समासन्नस्तपोधनानां सम्पातसमय, तस्मात्सम्भृतवेत्राणि सर्वद्वाराणि क्रियन्ताम् ।

वि—(१) भो राअ, कीस उण एदे कन्दमूलफलासिणो

(१) भो ! राजन् ! कीदृशा पुनरेते कन्दमूलफलाशिनो

ऽपि मदीयमेवान्न वदनमित्यमेदेनाभिमन्यते, अन्यथा हि प्रतिबिम्बदर्शने कृशोऽहं स्थूलोऽहमित्याद्यभिमानो नोदायादिति न तिरोहितम् ।

इदन्तु बोध्यम्—प्रतिवस्तूपमायामेकोऽपि समानो धर्मो भिन्नशब्दाभ्यां पृथङ्निदिश्यते, अर्थान्तरन्यासे समर्थ्यसमर्थकवाक्ययो सामान्यविशेषभाव, दृष्टान्ते तु द्वयोर्वाक्ययो सामान्यधर्मस्य दर्शितरीत्या बिम्बप्रतिबिम्बभाव इति विशेष । पुष्पिताग्राभिधं वृत्तम् ॥७॥

वयस्य ! मित्र ! । वर्तमाना = वनवासरूपेत्यर्थ । द्वयो = तव मम चेत्यर्थ । सन्तापकारिणी=दुःखप्रदा । प्रतीहारभूमिम्=द्वार (पाल) भूमिम्, द्वारस्थानमित्यर्थ । " स्त्री द्वार्द्वार प्रतीहार " इत्यमर । दौवारिकान् = द्वारे नियुक्तान् द्वारपालानित्यर्थ । " तत्र नियुक्त " ( ४ । ४ । ६९ ) इति सूत्रेण ठक् । " ठस्येक " ( ७ । ३ । ५० ) इतीकादेश—" द्वारादीनाञ्च" ( ७ । ३ । ४ ) इति सूत्रेण वृद्ध्यभावे ऐजागमे रूपसिद्धि ।

समासन्न = निकटवर्ती । सम्पातसमय = सङ्गम समागमनवेला । सम्भृतवेत्राणि = सम्भृतानि स्थापितानि वेत्राणि यष्टय लक्षणया वेत्रधरा = ( यष्टिधरा द्वारपाला ) यत्र तादृशानि सर्वद्वाराणि क्रियन्ताम् = विधीयन्ताम् । सर्वद्वारेषु द्वारपालै सावधानै स्थेयं येन कस्यापि तपोधनस्य सत्कारादिविषये प्रमादो न भवेत्, नराऽन्य कश्चनानधिकारी प्रवेशं लभेतेति भाव ।

कन्दमूलफलाशिन = कन्दश्च मूलञ्च फलञ्च तानि "कन्दमूलफलानि" तान्यशितुं शीलमेषां ते कन्दमूलफलाशिन । तत्र—कन्द सस्यमूलम् । " कन्दोऽस्त्री सूरणे सस्यमूले जलधरे पुमान् " इति मेदिनी । मूलम् = मूलकम्, " अस्त्री तु मूलकम् " अथवा—मूलं शिफा, " मूलमाद्ये शिफाऽ

वक्कलपरिधाणा उद्दंडदंडधरा ईरिसेण आआरेण संभाविअंति ।

रा—अस्थानेऽयमत्रभवतः सन्देहः । ननु मूलस्वयोगमूलसकल-

---

वल्कलपरिधाना उद्दण्डदण्डधरा ईदृशेनाचारेण सम्भाव्यन्ते ।

---

भयोः " इत्युभयत्रामरः । वल्कलपरिधानाः = वल्कलं वृक्षत्वक् परिधानं संव्यानं येषां ते । उद्दण्डदण्डधराः = उद्दण्डाः भयङ्करा ये दण्डाः तेषां धराः = धारिणः भीतिप्रददण्डवहाः । ईदृशेन आचारेण = सत्काररूपेण व्यवहारेण, सम्भाव्यन्ते = सम्भाल्यन्ते ।

अस्थाने = असाम्प्रतम्, अत्रभवतः = सत्कारार्हस्य मित्रत्वाद् ब्राह्मणत्वाद्वा । अथवा—अत्र = अस्मिन् विषये भवतस्तव सन्देह इति योजनीयम् । अस्मिन् विषये तव संशयो न युज्यत इति भावः । कुत इत्याह—**नन्विति** । ननु = निश्चितमेतत् ।

**मूलस्वयोगेति**—मूलं सर्वस्यास्य प्रपञ्चस्य कारणमीश्वरः । "तेन सह यः स्वयोगः स्वस्य जीवात्मनो योगः = सम्बन्धः अर्थात् चित्तवृत्तिनिरोधः * "ईश्वरप्रणिधानाद्वा" ( यो० १ । २३ ) इति पातञ्जलोक्तेः, "अयन्तु परमो धर्मो यद्योगेनात्मदर्शनम्" इत्यभियुक्तोक्तेश्च । तन्मूलानां सकलानां चतुर्णां धर्मादीनां पुरुषार्थानां संवेदिनी बोधयित्री ज्ञाननिष्पत्तिः योगत्र-सामर्थ्यलब्धप्रातिभज्ञानसिद्धिरमीषामस्तीति शेषः ।

अथवा—मूलं = सर्वस्य चराचरात्मकस्यास्य प्रपञ्चस्य यदभिन्ननिमित्तो-पादानकारणं परब्रह्म—[ † "जन्माद्यस्य यतः" ( १ । १ । २ )

---

* **प्रणिधानमत्र**—ईश्वरवाचकप्रणवस्य जपस्तदर्थभावनञ्चेति भावना-विशेषः, तस्माद्योगिन आसन्नतरः समाधिलाभस्तत्फलञ्च भवतीत्यर्थः ।

† **अस्य** प्रपञ्चस्य यतः सकाशाज्जन्मादि सम्भवतीति तद्ब्रह्मेति सूत्रार्थः । तत्र प्रमाणं "यतो वा इमानि भूतानि जायन्ते" ( तै० ३ । १ । १ ) इत्यादि ।

पुरुषार्थसंवेदिनी ज्ञाननिष्पत्तिः । (?) पश्य—

ज्योतिः सदाभ्यन्तरमाप्तपादै-
रदीपितं नार्थगतं व्यनक्ति ।

* " प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् " ( १ । ४ । २३ ) * " योनिश्च हि गीयते " ( १ । ४ २७ ) इत्यादिब्रह्मसूत्रैरपि मीमांसितम् ] तेन ब्रह्मणा सह यः स्वयोगः = स्वस्य जीवात्मनो योगो - वृत्तिनिरोधपूर्वकमभेद-रूपतयाऽभिध्यानम् अर्थात्—" अहम्ब्रह्मास्मि " इत्येवमभेदचिन्तनम्, तन्मूलो यः सकलो मुख्यः †पुरुषमात्रेणार्थ्यमानत्वात् पुरुषार्थो मोक्षाभिधानः तस्य संवेदिनी = प्रकाशयित्री ज्ञाननिष्पत्तिर्ज्ञानर्धिरित्यन्यत्पूर्ववत् ।

एवम्भूतज्ञानर्धिसम्पन्नाना सर्वं करामलकवत् साक्षात्कृतमस्तीति वन्दनीया एवैत इति सारसारः ।

यद्येवं, तर्हि तेषां तादृशी ज्ञाननिष्पत्तिः कुतः सकलानुभवगोचरो न भवतीत्याशङ्कायामाह—" पश्ये "ति । ज्योतिरिति—सत् = त्रैकालाबाध्यम् "सदेव सौम्येदमग्र आसीदि"ति श्रुतेः । "ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रि-विधः स्मृत" इति स्मृतेश्च । आभ्यन्तरम् = अन्तःकरणात्मकगुहानिहितम् " गुहाहितं गह्वरेष्ठं पुराणम् " इति श्रुतेः एवम्भूत-ज्योतिः = स्वप्रकाशरूपं सर्वस्यात्मभूतम्ब्रह्म "अत्रायं पुरुषः स्वयञ्ज्योतिः" इति श्रुतेः । आप्तपादैः = "आप्तः खलु साक्षात्कृतधर्मा यथाभूतार्थचिख्यापयिषया प्रयुक्त उपदेष्टा, साक्षात्करणमर्थस्याप्तिः तया प्रवर्तमान आप्त" इत्युक्तलक्षणाः परमपूजनीया ब्रह्मश्रोत्रियाः ब्रह्मनिष्ठा ये आचार्यवर्यास्ते " आप्तपादा " तैराप्तपादैः, अदी-पितम् = न दीपितमदीपितमप्रकाशितमनुपदिष्टं सत् ज्योतिः, अर्थगतम् = परमा-र्थरूपं यथात्म्यात्तया न व्यनक्ति = प्रकाशितं न भवतीत्यर्थः ।

* प्रकृतिरुपादानं चकारान्निमित्तमपि ब्रह्मैव, कुतः—प्रतिज्ञादृष्टान्ता-नुपरोधात् = प्रतिज्ञादृष्टान्तयोरनुपरोधो विरोधाभावः सामञ्जस्यमिति यावत् तस्मादित्यर्थः । तत्र प्रतिज्ञा—" येनाश्रुतं श्रुतम्भवति " (छा० ६ । १।२) इत्यादि । दृष्टान्तोऽपि । " यथा सौम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृन्मयं विज्ञातम् ( छा० ६ । १ । ४ ) इत्यादि ।

† पुरुषपदञ्चात्र जीवमात्रपरं द्रष्टव्यम्, सर्वो हि जन्तुर्निरतिशयसुखार्थी ।

नालं हि तेजोऽप्यनलाभिधानं
स्वकर्मणो मारुतमन्तरेण ॥८॥

वि—(१) जदि महत्थो तपोधणाणं समाअमो अहं अ लहु गच्छिअ जहआणत्ति संपादेमि (निष्क्रम्य पुनः प्रविश्य) ही ही सो संपदं मए राइणो आण्णाए पडिहारणिविसचेण दिट्ठा सुसिणिद्धसामलच्छाआ

---

(१) यदि महार्थस्तपोधनानां समागमः अहं च लघु गत्वा यथाज्ञप्ति सम्पादयामि। (—) ही! ही! सांप्रतं मया राज्ञ आज्ञया प्रतीहारनिर्दिष्टेन

---

अथवा—अर्थ्यते कामिभिरित्यर्थः प्रपञ्चः वीतरागाणां प्रपञ्चे कामनाया अदर्शनात् तस्य प्रपञ्चात्मकस्याऽर्थस्य "गत" मधिष्ठानं सकलप्रपञ्चाधारभूतं ब्रह्मेत्येवं व्याख्यानं "अर्थंगत" मितिपदं "ज्योति"रित्यस्यैव विशेषणम्।

यद्यप्येवंविधं ज्योतिः=स्वप्रकाशं सकलगुहाहितं सर्वात्मभूतमस्ति तथापि= "आचार्यवान् पुरुषो वेद" (          ) "तन्त्वौपनिषदं पुरुषं पृच्छामि" (बृ० ३।९।२६) इत्यादिश्रुतिप्रामाण्याद्गुरूपदेशं विना तत्प्राप्तिर्न सुलभेति अतोऽस्याचार्योपदेशात्मकबाह्यसाधनापेक्षा, अत एव तादृशज्ञाननिष्पत्तिर्न सकलानुभवगोचरः। अत्रार्थे दृष्टान्तमाह—"हि" इति निश्चितमेतत्—अनलाभिधानम्=वाह्न्यात्मकं ज्योतिः, मारुतमन्तरेण=पवनं विना, स्वकर्मणः=स्वस्य दाहाख्यस्य कर्मणः क्रियायाः (कृते) न, अलम्=नैव समर्थम्, यथा–दाहात्मकस्यापि वह्नेः दाहक्रियायै पवनसम्बन्धापेक्षा तथा स्वयम्प्रकाशस्यापि परब्रह्मणः साक्षात्कारायाऽऽसोपदेशापेक्षा। एवमेते तादृशब्रह्मनिष्ठा आप्ता अभ्युदयनिःश्रेयसलाभार्थिभिरवश्यं सत्करणीया इति भावः। पूर्ववदत्रापि दृष्टान्तालङ्कारः। तज्ज्ञापनप्रकारश्च तथैव ज्ञेयः। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः ॥८॥

एतच्छ्रुत्वा विदूषक आह—"यदि महार्थ" इति। महार्थः= महाप्रयोजनः ऐहिकामुष्मिकलाभप्रद इत्यर्थः। लघु=शीघ्रम्। "लघु क्षिप्रमरं द्रुतम्" इत्यमरः। "ही ही" आश्चर्यार्थकमव्ययम्। प्रतीहारनिर्दिष्टेन=

अणुद्भिण्णतारुण्णविग्गहा तोरणत्थंभवट्ठिदा मंगलंकुरा विअ बालभावेण असमत्तपमाणा विअ अप्पमादा विअ कंदप्पदार आ विअ रूपसोवग्गेण उच्चदरा सालतरू विअ पप्पंदा विअ लोलदरा विअ महाबला विअ अचंत-

दृष्टौ सुस्निग्धश्यामलच्छायौ अनुद्भिन्नतारुण्यविग्रहौ तोरणस्तम्भावस्थितौ मङ्गलाङ्कुराविव बालभावेन, असमाप्तप्रमाणाविव, अप्रमादाविव, कन्दर्पदारकाविव रूपसौभाग्येन, उच्चतरौ सालतरू इव, प्रस्पन्दाविव, लोलतराविव, महाबलाविव,

द्वारकर्मणि योजितेन । सुस्निग्धेति । सुष्ठु स्निग्धा चिक्कणा श्यामला च छाया कान्तिर्ययोः तौ, अनुद्भिन्नतारुण्यविग्रहौ = न उद्भिन्नं प्रकटीभूतं तारुण्यं यौवनं यत्र तादृशो विग्रहः शरीरं ययोस्तौ बालाविवेत्यर्थः । तोरणेति— तोरणो बहिर्द्वारं तस्य स्तम्भः स्थूणा तत्र स्थितौ । " तोरणोऽस्त्री बहिर्द्वारम् इत्यमरः ।

मङ्गलेति—मङ्गलस्य शिवस्य कल्याणस्याङ्कुराविव प्ररोहाविव, बालभावेन = बाल्येन । बाल्यमङ्गलयोः प्रारम्भसद्भावेन साम्यम् । " श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ". " अङ्कुरोऽभिनवोद्भिदि " इत्युभयत्रामरः । असमाप्तप्रमाणाविव = न समाप्तं प्रमाणमुच्छ्रायो ययोस्तौ पूर्णतामप्राप्तौ अङ्कुरोऽप्यसमाप्तपरिमाणो भवति । अप्रमादाविव = न प्रमादोऽनवधानता ययोस्तौ विनीतत्वात्प्रमादशून्याविवेत्यर्थः । कन्दर्पेति— कन्दर्पस्य कामस्य दारकौ पुत्राविव अत्रोपमायां साधारणधर्ममाह— रूपसौभाग्येनेति—रूपसम्पत्त्येत्यर्थः । उच्चेति—उच्चतरौ = अत्युन्नतौ, सालतरू इव = सालवृक्षाविव । प्रस्पन्दाविव = प्रस्पन्दः कार्यमात्रे स्फुरतिः ताविव । यद्यपि " स्पन्द " धातुरीषत्कम्पार्थः, तथापीहोपसर्गबलादस्य स्फुरतिरूपोऽर्थः " उपसर्गेण धात्वर्थोबलादन्यत्र नीयते " इति वचनात् । लोलतराविव = अतिशयेन लोलाविति लोलतरौ बालकालीनचपलतातिशयान्विताविवेत्यर्थः । महाबलाविव = अतिमात्रशौर्येणेनाविव । अत्यन्तधीराविव = यथाधिकधैर्यगम-

धीरा विअ अच्चंदललिदा विअ असंखेविदा विअ वअस्सस्स कळादंसणा आगदा दुवे तापसकुमारआ ।

रा—( साकूतम् ) कस्तयोरस्मन्नयनसीमावतरणप्रतिबन्धः ?

वि—(१) सुणाहि दाव एदाणं बाळभावलळिदाणं कोऊहळसंबद्धाणं एदं उवण्णासं ।

रा—कथय कथय ।

वि—(२) ते किळ भअवदो वम्मीइमहेसिणो सिस्सा पवीणा वीणाकळा·

---

अत्यन्तधीराविव, अत्यन्तललिताविव, असङ्क्षेपिताविव, वयस्यस्य कलादर्शनौ आगतौ द्वौ तापसकुमारकौ ।

(१) शृणु तावदेतयोर्बालभावललितयोः कौतूहलसम्बद्धयोरेतमुपन्यासम् ।

(२) तौ किल भगवतो वाल्मीकिमहर्षेः शिष्यौ प्रवीणौ वीणाकलाविज्ञाने·

---

न्विताविव । अत्यन्तललिताविव = बहुतरलालित्यविशिष्टाविव । असङ्क्षेपिताविव = न सङ्क्षेपितावसङ्क्षेपितौ = उपचीयमानावयवाविव । एतेन तयोरुच्चैः परिणाहावत्त्वापि न समाप्ताविति ज्ञेयम् । वयस्यस्य = मित्रस्य रामस्य राज्ञः । "कृत" इति शेषः । कलादर्शनौ = कलायाः सङ्गीतकलायाः दर्शनं विज्ञानं ययोस्तौ सङ्गीतकलाविज्ञावित्यर्थः । तापसकुमारकौ = तपस्विसुतौ ।

साकूतम् = साभिप्रायम् । अस्मन्नयनेति—तयोः = कुमारकयोः अस्माकं नयनयोर्नेत्रयोः सीमाया मर्यादाया अवतरणे विषयतायां प्रतिबन्धो विघ्नः प्रत्यूहः । एतौ कुमारकौ दृष्ट्वा नेत्रयोरन्यत्र व्यापारो न भवति, अत्रैव दृष्टिर्निबध्यत इति भावः ।

बालभावेति—बालभावेन बाल्येन ललितयोः सुन्दरयोः । कौतूहलसम्बद्धम् = कुतूहलान्वितम् । एतम् = मया वक्ष्यमाणम्, उपन्यासम् = कथानकम् । शृणु इति सम्बन्धः । रामोक्तिं श्रुत्वा विदूषकः श्रावयति—तौ किलेति । "वाल्मीकिमहर्षेः शिष्यौ" इति कथनेन तयोर्विद्यायाः सदागमः सूचितः । प्रवीणौ = निष्णातौ । "प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः" इत्यमरः । प्रकृष्टा वीणाऽस्य, यद्वा वीणया प्रगायतीति प्रवीणः ।

विरणाये अपुव्वं किल आअमं धारिंति । एदे किळ एव्वं वदंति-राएसियो जणाणं तपोधणबहुमाणेण अह्माणं विअ भूट्ठाणं आसणं पदाणं, अ अणुचिट्ठिदव्वं । जदा अहे मंदभदस्स दीअइ रादळळअ दुक्खरविण्णासं महाकइसंगधिदमहापुरुसचरित्तबंधं महत्थगंभीरं केण ति अस्सुदपुव्वं आअमं गंधव्ववेदसंवादि सरसं जोअविरइअवण्णरमणीअअं वीणातं-

पूर्वं किलागमं धारयतः । एतौ किलैवं वदतः—राजर्षेर्जनानां तपोधनबहुमानेनास्माकमिव भूस्थानमासनं ''''''''' अनुष्ठातव्यम्, ''''''''' दुष्करविन्यासं महाकविसङ्ग्रथितमहापुरुषचरितनिबन्धं महार्थगम्भीरं केनाप्यश्रुतपूर्वमागमं गान्धर्ववेदसंवादि सरसं योगविरचितवर्णरमणीयकं वीणातन्त्री-

"सत्यापपाशरूपवीणा"—(३।१।१३३) इति सूत्रेण णिजन्तात् पचाद्यच् कर्मणि घञ्—(३।३।२५) वा । वीणाकलाविज्ञाने = वीणायास्तन्त्र्या वादनं "वीणाकला" तस्या विज्ञाने दर्शने । अपूर्वम् = लोकोत्तरम् । आगमम् = सम्प्रदायम् । धारयतः = जानीतः । "विज्ञाने विज्ञानं धारयत" इति व्याख्याना कथं समन्वयविदां गोष्ठीषु श्लाघ्य इति तात्पर्यविदः स्वयमवधारयन्तु ।

राजर्षे: = श्रीरामचन्द्रस्य । शिष्टं त्रुटितपाठहेतोरसम्यक्त्वमिवेति तावदेव न व्याख्यातम् । "गीतं गायाव" इति सम्बन्धः । "दुष्करविन्यासम्" इत्यादीनि "गीतम्" इत्यस्य विशेषणानि । दुष्करः कठिनः साधारणप्रज्ञैः कर्तुमशक्यः पदविन्यासः सुप्तिङन्तलक्षणानां पदानां विशेषेण न्यासो योजनं यत्र तत् । महाकवीति—महाकविरादिकविर्भगवान् वाल्मीकिः तेन सङ्ग्रथितः पदवाक्यरचनारूपेण गुम्फितो महापुरुषस्य पुरुषधौरेयस्य (अर्थात् श्रीरामस्य) धीरोदात्तनायकशिरोमणेः चरित्रग्रन्थः चरितप्रसङ्गो यत्र तत्, केनाप्यश्रुतपूर्वम् = अद्यावधि पूर्वं केनचिद् न श्रुतम्, आगमम् = वेदसदृशं ऋषिणा समाधिदृष्टत्वात् । गान्धर्ववेदसंवादि = गान्धर्ववेदः सामवेदस्योपवेद तस्य संवादि संवदनशीलम् तद्वद्गानशक्यत्वात्, सरसम् = रसैः शृङ्गारादि-भिरङ्गभूतैः करुणाख्येन चाङ्गिना रसेन सहवर्तमानं महाकाव्यचारुसान्वित-मित्यर्थः । "रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिञ्च विन्दति" इत्युक्तेः । योगेति—योगः समाधिः तत्र विरचिता दृष्टा ये वर्णाः "मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः" इत्यादि काव्यवाक्यघटकान्यनुगतान्यक्षराणि

तिरसिदाणुविद्धं गीदं गाअंहा तदा विण्णाणविसेसपसण्णहिअओ राआ जं वुत्तंतं अणुचिट्ठस्सदि एसो आणिदव्वोत्ति अह्माणं भअवदो वंमीइमहेसिणो आदेसोत्ति।

रा—अहो ! विज्ञानावलेपः शौण्डीर्यगर्भश्चोपन्यासः। वयस्य ! यथाभिमतं प्रतिज्ञाय प्रवेशयाविलम्बितं पुरा तौ न चिरावस्थाननिर्वेदेन पराङ्मुखीभवतः।

वि—(१) कुदो दाणिं णिव्वेदो ? ते हि अण्णोण्णवच्छलत्तणं

---

रसितानुविद्धं गीतं गायावः तदा विज्ञानविशेषप्रसन्नहृदयो राजा यद्वृत्तान्तमनुष्ठास्यति एष ज्ञातव्य इत्यस्माकं भगवतो वाल्मीकिमहर्षेरादेश इति।

(१) कुत इदानीं निर्वेदः ? तौ हि अन्योऽन्यवत्सलत्वं आकारसादृश्यं

---

तस्तेषां वा रामणीयकं लालित्यं यत्र तत्। वीणेति—वीणाया विपञ्च्याः तन्त्रीणां रसितेन आहतिजातनादेन अनुविद्धमनुगतम्, वीणावादनानुरोधीत्यर्थः। "वीणा तु वल्लकी" इत्यमरः। तदा = गानकाले। विज्ञानविशेषप्रसन्नहृदयः = विज्ञानविशेषेण सङ्गीतकलया प्रसन्नं विकसितं हृदयमन्तःकरणं यस्य सः, यद्वृत्तान्तम् = यं वृत्तान्तमुदन्तमित्यर्थः। "यद्" इत्यव्ययं तस्मात्पाठे ऽशुद्धिभ्रमो नाश्रेयः। अनुष्ठास्यति = (कर्तव्यं) करिष्यतीत्यर्थः। एषः = वृत्तान्तः, ज्ञातव्यः = अवबोद्धव्यः। आदेशः = आज्ञा। रामेण सह तदीयहृदयं ज्ञात्वा पुनः सीतासङ्घटनोपायो महर्षिकृत इति ज्ञेयम्।

"अहो !" आश्चर्यम्। विज्ञानावलेपः = विज्ञानस्य (प्रकृते) सङ्गीतकलायाः अवलेपो गर्वः। शौण्डीर्यगर्भः = शौण्डीरस्य मत्तस्य भावः शौण्डीर्यं, तद् गर्भे मध्ये यस्य स तादृशः उपन्यासः सङ्कीर्तनम्। यथाऽभिमतम् = यथेष्टं तयोरिति शेषः। प्रतिज्ञाय = प्रतिज्ञां कृत्वा। अविलम्बितम् = शीघ्रम्। तौ = तपस्विकुमारकौ। चिरावस्थाननिर्वेदेन = बहुकालपर्यन्तद्वारस्थितिप्रयोजेन न पुरा पराङ्मुखीभवतः = निश्चितं पराङ्मुखीभविष्यतः।

"यावत् पुरानिपातयोर्लट्" (३।३।४) इति सूत्रेण पुरायोगे भविष्यति लट्। "पुरा" निपातश्च निश्चयं द्योतयति। कुतः=कस्माद्धेतोः। निर्वेदः=वैराग्यम्। तौ=चार्तौ। द्वितीयान्तपदमिदं "प्रेक्ष्य" इत्यनेनान्वेति।

आआरसारिच्छं काअपक्खपरिभूसिदं च वअणं पेक्खिअ—एव्वं रामलक्खणा महाराअदसरहे धरमाणे राअट्ठाणं अलंकरन्ता भवंति त्ति तुह्माणं बालभावं महाराअं अ सुमरिअ वप्फपुण्णणअणेहिं सोविदल्लएहिं परिपुट्ठा चिट्ठन्ति ।

रा—किमस्मच्छैशवानुकारिणी तयोराकृतिः ?

वि—( १ ) अह इं ।

रा—वर्धते मे कुतूहलम्, तत्प्रवेशयाविलम्बितम् ।

---

काकपक्षपरिभूषितं च वदनं प्रेक्ष्य—एवं रामलक्ष्मणौ महाराजदशरथे ध्रियमाणे राजस्थानमलङ्कुर्वन्तावभूताम्—इति युवयोर्बालभावं महाराजं च स्मृत्वा बाष्पपूर्णनयनैः सौविदल्लैः परिपृष्टौ तिष्ठतः ।

( १ ) अथ किम् ।

---

अन्योन्यवत्सलत्वम् = परस्परप्रीतिभावम् । आकारसादृश्यम् = मूर्तिसाम्यम् । काकपक्षपरिभूषितम्=काकपक्षैः शिखण्डकैः परिभूषितं मण्डितम्, वदनम् = मुखम् "प्रेक्ष्य" इत्येवमन्वयः । ध्रियमाणे=जीवति । राजस्थानम्=राजा दशरथः तस्य स्थानं प्रासादादिकम्, अलङ्कुर्वन्तौ = मण्डयन्तौ । अभूताम् = आस्ताम् । इति=इत्येव रूपेण युवयोः=रामलक्ष्मणयोः । बालभावम् = शैशवम् । महाराजम् = दशरथम् । स्मृत्वा=चिन्तयित्वा । बाष्पपूर्णनयनैः = बाष्पैरश्रुभिः पूर्णानि भरितानि नयनानि येषां तैः, सौविदल्लैः = सुष्ठु विदन्तं विद्वांसमपि लान्ति वशवर्त्तिनं कुर्वन्तीति "सुविदल्लाः" स्त्रियः । तासामिमे ( रक्षकाः ) इति "सौविदल्लाः" । "तस्येदम्" ( ४ । ३ । १२० ) इत्यण् । तैः, कञ्चुकिभिः । परिपृष्टौ = कौ युवाम् कस्य पुत्रौ वेति कृतप्रश्नौ तिष्ठतः=द्वारीति शेषः । "सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते" इत्यमरः ।

राम पृच्छति—किमस्मच्छैशवेति । अस्माकं शैशवस्य बाल्यस्य अनुकारिणी सदृशी । आकृतिः = आकारः । अवयवसंस्थानमित्यर्थः । वर्धते= एधते । कुतूहलम् = आश्चर्यम् । दृश्यमानो निर्दिश्यमानो मार्गो वर्मयोस्तौ । आर्यौ = पूज्यौ तापसवान् ।

वि—( १ ) जं भवं आणवेदि ।

( इति निष्क्रान्तः )

( ततः प्रविशतो विदूषकेणोपदिश्यमानमार्गौ तापसौ कुशलवौ )

वि—( २ ) इदो इदो अय्या ।

( परिक्रम्य )

कुशः—( अपवार्य ) वत्स ! लव ! इदानीं भगवतो वाल्मीकेरादेशादम्बामभिवाद्य पार्थिवभवनाभिमुखं प्रस्थिते मयि काकपक्षग्रहणसञ्ज्ञया पर्णशालायां प्रवेश्य कीदृशेन रहस्येनाम्बया पृथक्संविभक्तो भद्रमुखः ?

लवः—न खलु कश्चित्संविभागः । किन्तु तदानीं तापसजनसङ्कीर्णं-मुटजाभ्यन्तरं प्रवेश्य बाहूपपीडं तनूदरेण परिष्वज्य शिरसि चाघ्राय

( १ ) यद्भवानाज्ञापयति ।

( २ ) इत इत आर्यौ ।

अपवार्य = पराकृत्य रहस्यप्रकाशनमपवारणं तत् कृत्वेत्यर्थः । "तद्भवेदपवारितम् । रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते " इति साहित्यदर्पणे । अम्बाम् = मातरम् । अभिवाद्य = नमस्कृत्य । पार्थिवभवनाभिमुखम् = पार्थिवस्य राज्ञो भवनाभिमुखं प्रासादाभिमुखं, प्रस्थिते = प्रचलिते । काकपक्षग्रहणसञ्ज्ञया = काकपक्षाणां शिखण्डकानां ग्रहणं स्पर्शः तस्य सञ्ज्ञया सङ्केतेन । पर्णशालायाम् = उटजे । " मुनीनां पर्णशालोटजोऽस्त्रियाम् " इत्यमरः । प्रवेश्य = नीत्वा । कीदृशेन रहस्येन = गुप्तेन मन्त्रेण । पृथक्संविभक्तः = पृथग्भूय कर्तव्यत्वेन विभाजितः । मिलित्वैव द्वाभ्यां रामायणं गातव्यम्, अम्बया च त्वम्प्रति पृथगेव किञ्चित् कर्तव्यमुपदिष्टमिति भावः । भद्रमुखः = भद्रं शुभं मुखं यस्य सः सुमुख इत्यर्थः । प्रेम्णा ज्येष्ठस्य भ्रातुरुक्तिरियम् ।

संविभागः=पृथक्कर्तव्योपदेशः । तदानीम्=तस्यामातयोः प्रस्थानवेलायाम्, तापसजनैः = तपस्विभिः । सङ्कीर्णम्=सङ्कुलम् । उटजाभ्यन्तरम् = पर्णशालान्तर्विभेदेन । बाहूपपीडम् = बाहुभ्यां बाढोपपीडनम् । " सप्तम्यां चोपपीडरुधकर्षः " (३ । ४ । ४९) इति सप्तम्यन्ते तृतीयान्ते चोपपदे धातोर्णमुल् । तनूदरेण = कृशोदरेण परिष्वज्य = आलिङ्ग्य ।

सीत्कारखचितस्मितमधुरं साशङ्का शनैः शनैः कर्णपत्रं वर्धयन्ती स्वमुखेन सम्मुखमपवार्य एवं सन्दिष्टवती—वत्स ! युवाभ्यां स्वभाविकमवलेपं परित्यज्य सत्कर्तव्यो महाराजः, कुशलं च परिप्रष्टव्यम्—इति ।

कुशः—युज्यते कुशलप्रश्नः, प्रणामस्तु कथम् ?

लवः—न कथम् ?

कुशः—अप्रणन्तारः किलास्मद्वंश्याः ।

लवः—क एवमाह ?

कुशः—अम्बा ।

लवः—प्रणाममपि सैवोपदिष्टवती, न च गुरुनियोगा विचारमर्हन्ति ।

कुशः—साधयामस्तावत्, अथतस्तत्र यत्कालोचितमनुष्ठास्यावः ।

( परिक्रामतः )

वि—( १ ) इदो इदो अंमा ।

( १ ) इत इत आर्यौ ।

शिरसि = उत्तमाङ्गे, आघ्राय = परिचुम्ब्य । सीत्कारेति—सीत्कारेण खचितं प्रतीतं यत् स्मितं तेन मधुरं इदं यथा तथे तिक्रियाविशेषणम् । साशङ्का= शङ्कया सहवर्तमाना, कर्णपत्रम् = कर्णभूषणम् । वर्धयन्ती कर्णरन्ध्रप्रदेशात् क्षेपयन्ती । स्वाभाविकम् = बालभावसहजसिद्धम्, अवलेपम् = गर्वम् । परित्यज्य = परिहाय, सत्कर्तव्यः = आदरणीयः, कुशलम् = क्षेमं, परिप्रष्टव्यम् = अनुयोक्तव्यम् ।

कुशः पृच्छति—"युज्यत" इति । लव उत्तरयति—"न कथम्" इति । कथं न स्यात् प्रणाम इत्याशयः । कुशस्तत्र हेतुमाह—"अप्रणन्तार." इति । अस्माकं वंश्याः वंशे भवाः । गुरुनियोगाः = गुरूणामाज्ञा, विचारम्=एवमिदं स्यादनेवमिदं स्यादिति तर्कम् । साधयामः = गच्छामः । "प्रायेण एयन्तकः साधिर्गमेः स्थाने प्रयुज्यते" इति विश्वनाथः । तत्र = राजपार्श्वे । यत् = यदेवेत्यर्थः । कालोचितम् = समयानुसारि । अनुष्ठास्यावः = विधास्यावः ।

**रा**—( विलोक्य ) नूनं तदेवैतद्दारकद्वयं कौशिकेनोपदिश्यमानमार्गमित एवाभिवर्तते । कथमस्मायितोऽस्मि ! किं नु खल्वेतत् !

न चैतदभिजानामि नाकूतमपि किञ्चन ।
तथाप्यापातमात्रेण चक्षुरुद्बाष्पतां गतम् ॥९॥

अथवा किमत्राश्चर्यम्—

आपातमात्रेण कयापि युक्त्या
सम्बन्धिनः संनमयन्ति चेतः ।
विमृश्य किं दोषगुणानभिज्ञ-
श्चन्द्रोदये श्च्योतति चन्द्रकान्तः ॥१०॥

---

एतद्दारकद्वयम् = तापसकुमारयुगलम् "कथमस्मायित" इति । "कथमास्मायित" इति युक्तं प्रपद्ये । आसमन्तात् स्मायितः स्मयविशेषं प्रापितः । मम हृदयस्य कथमन्यथा विकारो जात इति भावः । नचैतदिति । अग्रे "तथापि" इति पदमध्याहर्तव्यम् । यद्यपि एतत् = पुरोवर्ति दारकद्वयम् = बालयुगलम्, नच = नैव जानामि = जन्मना कर्मणा च नैव परिचिनोमीत्यर्थः । एतयोः किञ्चन = किञ्चित् आकूतम् = अभिप्रायविशेषम् अपि न जानामीति पुनरन्वयः । तथापि—चक्षुः = मम नेत्रम्, आपातमात्रेण = आपातत एव दर्शनेन दर्शनसमकालमेवेत्यर्थः, उद्बाष्पताम् = उद्गतबाष्पभावं गतम् = प्राप्तम्, सास्रं जातम् । एतेन रामस्यौरसः सम्बन्धवारिधिः प्रकृत्यैवोच्छलित इति भावः ॥ ९ ॥

उक्तमेव सयुक्तं दर्शयितुमाह—"अथवा" इति । आपातेति—सम्बन्धिनः, कयापि = वक्तुमशक्यया, युक्त्या = विधया प्रकारेण, आपातमात्रेण = दृष्टमात्रेण, क्षिप्रमेव, चेतः = हृदयम्, संनमयन्ति = प्रवणयन्ति आत्मगामुकं कुर्वन्तीत्यर्थः । एतदेव दृष्टान्तयति—विमृश्येति । दोषगुणानभिज्ञः = दोषाश्च गुणाश्च दोषगुणाः तेषामनभिज्ञोऽज्ञातदोषगुणः, चन्द्रकान्तः तदाख्यश्चन्द्रमणिः, चन्द्रोदये = चन्द्रस्य शशिन उदये सति, विमृश्य = विचार्यैव श्च्योतति = क्षरति किम् ? किन्तु यथा चन्द्रोदये विचारं विनैव चन्द्रकान्तस्य स्वाभाविको द्रवीभावः तथैव विशेषरूपेणापरिचितबन्धुमात्रस्यापि पुरुषस्य बन्धुदर्शनमात्रत एव नितरां द्रवीभावः प्रत्यक्षसिद्ध इति पुत्रमुखदर्शन-

निर्वर्णयामि तावत्किमाकारावेताविति । कथं द्रष्टुमपि न प्रभवामि यथा यथा कुमारावेतौ निर्वर्णयामि तथा तथा हृदयमप्यननुभूतपूर्वेण साध्वस-प्रहर्षशोकानुक्रोशसम्भेदचित्रेणावस्थाविशेषेणाक्रम्यमाणं मूर्च्छयेव तिरोधीयते । (मूर्च्छाभिनीय) बाष्पपातश्च कथम् ! प्रशान्त इव मे हृदयस्तम्भः

---

समकाल एव तयोः सलिलविमात्रेणोन्द्धलितहृदयस्य रामस्याश्रुविमोको जात इति सूपनिबद्धं कविना ।

अत्र—उपमानोपमेयवाक्ययोश्चन्द्रोदय कालिक चन्द्रकान्तश्च्योतनदर्शनमम-कालिकेयतःसत्सनस्पयोर्धर्मयोर्बिम्बप्रतिबिम्बभावेन निर्देशात्पूर्ववद् दृष्टान्तालङ्कारो बोध्यः । नेयं प्रतिवस्तूपमा धर्मद्वयस्य दर्शनात्, तत्रोभयवाक्यनिष्ठस्यै-कस्यैव समानधर्मस्य पृथक्निर्देशात् । नच दीपकं, तत्रापि वर्ण्यावर्ण्ययोर्धर्मै-क्यात् । नच निदर्शना, सदृशवाक्यार्थयोरैक्यारोपाभावात्, नाप्यर्थान्तरन्यासः सामान्यविशेषयोरुक्तेरदर्शनात्, अत्र द्वयोरेव विशेषयोरुपादानात् । नापि काव्यलिङ्गं, समर्थनीयस्यार्थस्य समर्थनादर्शनात, तस्माद् यथोक्तमेव ज्यायः ।

"चित्तन्तु चेतो हृदयम्" इत्यमरः । "श्च्योतति" इति । "श्च्युतिर्" क्षरणे धातुः, तस्य लटि प्रथमपुरुषे रूपम् । इन्द्रवज्रोपेन्द्रवज्रयोरुप-जातिः ॥ १० ॥

निर्वर्णयामि = निरूपयामि । किमाकारौ = क आकार आकृतिर्ययोस्तौ । न प्रभवामि = समर्थो न भवामि । अननुभूतपूर्वेण = पूर्वमनुभूतोऽनुभूतपूर्वः, न अनुभूतपूर्वोऽननुभूतपूर्वः तेन, पूर्वमदृष्टचरेणेत्यर्थः । "अवस्थाविशेषेण" इत्यस्य विशेषणमिदम् । साध्वसेति—साध्वसम् = भीतिः, प्रहर्षः = हर्षा-तिरेकः, शोकः शुचा चिन्ताविशेषः, अनुक्रोशः = कारुण्यम्, एतेषां सम्भेदः सम्मिश्रणं तेन चित्रेण नानारूपेण, अवस्थाविशेषेण = दशाविशेषेण, आक्र-म्यमाणम् = आकुलीक्रियमाणमभिभूयमानमिति यावत्, मूर्च्छयेव = मोहेनेव, तिरोधीयते = निह्नूयते । उक्तैर्विविधैर्भावैर्व्याकुलीक्रियमाणं हृदयं मूर्च्छतीत्यर्थः ।

बाष्पपातः = अश्रुपातः । कथम् = केन हेतुनेत्यर्थः । हृदयस्तम्भः = हृदयस्य

बाष्पपातेन, स्वस्थीभूतोऽस्मि संवृत्तः, एतदपनीतबाष्पव्यवधानेन चक्षुषा पुनरवलोकयामि। ( निर्वर्ण्य ) गम्भीरोदारः सन्निवेशः, प्रशान्तमनोहरा वेषरचना, विनयोदयोदात्तमभिक्रान्तम्; सुव्यक्तमनेन युगलेन कुलीनेन भवितव्यम्।

वि—(१) एसो अत्तभवं राआ, उपसप्पदु अय्या जहाहिप्पाअं।

कु—वत्स लव, अपि जानासि त्वं सम्प्रत्येव प्रणामसम्बन्धेन यथा मया कथितम्?

ल—अथ सम्प्रति किम्?

कु—यथा यथैनं पार्थिवं प्रत्यासीदामि तथा तथा हृदयोत्कम्पकारिणा साध्वसेन न प्रभवामि स्वाङ्गानाम्, परित्यक्तोऽस्मि कस्मात्तुल्यावलेपेन?

---

(१) एषोऽत्रभवान् राजा, उपसर्पतामार्यौ यथाभिप्रायम्।

---

चेतसः स्तम्भःस्तब्धीभावो जडताविशेषः। बाष्पपातेन = बाष्पाणामश्रूणां पातेन विमोक्षेण, अश्रुपातेन हृदयं लघु भवतीति स्वभावः।

गम्भीरोदारः = गम्भीरश्चासावुदारश्च। सन्निवेशः = अवयवसंस्थानविशेषः। प्रशान्तमनोहरा = प्रशान्ता चासौ मनोहरा, वेषरचना = वस्त्रादिधारणरूपो नेपथ्यविशेषः। विनयोदयोदात्तम् = विनयस्य नम्रीभावस्य ( विनीततायाः ) उदयेन प्रकटीभावेन उदात्तं मनोहरम्, अभिक्रान्तम् = कान्तिविशेषः प्रभावापरपर्यायः। सुव्यक्तम् = सुस्पष्टम्, नात्र सन्देहलेशोऽपीति भावः। कुलीनेन = सद्वंश्येन। उपसर्पताम् = सन्निधत्ताम्। प्रणामसम्बन्धेन = राजविषयकं प्रणाममुद्दिश्येत्यर्थः। पार्थिवम् = पृथिवीपतिम्। प्रत्यासीदामि = उपसर्पामि। हृदयोत्कम्पकारिणा = हृदयस्योत्कम्पो येनासौ तत्कारिणा साध्वसेन = भयेन आशङ्कया वा। "आशङ्का साध्वसं दरः। भिया च", इति हैमः। "दरस्त्रासो भीतिर्भीः साध्वसं भयम्" इत्यमरः। नेति—सर्वाण्यङ्गानि साध्वसाक्रान्तीति भावः। तुल्यावलेपेन = समानेन गर्वेण। रामस्य रामत्वनिमित्तोऽवलेपः। पुत्रस्य तु स्वाभाविकोऽपि रामपोषहेतुक-

न शक्नोमि चास्य पुरस्तादनवनतमुत्तमाङ्गमुद्वोढुम्; किं बहुना एष प्रणतोऽस्मि।

ल—कथमार्योऽप्यहमिव परमवशत्वमापादितः। (उभौ प्रणमतः)

रा—न खलु भवद्भ्यां मर्यादालङ्घनमनुष्ठेयम्। कथं प्रणतावेव, कष्टं ब्रह्मशिरसा नतोऽस्मि। (विषादं नाटयति)

चि—(१) भो तुवं किं विसण्णो? एदेहिं पउत्तो पणामो ण पडिग्गहीदो, एत्थ ण तुमं परिहीयसि।

रा—सम्यगुपलक्षितं कौशिकेन। आर्यावतिदाक्षिण्यपेशलौ, श्रूयताम्—

अयं भवद्भ्यामतिसम्भ्रमेण
मयि प्रयुक्तः शिरसा प्रणामः।

---

(१) भो त्वं किं विषण्णः? एताभ्यां प्रयुक्तः प्रणामो न प्रतिगृहीतः, अत्र न त्वं परिहीयसे।

---

त्तापसत्वनिमित्त इति द्वयोरन्तरम्। "अस्य पुरस्तादनवनतमुत्तमाङ्गमुद्वोढुं न शक्नोमि" इत्यन्वयः। अनवनतम् = अनम्रम्। उत्तमाङ्गम् = शिरः। उद्वोढुम् = धारयितुम्। प्रणामाभिमुखौ तापसकुमारकावालोक्य मर्यादापालकमूर्धन्यो राम आह—न खल्विधाति। मर्यादालङ्घनम् = मर्यादायाः "ब्राह्मणेन तपस्विना क्षत्रियो न नन्तव्य" इत्येवंरूपा। उल्लङ्घनम् = अतिक्रमणं परित्याग इति यावत्। ब्रह्मशिरसा = ब्राह्मणोत्तमाङ्गेन।

विषण्णः = विषादं गतः। प्रणाम. = नतिः। प्रतिगृहीतः = स्वीकृतः।

परिहीयसे = हानिमुपैषि। ज्येष्ठो भवान् राजा चेति भवता गृहीतव्य एव तपस्विनोरपि सतोः कनिष्ठयोः कुमारकयोः प्रणाम इति विदूषकस्याशयः।

उपलक्षितम् = ज्ञातम्। अतिदाक्षिण्यपेशलौ = अतिदाक्षिण्येन विनयचातुर्यातिरेकेण पेशलौ हृदयङ्गमौ। अयमिति—भवद्भ्याम् = युवाभ्यां कुमारकाभ्याम्, अयम् अतिसम्भ्रमेण = अत्यन्तत्वरया पूर्वापरविचारमकृत्वैव, मयि = मद्विषये। शिरसा = उत्तमाङ्गेन। प्रणामः = नतिः। प्रयुक्तः = कृत.।

भवत्विदानीं मदनुज्ञयैव
युष्मद्गुरूणां चरणोपहारः ॥११॥

वि—(१)अप्पडिहदसासणो पिअवअस्सो। एस पणामस्स परिणामोत्ति।

कुशलवौ—( उत्थाय ) अपि कुशलं महाराजस्य ?

रा—युष्मद्दर्शनात्कुशलमिव । भवतोः किं वयमत्र कुशलप्रश्नस्य भाजनम्, न पुनरतिथिभाजनस्य समुचितस्य कण्ठग्रहस्य ? (परिष्वज्य) अहो ! हृदयग्राही स्पर्शः ( विचिन्त्य ) अनभिज्ञोऽहं तनयपरिष्वङ्ग-सौख्यस्य, यद्यपि तां तुलामारोहे । स्थाने खलु परिक्रामन्ति

(१) अप्रतिहतशासनः प्रियवयस्यः—एष प्रणामस्य परिणामः—इति ।

इदानीम् = अधुना तु मदनुज्ञयैव = मदीयानुदेशेनैव ममानुमत्येत्यर्थः, युष्मद्गुरूणाम् = युवयोर्गुरूणाम्, चरणोपहारः = चरणयोरुपहारः उपायनं भवतु । क्षत्रिया वयं ब्राह्मणशिरसाऽऽत्मानं नाभिवादयामः तस्मात्त्वया कृतमेतद्युष्माकं गुरुचरणयोरेव स्यादिति माभूद्दोषगन्धोऽपीति हृदयं रामस्य । उपजातिः ॥११॥

अप्रतिहतशासनः = अप्रतिहतमस्खलितं शासनमाज्ञा यस्य सः । उत्थाय = प्रणामोत्तरमुत्थानं विधाय । कुशलम् = क्षेमम् । राम आह—युष्मदिति । महात्मनां दर्शनं पुण्यफलप्रदम्, पुण्येनैव च कुशलप्राप्तिरिति भावः । इयेन विरहिणो मम कुतः कुशलम्, परमेतेन पुण्येन कदाचित्सीताविरहजनिता पीडा नश्येदिति रामस्य परमानुकूलकम् । समुचितस्य = योग्यस्य । कण्ठग्रहस्य = आलिङ्गनस्य । हृदयग्राही = हृदयस्पृक् येनो वशीकरोतीत्यर्थः । तनयेति—तनयस्य पुत्रस्य यः परिष्वङ्गः क्रोडीकरणं तत्सौख्यस्य = तज्जनितानन्दस्येत्यर्थः । यद्यपीति—यद्यपि एनयोरालिङ्गनेन, तां तुलाम् = पुत्राभिष्वङ्गकोटिम् आरोहे = प्राप्तो भवामि । कुशलवालिङ्गनेन रामस्य पुत्रस्पर्शसौख्यमेवाऽभूत्परमभिज्ञानं नासीदित्येवमुक्तं "तां तुलाम्" इति निष्पन्नम् । स्थाने = युक्तमेव । "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः । परिक्रामन्ति =

तपोवनपराङ्मुखा गृहमेधिनः । ( आसनार्थमुपवेशयति )

**उभौ**—राजासनं खल्वेतत् न युक्तमध्यासितुम् ।

**रामः**—सव्यवधानं न चारित्रलोपाय, तस्मादङ्कव्यवहितमध्यास्यतां सिंहासनम् ( अङ्कमुपवेशयति )

**उभौ**—( अनिच्छां नाटयतः ) राजन् ! अलमतिदाक्षिण्येन ।

**राम**—अलमतिशालीनतया ।

भवति शिशुजनो वयोऽनुरोधा-
द्गुणमहतामपि लालनीय एव ।
व्रजति हिमकरोऽपि बालभावा-
त्पशुपतिमस्तककेतकच्छदत्वम् ॥१२॥

---

परिभ्रमन्ति । तपोवनपराङ्मुखाः = तपोवनाद् विमुखाः सन्तः । गृहमेधिनः = गृहिणः । यद् गृहस्थास्तपोवनात्पराङ्मुखा भवन्ति तत्तेषामेतादृशसुताभिव्यक्त-जनितालौकिकानन्दलाभकारणाद् युक्तमेव भातीति भावः ।

अध्यासितुम् = उपवेष्टुम् । सव्यवधानम् = व्यवधानेन सह वर्तत इति सव्यवधानं व्यवहितिसहितमध्यासनमित्यर्थः । चारित्रलोपाय = मर्यादाभङ्गाय न भवतीति शेषः । अङ्कव्यवहितम् = अङ्केन गोदेन व्यवहितं कृतव्यवधानं यथा तथेति क्रियाविशेषणम् । अध्यास्यताम् = उपविश्यतां सिंहासनम् ।

यद्यपि सिंहासनं राजभिरेवारोढव्यमितीयं मर्यादा तथापि राजाङ्कैव यदि व्यवहितमधिरुह्येत तदा नास्ति मर्यादाक्षतिरिति भावः । अनिच्छाम् = उपवेशनेऽनभिकाङ्क्षाम् । अतिदाक्षिण्येन = अत्यौदार्येण । अतिशालीनतया= अत्यन्तमधृष्टतया । मदाज्ञया भवद्भ्यां कापि शङ्का न कर्तव्येति भावः ।

**भवतीति**—शिशुजनः = बाललोकः, वयोऽनुरोधात् = वयसोऽवस्थाया अर्थात् शैशवावस्थाया अनुरोधात् कारणात्, गुणमहताम् = गुणैः प्रजारञ्ज-नादिभिः महता महत्त्वं राज्यसिंहासनादिरूपमैश्वर्यं प्राप्नुवतामपि, लालनीय = लाडनीय एव भवति । अत्रैव दृष्टान्तमाह-हिमकरः = शिशिरकिरणश्चन्द्रोऽपि बालभावात् = द्वितीयाया दृश्यमानरूपात् शैशवाद्धेतोः, पशुपतिमस्तक-केतकच्छदत्वम् = पशुपतिर्महादेवः तस्य यन्मस्तकं ललाटं तत्र केतकच्छदत्वं= केतकीपुष्पीयपत्रतुल्यताम्, व्रजति = प्राप्नोति । यथा बालोऽपि चन्द्रो

( साश्रुरवलोकयन्पुनः परिष्वजते । विदूषकमवलोक्य )

अपि स्मरति भवान्निर्वासितायाः सीतायाः कियन्तः संवत्सराः अतिक्रान्ता इति ?

वि—(विचिन्त्य) (१) सुमरामि मंदभाओ (हस्ताङ्गुलिप्रमाणसङ्ख्यां विगणय्य उपरिष्टात् पदाङ्गुलित्रयमपि निर्दिश्य) किं बहुणा गणिदेण, सव्वहा अज्ज दसमो संवच्छरो देवीए सीदाए सहत्थेण परिप्पेसिदाए ।

रा—( कुमारौ निर्वर्ण्य ) यदि स्वस्तिना गर्भमपि निर्वर्तयेत्, यदि कश्चिदवगाहेत तदपत्यमियता कालेनेदृशीमवस्थाम् ।

वि—(२) हंत ! थंभिदो म्हि मंदभाओ एदाए अण्णादविप्पउत्त-तणअसंकहाए ।

( १ ) स्मरामि मन्दभाग्यः (—) किं बहुना गणितेन, सर्वथाद्य दशमः संवत्सरो देव्याः सीतायाः स्वहस्तेन परिप्रेषितायाः ।

( २ ) हन्त ! स्तम्भितोऽस्मि मन्दभाग्य एतया अज्ञातविप्रयुक्ततनयसङ्कथया ( रोदिति )

महादेवेन शिरसि धार्यते, तावता तस्य न कोऽपि दोषः, प्रत्युत महता-ऽऽदरणीयत्वाद् गुण एव, एवमेव ममाज्ञया मदीयाङ्कमधिरुह्य राजसिंहासने अवस्थानं भवतोर्न चारित्रक्षतिकरमिति भावः । ·

अत्रापि गुणमहत्कर्तृकशिशुजनीयलालनचन्द्रसम्बन्धिपशुपतिमस्तकाव-स्थानयोः पूर्ववद्बिम्बप्रतिबिम्बभावो बोध्यः । पुष्पिताग्राभिधं वृत्तम् ॥१२॥

परिष्वजते = आलिङ्गति । निर्वासितायाः = गृहान्निष्कासितायाः । संव्वत्सराः = अब्दाः । अतिक्रान्ताः = निर्याताः ।

परिप्रेषितायाः = निर्वासितायाः । शिष्टं स्पष्टम् । " स्वस्तिना " इति विभक्तिप्रतिरूपकमव्ययम् । सुखेनेत्यर्थः । निर्वर्तयेत् = जनयेत् । सीतेति शेषः । ( तदा ) तदपत्यम् = सीतासन्ततिः, इयता कालेन = एतावता समयेन, ईदृशीमवस्थाम् = आयुषम्, अवगाहेत = प्राप्नुयादिति सान्वयो-ऽर्थः । " यदि कश्चिद् " इति पदद्वयमन्तर्गडुभूतमिव प्रतीयते । अवश्य-व्याख्यातव्ये तु—यदि कश्चित्—" सन्तानः स्यादि"त्यध्याहारः शरणम् । स्तम्भितः = जाड्यं प्राप्तः । अज्ञातेति—अज्ञाता न ज्ञाता विप्रयुक्तयोः

रा—(१) अहमप्येतौ तापसकुमारावलोकयन्नसह्यवेदनामवस्थामवतीर्णोऽस्मि ।

यां यामवस्थामवगाहमान-
मुत्प्रेक्षते स्वं तनयं प्रवासी ।
विलोक्य तां तां च गतं कुमारं
जातानुकम्पो द्रवतामुपैति ॥१३॥

( परिष्वज्य रोदिति )

वि—( ससम्भ्रमं ) अविह मुंच, सप्पं, मुंच, जीवदु तवस्सितणओ, ओदरदु सिंहासणादो ।

रा—( ससम्भ्रमं कुमारौ मुञ्चन् ) वयस्य ! किमेतत् !

वि—(२) सुदं मए साकेदणिवासिणं चिरजीविदाणं मुहादो—जो किल

(१) (अपिभोः) मुञ्च, सर्प, मुञ्च, जीवतु तपस्वितनय, अवतरतु सिंहासनात् ।
(२) श्रुतं मया साकेतनिवासिनां चिरजीवितानां मुखतः—यः किला-

विप्रयोग प्राप्तयोस्तनययोः सदृशया वृत्तान्तेनेत्यर्थः । अवलोकयन् = पश्यन् । असह्येति—असह्या = सोढुमशक्या वेदना हृदयपीडा यस्याः सा तादृशी ताम्, अवस्थाम् = दशाम् अवतीर्णः = प्राप्तः ।

**यां यामिति**—प्रवासी = परदेशं प्राप्तः, यांयामवस्थाम् = शैशवपौगण्डबाल्यादिरूपां दशाम्, अवगाहमानम् = प्राप्नुवन्तम्, स्वम् = निजम्, तनयम् = पुत्रम्, उत्प्रेक्षते=कल्पयते ( कल्पनया ) भावयत इत्यर्थः, तान्तामवस्था गतम् = प्राप्तं कुमारम् = अन्यस्य कस्यचित्पुत्रम्, विलोक्य= निरीक्ष्य, जातानुकम्पः =जातोद्भूताऽनुकम्पा करुणा यस्य सः उत्पन्नदय इत्यर्थः, द्रवताम् = चित्तद्रवीभावम्, उपैति = प्राप्नोति ।

विदेशस्थोऽन्यस्य शिशूनालोक्य अप्रत्यक्षमपि स्व सुतं भावनाबलादभ्यनीकुर्वन् आर्द्रहृदयो भवतीति भाव. । उपजातिः ॥१३॥

ससम्भ्रमम् = सत्वरम्, सभयं वा । कुमारौ मुञ्चन् = स्वाङ्कात् परित्यजन् । साकेतवासिनाम् = अयोध्यावास्तव्यानाम् । चिरजीवितानाम्—

अराहवो इमं सिंहासणं अदिरोहदि तस्स मुद्धा सदहा सदहा विदळदि त्ति।

रा—( सावेगम् ) अवतीर्यतां शीघ्रम्।

( उभाववतीर्य भूमावुपविशतम् )

रा—अपि स्वस्थौ भवन्तौ, मूर्ध्नो वा न किञ्चिद्विकारः ?

उभौ—भोः ! स्वस्थावेवावाम्, न किञ्चिन्मूर्ध्नो विकारः।

वि—(१) अहो अच्चरिअं ! अच्चरिअं। एवं णाम अपरिक्खदपइदिथसरीरा चिट्ठंति।

रा—किमत्राश्चर्यम् ( कुमारौ निर्दिश्य ) स्वस्त्ययनपरिगृहीतानि तपश्शरीराणि। पश्य—

अपि नाम शरा मोघास्तपस्सन्नद्धमूर्तिषु।
वासवस्यापि सुव्यक्तं कुण्ठाः कुलिशकोटयः॥१४॥

राघव इमं सिंहासनमधिरोहति तस्य मूर्द्धा शतधा शतधा विदलेत्–इति।

(१) अहो आश्चर्यमाश्चर्यम् ! एवं नाम अपरिक्षतप्रकृतिस्थशरीरौ तिष्ठतः।

वृद्धानामित्यर्थः। अराघवः = रघुवंशादनुत्पन्नः। मूर्द्धा = उत्तमाङ्गम्। **शतधेति**—शतप्रकारमित्यर्थः। विदलेत = खण्डशो भवेत्, असौ म्रियेतेत्यर्थः। अवतीर्यताम् = मदीयाङ्कव्यवहितं सिंहासनम्परित्यज्यतामित्यर्थः। स्वस्थौ = सुखिनौ। कश्चिद्विकारः = मृत्योररिष्टरूपः पीडादिविशेषः। **अपरिक्षतेति**—अपरिक्षतं मनागपि विकारमप्राप्तमतएव प्रकृतिस्थम् = स्वभावस्थितं नीरोगं शरीरं वपुर्ययोस्तौ, निर्दोषसुस्थदेहावित्यर्थः। स्वस्त्ययनपरिगृहीतानि= स्वस्त्ययनेन "ॐस्वस्ति नः इन्द्रो वृद्धश्रवा."–इत्यादिना वैदिकस्वस्तिवाचनेन परिगृहीतानि प्राप्तरक्षाणि, तपःशरीराणि=तपस्विशरीराणीत्यर्थः।

तपस्विनां वेदमन्त्राभ्यासलब्धसिद्धिबलाच्छरीराणि कथमप्युपद्रुतानि न भवन्तीति भूयः प्रशस्यं तपोबलमिति भावः।

**अपिनामेति**—तपःसन्नद्धमूर्तिषु = तपसा स्वाध्यायाध्ययनब्रह्मचर्यादिरूपेण तपसा सन्नद्धा व्याप्ता व्यूढा मूर्तिर्येषां ते तेषु तपोबलसम्पन्नेषु, शराः= बाणा अपि, मोघाः = निष्फला नाम = इति निश्चितमेतत्। ( एवम् ) वासवस्य = इन्द्रस्य पुरन्दरस्यापि कुलिशकोटयः = कुलिशस्य वज्रस्य कोटयः खरा धारा अपि, कुण्ठाः = कुण्ठिताः प्रतिहता भवन्तीति सुव्यक्तम् = स्फुट-

( कुमारावुद्दिश्य )

किं भवद्भ्यामव्यवहिता भूमिरध्यास्यते ?

उभौ—महाराज ! प्रथमपरिणो (ग्र) तोऽयमर्थः ।

रा—तथा नाम ।

पि—(१) भो राअ, अदिही खु एदे, ता करेदु सकहाहिं आदिहेअं ।

रा—एष भवतोः सौन्दर्यावलोकनजनितेन कौतूहलेन प्रतार्यमाणः पृच्छामि, कतमो वर्णः आश्रमो वा भवतोर्जन्मनां वाऽवस्थामलङ्क्रियते ।

---

(१) भो ! राजन् ! अतिथी खल्वेतौ, तत् करोतु सङ्कथाभिरातथेयम्(थ्यम्) ।

---

मेवेत्यर्थः । एतच्च रामायणमहाभारतादिमहानिबन्धेषु वसिष्ठविश्वामित्रप्रभृत्युपाख्यानादिषु स्फुटं द्रष्टव्यम् । वर्मव्यूहितं शरीरं कदाचिच्छरैः विध्येतापि ननु तपोवर्मव्यूढं शरीरं तपस्विना भेत्तुं शक्यमिति याश्चर्यं तपोबलमिति भावः ॥१४॥

अव्यवहिता = व्यवधानशून्या भूमिः = स्थानम्, अध्यास्यते = आश्रयते किमिति रामप्रश्नः । अर्थात् एकत्रैव युवयोर्वासः पृथक्पृथग्वेति रामहृदयम् । प्रथमपरिणीतः = प्रथमं जन्मारम्भत एव परिणीतः परिप्राप्त उन्नीत इत्यर्थः, अयमर्थः = आवयोर्निवासस्थानरूपोऽर्थः, अर्थादत्रैव द्वयोर्नन्म वासश्चेति ।

अतिथी = आगन्तू । इकारान्तस्यातिथिशब्दस्य प्रथमाद्विवचने रूपम् । अततीति अतिथिः । "ऋतन्यञ्जि"-( ४ । २ ) इत्यादौणादिक इथिन्प्रत्ययः । "स्युरावेशिक आगन्तुरतिथिर्ना गृहागते" इत्यमरः । "अतिथिः कुशपुत्रे स्यात्पुमानागन्तुकेऽपि च" इति विश्वमेदिन्यौ । "प्राघुणिकस्त्वातिथिर्द्वयो" इति त्रिकाण्डशेषः । सङ्कथाभिः = प्रीतिपूर्वकैरालापैः । आतिथेयम् = अतिथौ साधु (कर्म) आर्यादिकम् । "पथ्यतिथिवसतिस्वपतेर्ढञ्" ( ४ । ४ । १०४ ) इतिसूत्रेण "तत्र साधु" रित्यर्थे ढञ् । "आतिथ्य" मिति पाठे तु "अतिथेर्ञ्यः" ( ५ । ४ । २६) इति ञ्य आतिथ्ये इदमातिथ्यम् ।

सौन्दर्येति—सुन्दरस्य भावः सौन्दर्यम् तस्य यदवलोकनं दर्शनं, तज्जनितेन तदुद्भवेन । कौतूहलेन = आश्चर्येण । प्रतार्यमाणः = बाधितः वशीकृत इत्यर्थः सम्पद्यमानः । वर्णः = ब्राह्मणादिः । आश्रमः = ब्रह्मचर्यादिः । जन्मना

कु— ( सञ्ज्ञया लवमादिशति )

ल—द्वितीयो वर्णः प्रथम आश्रमः ।

रा—नैतावग्रजन्मानौ, तदल्पोऽपराधः प्रणामप्रयोगो न्यूनासनपरिग्रहश्च । अथ क्षत्रियकुलपितामहयोः सूर्याचन्द्रमसोः को वा भवतोर्वंशस्य कर्ता ?

ल—भगवान् सहस्रदीधितिः ।

रा—कथमस्मत्समानाभिजनौ संवृत्तौ !

वि—(१) किं दोण्णं वि एक्कं एव्व पडिवअणं ।

रा—कश्चिदस्ति युवयोर्मिथो यौनः सम्बन्धः ?

(१) किं द्वयोरप्येकमेव प्रतिवचनम् ।

ताभ्याम् = जन्म च दीक्षा च जन्मदीक्षे ताभ्याम् । द्वितीयो वर्णः = क्षत्रिय इत्यर्थः । प्रथम आश्रमः = ब्रह्मचर्यम् । आवां क्षत्रियौ ब्रह्मचारिणौ चेत्यर्थः । अग्रजन्मानौ = ब्राह्मणौ । " द्विजात्यग्रजन्मभूदेववाडवाः । विप्रश्च ब्राह्मणः " इत्यमरः । " तत् " इत्यव्ययम् । तस्माद्धेतोरित्यर्थः । "प्रणामप्रयोगो न्यूनासनपरिग्रहश्च अल्पोऽपराधः" इत्यन्वयः । स्पष्टम् । एताभ्यां यः प्रणामः कृतः मदपेक्षया न्यूनासनग्रहणञ्च तेन भूयानपराधो न जातः क्षत्रियत्वादेव । एतेन ब्राह्मणवर्णे सति व्युत्क्रमे तु दोष एवेति भावः । ब्रह्मणोऽपत्यं "ब्राह्मणः" । "तस्यापत्यम्" ( ४।१।९२ ) इत्यण् । "अन्" ( ६।४।१६७ ) इति सूत्रेण "अणि परतः अन् प्रकृत्या स्याद्" इत्यर्थकेन टिलोपप्रतिषेधः । अथवा—"तदधीते तद्वेद" (४।२।५९) इति सूत्रेणाण् । ब्रह्माधीते वेद वेति " ब्राह्मणः " । किंवा—" शेषे" ( ४।२।९२ ) इत्यण् उक्तादन्यः शेषः । तेन—ब्रह्म जानातीति "ब्राह्मणः"

ल—भ्रातरावावां सोदर्यौ ।

रा—सवादी सन्निवेशः, वयसस्तु न किञ्चिदन्तरम् ।

ल—आवां यमलौ ।

रा—सम्प्रति युज्यते, को भवतोर्ज्यायान्, किं नामधेयम् ?

ल—( अञ्जलिना निर्दिश्य ) आर्यस्य पादपूजनायां लव इत्यात्मानं श्रावयामि, आर्योऽपि गुरुचरणवन्दनायां—(अप्रतिपत्तिं नाटयति)

कु—अहमपि कुश इत्यात्मानं श्रावयामि ।

रा—अहो ! उदात्तरम्यः समुदाचारः ।

वि—(१) जाणिद णामहेअ, को जट्ठोत्ति ण दिण्णं पडिवअणं ।

रा—नन्वञ्जलिनिर्देशाल्लवस्य मह्यमेव दत्तमेव प्रतिवचनं कुशो ज्यायानिति ।

वि—(२) साहु जाणिदं संपदं ।

रा—किन्नामधेयो भवतोर्गुरुः ?

(१) ज्ञातं नामधेयम्, को ज्येष्ठ इति न दत्तं प्रतिवचनम् ।

(२) साधु ज्ञातं साम्प्रतम् ।

"सत आगतः" (                    ) इत्यण् । समानयानेदनविकल्पः । किं युवयोरैक्य मतिश्रय । सोदर्यौ = समाने उदरे शयितौ । "समानोदरे शयित" ( ४।४।१०८ ) इति सूत्रेण यत् । "विभाषोदरे" (६ ३।८८) इति समानस्य स आदेशः । 'भ्राता तु स्यात्सहोदरः । समानोदर्यसोदर्यसगर्भ्यसहजा अपि । सोदरश्च" इति नाममाला ।

सवादी = संवदनशीलः सम इत्यर्थः । सन्निवेशः = अवयवसंस्थानम् । वयसः = आयुषः । अन्तरम् = विशेषः भेद इत्यर्थः । यमलौ = यमजौ सहोत्पन्नौ भ्रातरौ । भवतोर्मध्ये कः ज्यायान् = ज्येष्ठः । 'किं नामधेयम्' इति । तस्य ज्यायसः किन्नामेत्यर्थः । अञ्जलिनेति–ज्येष्ठनामग्रहणं शापादिनि भावः । आर्यस्य = ज्येष्ठस्य ( कुशस्य ) पादपूजनायाम् = चरणसेवायाम् । अप्रतिपत्तिम् = ज्येष्ठस्य नामग्रहणे दोषादबोधमनुच्चारणं वा नाट्येन दर्शयतीत्यर्थः । उदात्तरम्यः = उदात्तश्चासौ रम्यो मनोहरः । प्रशस्यत्वादादरणीय इत्यर्थः । समुदाचारः = सभ्यव्यवहारो ज्येष्ठस्य नामानुच्चारणरूपः ।

अञ्जलिनिर्देशात् = अञ्जलिना सूचनात् । किन्नामधेयः = किं नामधेय

ल—ननु भगवान्वाल्मीकिः ।

रा—केन सम्बन्धेन ?

ल—उपनयनोपदेशेन ।

रा—अहमत्रभवतोः शरीरस्य धातारं पितरं वेदितुमिच्छामि ।

ल—नहि जानाम्यस्य नामधेयम्, न कश्चिदस्मिंस्तपोवने तस्य नाम व्यवहरति ।

रा—अहो ! माहात्म्यम् ।

कु—जानाम्यस्य नामधेयम् ।

रा—कथ्यताम् ।

कु—निरनुक्रोशो नाम ।

रा—( विदूषकमवलोक्य ) अपूर्वं खलु नामधेयम् ।

वि—( विचिन्त्य ) (१) एव्वं दाव पुच्छिस्सं । णिरणुक्कोसोत्ति को एव्वं भणादि ?

कु—अम्बा ।

वि—(२) किं कुविदा एव्वं भणादि, आदु पइदित्था ?

(१) एवं तावत् पृच्छामि । निरनुक्रोश इति क एवं भणति ?

(२) किं कुपितैवं भणति उत प्रकृतिस्था ?

यस्य सः किन्नामधेयः किमाख्य इत्यर्थः । " आख्याह्वेऽभिधानञ्च नामधेयञ्च नाम च " इत्यमरः । उपनयनोपदेशेन=उपनयनपूर्वकमुपदेश उपनयनोपदेशः द्विजातीनामुपवीतधारणपूर्वकं मन्त्रोपदेशाधिकारात् । स्पष्टश्चायमर्थोऽपशूद्राधिकरणे—"शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि" (ब्र०सू० १।३।३४) इत्यत्र ।

शरीरस्य धातारम् = देहस्य रचयितारम् । पितरम् = जनकम् । वेदितुम् = ज्ञातुम् । व्यवहरति = उच्चारयति । निरनुक्रोशः = निर्घृणः । अपूर्वम् = अश्रुतपूर्वम् । भणति = कथयति । कुपिता = क्रुद्धा । प्रकृतिस्था =

कु—यद्यावयोर्बालभावचितं किञ्चिदविनयं पश्यति तदेवमधिक्षिपति-निरनुक्रोशस्य पुत्रौ मा चापलम्-इति। ﹨

रि—(१) एदाण जदि पिदुणो णिरणुक्कोसोत्ति णामहेअं, एदाण जणणी तेण अवमाणिदा णिव्वासिदा, तस्स अप्पवहन्ती एदिणा वअणेण दारए णिब्भच्छदि।

दा—सम्यगुपलक्षितं कौशिकेन (निश्वस्य) धिङ्मामेवम्भूतम्। सा तपस्विनी मत्कृतेनापराधेन स्वापत्यमेवं मन्युगर्भैरक्षरैर्निर्भर्त्सयति (सवाष्पमवलोकयति) अपि सन्निहितस्तत्रभवान् निरनुक्रोशो युष्मदाश्रमे?

ल—न सन्निहितः।

दा—(ससम्भ्रमं) अपि श्रूयते?

ल—(कुशमवलोकयति)

कु—न तस्य पादावस्माकं नमस्कृतपूर्वौ। अम्बायाः पुनः

---

(१) एतयोर्यदि पितुः निरनुक्रोश इति नामधेयम्, एतयोर्जननी तेनावमानिता निर्वासिता तस्याप्रभवन्ती एतेन वचनेन दारकं निर्भर्त्सयति।

---

स्वभावस्था क्रोधशून्यापीत्यर्थः। बालभावजनितम् = शैशवहेतुकम्। अविनयम् = दुःशीलताम्। अधिक्षिपति = भर्त्सयति। चापलम् = चपलस्य भावश्चापलं चाञ्चल्यं "मा कुरुत" इति शेषः।

एतयोः = कुशलवयोः। जननी = माता। तेन = एतयोः पित्रैव। अवमानिता = तिरस्कृता। निर्वासिता = निष्कासिता च। तस्य पुनर्योः पितुः स्वपत्युरित्यर्थः। अप्रभवन्ती = असमर्था सती। एतेन वचनेन = "निरनुक्रोशस्य पुत्रौ" इति व्याहरणेन। एवम्भूतम् = पतिव्रताधौरेयाया स्वभावशुद्धाया कठोरगर्भायाः सीताया निर्वासनकरमित्यर्थः। तपस्विनी = वराकी। मत्कृतेन अपराधेन = निर्दयत्वरूपेण स्वापत्यम् = स्वसन्तानम्। मन्युगर्भैः = मन्युः क्रोधः गर्भे मध्ये येषां ते, अक्षरैः = वर्णैः पदैर्वाक्यैर्वेति विवेचनम्। सन्निहितः = समीपवर्ती।

नमस्कृतपूर्वौ = पूर्वं नमस्कृताविति निष्ठया पूर्वनिपातः। अम्बायाः =

वि–(१) किं तव ईरिसो अहिप्पाओ सीदागब्भगदा एदे दारआ त्ति?

रा—मा मैवम्। कथं हन्त! तपोवनवासिनि जने सम्बन्धमीदृश-मध्यारोपयामि। किन्तु—

एतत्कुमारयुगलं वयसान्वयेन
श्यामोन्नतेन वपुषा विपदानया च।
तां मैथिलीं तनयसम्भविनीमवस्था-
मादाय मामतितरां तरलीकरोति ॥१५॥

(चिन्ताशोकं नाटयति) (नेपथ्ये)

---

(१) किं तवेदृशोऽभिप्रायः, सीतागर्भगतावेतौ दारकाविति?

---

त्सन्ततेर्जन्माऽदर्शनाच्च। ईदृशम्=दाम्पत्यानुगामिनं सन्तानानुगतञ्च। अध्या-रोपयामि=सम्भावयामि। तापसे जने एवं सम्भावने कदाचिद्दोषभागी स्यामिति भावः।

एतदिति—"एतत्कुमारयुगलं मामतितरां तरलीकरोति" इति क्रियाकारकसम्बन्धः। एतत् कुमारयुगलम्=कुशलवाख्यं कुमारद्वयम्, वयसा=आयुषा अन्वयेन = सूर्यवंशेन, श्यामोन्नतेन=श्यामेन अतसीपुष्पसन्निभेन उन्नतेन समुच्छ्रायेन, वपुषा=शरीरेण, अनया च विपदा=मातृप्रवासरूपया विपत्त्या अर्थात् मातृप्रवाससम्बन्धेन पित्रदर्शनरूपया विपदा तां मैथिलीम्=सीताम्, तनयसम्भविनीम्=तनययोः पुत्रयोः सम्भवोऽस्यामस्तीति तादृशीम्-अर्थात् सीतायाः पुत्रोत्पत्तिमतीम्, अवस्थाम्=दशाम्, आदाय = आनीय, "कथमन्तर्वत्नी सीता कथञ्च प्रवासिता सती पुत्री प्रारोष्ट" इत्येवं रूपेण तां दशां मम नेत्रगोचरं कृत्वा माम् अतितराम्=अत्यन्तमेव तरलीकरोति= चपलयति मदीयं धैर्यं ह्रासयतीत्यर्थः।

एतयोः कुमारयोर्वपुर्वशाच्च सीताऽपत्यतां निश्चाययतः, मन्ये सा प्राणिति किमेतयोरहमेव जनक इत्यादिर्विचारो मम धैर्यं विद्रावयतीति भावः। तादृशवयोऽन्वितकुमारयुगलाद्यनेकपदार्थहेतुकं काव्यलिङ्गमलङ्कारः। अनुप्रासश्च। वसन्ततिलकावृत्तम् ॥१५॥

चिन्ताशोकम्=चिन्तया शोकम्, चिन्तां शोकञ्चेति वा।

भो! भोः! कोऽत्र सन्निहितस्तत्रभवतोरिक्ष्वाकुकुलकुमारयोः कुशलवयोः।

उभौ—( आकर्ण्य ) द्वावप्यावां सन्निहितौ।

( पुनर्नेपथ्ये )

किमितीयतीं वेलां नियोगः प्रत्युदास्यते?

वाल्मीकिना मुनिवरेण महारथस्य
यासौ पुराणपुरुषस्य कथा निबद्धा।
सा राघवश्रुतिपथातिथितां च नेया
कालश्च मध्यसवनस्य न लङ्घनीयः ॥१६॥

---

कोऽत्र सन्निहितः = समीपवर्ती। तत्रभवतोः = माननीययोः। इक्ष्वाकुकुलकुमारयोः = इक्ष्वाकुवंशसन्तानयोः।

"इयतीम् = एतावतीं वेलाम्प्रति, नियोगः = रामायणश्रावणायनरूपो वाल्मीकिगुरोरादेशः। किमिति=कुतो हेतोः, उदास्यते=उपेक्ष्यते भवद्भ्यामिति-शेषः" इत्येवं व्याख्येयम्। अन्यथा—"इयतीं वेलाम्" इति द्वितीया-ऽनन्विताऽनुपपन्ना च भवेत्।

वाल्मीकिनेति—वाल्मीकिना=एतन्नाम्ना मुनिवरेण = महामुनिना, महारथस्य महान् रथो यस्य तस्य योद्धृधौरेयस्य पुराणपुरुषस्य=पुराणश्चासौ पुरुषः पुराणपुरुषोऽनादिनिधनो विष्णुः तस्य विष्णोः अर्थात् तदवतार-भूतस्य श्रीरामस्य या कथा=रामायणाभिधाना, निबद्धा="मा निषाद! प्रतिष्ठां त्वम्"-इत्येवं महाकाव्यरूपतया ग्रथिता, सा=लोकोत्तरचमत्कारिणी राघव-श्रुतिपथातिथिताम्=राघवस्य रघोरन्ववायजस्य रामस्य ( महाराजस्य ) श्रुति-पथस्य=कर्णमार्गस्य अतिथितामतिथेर्भावम्, नेया=प्रापणीया अर्थात् तस्य महापुरुषस्य कर्णगोचरीकरणीया, मध्यसवनस्य = मध्याह्नसन्ध्यास्नानस्य, कालश्च=समयोऽपि, न=नैव लङ्घनीयः=अतिक्रमणीयः। समये हि कृतं कर्म न सुसम्पन्नं भवति "कालः पिबति तद्रसम्" इत्युक्तेः। एतेन "राघवा भवदकाला भाषन्" इत्यपि न विस्मरणीयम्। वसन्ततिलकावृत्तम् ॥१६॥

वि–(१) किं तव ईरिसो अहिप्पाओ सीदागब्भगदा एदे दारआ त्ति !

रा—मा मैवम् । कथं हन्त ! तपोवनवासिनि जने सम्बन्धमीदृशमध्यारोपयामि । किन्तु—

> एतत्कुमारयुगलं वयसान्वयेन
> श्यामोन्नतेन वपुषा विपदानया च ।
> तां मैथिलीं तनयसम्भाविनीमवस्था-
> मादाय मामतितरां तरलीकरोति ॥१५॥

( चिन्ताशोकं नाटयति ) ( नेपथ्ये )

---

(१) किं तवेदृशोऽभिप्रायः, सीतागर्भगतावेतौ दारकाविति ?

---

त्सन्ततेर्जन्माऽदर्शनाच्च । ईदृशम्=दाम्पत्यानुगामिनं सन्तानानुगतञ्च । अध्यारोपयामि=सम्भावयामि । तापसे जने एवं सम्भावने कदाचिद्दोषभागी स्यामिति भावः ।

एतदिति—"एतत्कुमारयुगलं मामतितरां तरलीकरोति" इति क्रियाकारकसम्बन्धः । एतत् कुमारयुगलम्=कुशलवाख्य कुमारद्वयम्, वयसा=आयुषा अन्वयेन = सूर्यवंशेन, श्यामोन्नतेन=श्यामेन अतसीपुष्पसन्निभेन उन्नतेन समुच्छ्रायेन, वपुषा=शरीरेण, अनया च विपदा=मातृप्रवासरूपया विपत्त्या अर्थात् मातृप्रवाससम्बन्धेन पितृदर्शनरूपया विपदा तां मैथिलीम्=सीताम्, तनयसम्भविनीम्=तनययोः पुत्रयोः सम्भवोऽस्यामस्तीति तादृशीम्-अर्थात् सीतायाः पुत्रोत्पत्तिमतीम्, अवस्थाम्=दशाम्, आदाय = आनीय, "कथमन्तर्वत्नी सीता कथञ्च प्रवासिता सती पुत्रौ प्रासोष्ट" इत्येवं रूपेण तां दशां मम नेत्रगोचरं कृत्वा माम् अतितराम्=अत्यन्तमेव तरलीकरोति= चपलयति मदीयं धैर्यं ह्रासयतीत्यर्थः ।

एतयोः कुमारयोर्वपुर्वशाच्च सीताऽवस्थां निधापयतः, मन्ये सा प्रापिति विमेनयोःरहमेव जनक इत्यादिर्विचारो मम धैर्यं विद्रावयतीति भावः । तादृशवयोऽन्वियकुमारयुगलाद्यनेकपदार्थहेतुकं काव्यलिङ्गमलङ्कारः । अनुप्रासश्च । वसन्ततिलकावृत्तम् ॥१५॥

चिन्ताशोकम्–चिन्तया शोकम्, चिन्ता शोकश्चेति वा ।

भो! भोः! कोऽत्र सन्निहितस्तत्रभवतोरिक्ष्वाकुकुलकुमारयोः कुशलवयोः।

उभौ—( आकर्ण्य ) द्वावप्यावां सन्निहितौ।

( पुनर्नेपथ्ये )

किमितीयतीं वेलां नियोगः प्रत्युदास्यते ?

वाल्मीकिना मुनिवरेण महारथस्य
यासौ पुराणपुरुषस्य कथा निबद्धा।
सा राघवश्रुतिपथातिथितां च नेया
कालश्च मध्यसवनस्य न लङ्घनीयः ॥१६॥

---

कोऽत्र सन्निहितः = समीपवर्ती। तत्रभवतोः = माननीययोः। इक्ष्वाकुकुलकुमारयोः = इक्ष्वाकुवंशसन्तानयोः।

"इयतीम् = एतावती वेलाम्प्रति, नियोगः = रामायणगानरूपो वाल्मीकिगुरोरादेशः, । किमिति=कुतो हेतोः, उदास्यते=उपेक्ष्यते भवद्भ्यामिति शेष" इत्येवं व्याख्येयम्, । अन्यथा—"इयतीं वेलाम्" इति द्वितीयाऽनन्विताऽनुपपन्ना च भवेत्।

वाल्मीकिनेति—वाल्मीकिना=एतन्नाम्ना मुनिवरेण = महामुनिना, महारथस्य महान् रथो यस्य तस्य यौद्धेयस्य पुराणपुरुषस्य=पुराणश्चासौ पुरुषः पुराणपुरुषोऽनादिनिधनो विष्णुः तस्य विष्णोः अर्थात् तदवतारभूतस्य श्रीरामस्य या कथा=रामायणाभिधाना, निबद्धा="मा निषाद! प्रतिष्ठां त्वम्"-इत्येवं महाकाव्यरूपतया ग्रथिता, सा=लोकोत्तरचमत्कारिणी राघवश्रुतिपथातिथिताम्=राघवस्य रघोरन्ववायजस्य रामस्य ( महानृपतेः ) श्रुतिपथस्य=कर्णमार्गस्य अतिथितामतिथेर्भावम्, नेया=प्रापणीया अर्थात् तस्य महापुरुषस्य कर्णगोचरीकरणीया, मध्यसवनस्य = मध्याह्नसन्ध्यास्नानस्य, कालश्च=समयोऽपि, न=नैव लङ्घनीयः=अतिक्रमणीयः। अकाले कृतं कर्म न फलप्रदं भवति "कालः पिबति तद्रसम्" इत्युक्तेः। एतेन "राघवा यद्भाला भागन्" इत्यपि न विस्मरणीयम्। वसन्ततिलकावृत्तम् ॥१६॥

रेकवेणीसंसूचितानि तस्योच्छ्वसितानि ।

रा—किं वा भवन्तौ तेनाघ्रातपूर्वौ ?

कु—तदपि नास्त्येव ।

रा—अतिदीर्घप्रवासोऽयं दारुणश्च, यदियता कालेन नाम परस्परलोचनगोचरमपि नावतीर्णा यूयम् । ( विदूषकमवलोक्य जनान्तिकम् ) कुतूहलेनाविष्टो मातरमनयोर्नामतो वेदितुमिच्छामि । न युक्तं च मम स्त्रीगतमनुयोक्तुम्, विशेषतस्तपोवने । तत्कोऽत्राभ्युपायः ?

वि—( जनान्तिकं ) (१) अप्पडिहदवअणमहत्तणा हि बह्मणजादी, अहं उण पुच्छिस्सं ( प्रकाशं ) भो किण्णामहेआ तुह्माणं जणणी ?

(१) अप्रतिहतवचनमहत्त्वा हि ब्राह्मणजातिः, अहं पुनः पृच्छामि । (—) भो किंनामधेया युवयोर्जननी ?

मातुः । एकवेणीति—एकवेण्या एकया प्रवेण्या संसूचितानि बोधितानि । प्रोषितभर्तृकाया भार्या केशरचनाविशेषो "वेणी" । " वेणी सेतुप्रवाहयोः । देवतालि केशबन्धे च " इति हैमः ।

तस्य = निरनुक्रोशस्यैव ( कृते ) । उच्छ्वसितानि = दीर्घाःश्वासाः ( भवन्तीति निश्चीयते ) । आघ्रातपूर्वौ = पूर्वमाघ्रातावित्याघ्रातपूर्वौ चुम्बितावित्यर्थः ।

अतिदीर्घप्रवासः = बहुलम्बमानः परदेशवासः । दारुणः = कठोरः । परस्परलोचनगोचरम् = अन्योन्यनेत्रविषयम् । "जनान्तिकम्" इति । आह च विश्वनाथः—

त्रिपताककरेणान्यानपवार्यान्तरा कथाम् ।
अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् ॥ इति ।

कुतूहलेनाविष्टः=कौतुकाक्रान्तः । स्त्रीगतम्=स्त्रीसम्बन्धम् । अनुयोक्तुम्=प्रष्टुम् । विशेषतः = असाधारणतः । तपोवने = नैमिषेऽस्मिन्नरण्ये ।

अप्रतिहतेति—अप्रतिहतमकुण्ठितं वचनमहत्त्वं वाक्यमहिमा यस्याः सा तादृशी, सर्वत्र सर्वदा सर्वत्रैव मधुरित्यर्थः । "ब्राह्मणजाति"रिति । ब्राह्मणा हि सर्वतन्त्रस्वतन्त्रा भवन्तीति भावः । स्पष्टमन्यत् ।

ल—तस्या द्वे नामनी।

वि—(१) कहं विअ?

ल—तपोवनवासिनो देवीति नामाह्वयन्ति, भगवान्वाल्मीकिर्वधूरिति।

रा—कतमं क्षत्रियकुलं वाल्मीकिमुनिमुखनिर्गतेन वधूशब्देन वर्धते?

वि—(२) वित्थिण्णं क्खत्तिअकुलं त्ति ण जाणीअदि कदमं क्खत्तिअकुलं त्ति।

रा—अपि च, इतस्तावद्वयस्य। मुहूर्तमात्रम्।

वि—(३) (उपसृत्य) आणवेदु भवं।

रा—अपि कुमारयोरनयोरस्माकं च सर्वाकारसंवादी कुटुम्बवृत्तान्तः?

वि—(४) कहं विअ।

राम—पश्य, एतयोः सीतागर्भस्य च तुल्यः कालातिपातः, एतावपि क्षत्रियौ सूर्यान्वयौ, अजातप्रोषितौ च निर्विकारौ राजासनारोहणे, पितरि चानयोर्दारुणत्वसूचनो निरनुक्रोशशब्दः, मातुश्च माहात्म्यविभावनो देवीशब्दः। सर्वथाहमनेन सादृश्यबाहुल्येन पर्याकुलोऽस्मि मन्दभाग्यः।

(वैक्लव्यं नाटयति)

---

(१) कथमिव?

(२) विस्तीर्णं क्षत्रियकुलमिति न ज्ञायते कतमं क्षत्रियकुलमिति।

(३) आज्ञापयतु भवान्।

(४) कथमिव।

---

आह्वयन्ति=आकारयन्ति। वाल्मीकीति—"वाल्मीकिमुनेर्मुखात् निर्गतेन वधूशब्देन कतमं क्षत्रियकुलं वर्धते" इति सम्बन्धः। सर्वाकारसंवादी=आकारतो व्यवहारतश्च सदृशः, कुटुम्बवृत्तान्तः=परिवारोदन्तः। तुल्यः कालातिपात=एतावपि दशमासस्थौ सीताया अपि च निर्वासितायाः दशमासावधिरित्यर्थः। एतावपि=कुमारावित्यर्थः। सूर्यवंशीयौ क्षत्रियावित्यर्थः। अजातप्रोषितौ=अजातत्वेन प्रेषितौ राजासनारोहणे=राजसिंहासनारोहे। दारुणत्वसूचनः = कठोरतासूचकः। निरनुक्रोशशब्दः। माहात्म्यविभावनः = माहात्म्यस्य गौरवविशेषस्य विभावनः प्रकाशकः देवीशब्दः। सादृश्यबाहुल्येन= प्रचुरेण सादृश्येनेत्यर्थः। पर्याकुलः = विह्वलः। मन्दभाग्यः=प्रियाविरहा-

वि–(१) किं तव ईरिसो अहिप्पाओ सीदागब्भगदा एदे दारआ त्ति?

रा—मा मैवम्। कथं इन्त! तपोवनवासिनि जने सम्बन्धमीदृशमध्यारोपयामि। किन्तु—

एतत्कुमारयुगलं वयसान्वयेन
श्यामोन्नतेन वपुषा विपदानया च।
तां मैथिलीं तनयसम्भविनीमवस्था-
मादाय मामतितरां तरलीकरोति ॥१५॥

( चिन्ताशोकं नाटयति ) ( नेपथ्ये )

(१) किं तवेदृशोऽभिप्रायः, सीतागर्भगतावेतौ दारकाविति?

त्सन्ततेर्जन्माऽदर्शनाच्च। ईदृशम्=दाम्पत्यानुगामिनं सन्तानानुगतञ्च। अध्यारोपयामि=सम्भावयामि। तापसे जने एवं सम्भावने कदाचिद्दोषभागी स्यामिति भावः।

**एतदिति**—"एतत्कुमारयुगलं मामतितरां तरलीकरोति" इति क्रियाकारकसम्बन्धः। एतत् कुमारयुगलम्=कुशलवाख्यं कुमारद्वयम्, वयसा=आयुषा अन्वयेन = सूर्यवंशेन, श्यामोन्नतेन=श्यामेन अतसीपुष्पसन्निभेन उन्नतेन समुच्छ्रायेण, वपुषा=शरीरेण, अनया च विपदा=मातृप्रवासरूपया विपत्त्या अर्थात् मातृप्रवाससम्बन्धेन पितृदर्शनरूपया विपदा तां मैथिलीम्= सीताम्, तनयसम्भविनीम्=तनययोः पुत्रयोः सम्भवोऽस्यामस्तीति तादृशीम्- अर्थात् सीतायाः पुत्रोत्पत्तिमतीम्, अवस्थाम्=दशाम्, आदाय = आनीय, "कथमन्तर्वत्नी सीता कथम्च प्रवासिता सती पुत्रौ प्रासोष्ट" इत्येवं रूपेण तां दशां मम नेत्रगोचरं कृत्वा माम् अतितराम्=अत्यन्तमेव तरलीकरोति= चपलयति मदीयं धैर्यं ह्रासयतीत्यर्थः।

एतयोः कुमारयोर्वपुर्वंशश्च सीताऽपत्यतां निश्चाययतः, मन्ये सा प्राणिति किमेतयोरहमेव जनक इत्यादिर्विचारो मम धैर्यं विस्रावयतीति भावः। तादृशवयोऽन्विकुमारयुगलाद्यनेकपदार्थहेतुकं काव्यलिङ्गमलङ्कारः। अनुप्रासश्च। **वसन्ततिलकावृत्तम्** ॥१५॥

चिन्ताशोकम्=चिन्तया शोकम्, चिन्तां शोकञ्चेति वा।

भो! भोः! कोऽत्र सन्निहितस्तत्रभवतोरिक्ष्वाकुकुलकुमारयोः कुशलवयोः।

उभौ—( आकर्ण्य ) द्वावप्यावां सन्निहितौ।

( पुनर्नेपथ्ये )

किमितीयतीं वेलां नियोगः प्रत्युदास्यते?

वाल्मीकिना मुनिवरेण महारथस्य
यासौ पुराणपुरुषस्य कथा निबद्धा।
सा राघवश्रुतिपथातिथितां च नेया
कालश्च मध्यसवनस्य न लङ्घनीयः ॥१६॥

---

कोऽत्र सन्निहितः = समीपवर्ती। तत्रभवतोः = माननीययोः। इक्ष्वाकुकुलकुमारयोः = इक्ष्वाकुवंशसन्तानयोः।

" इयतीम् = एतावती वेलाम्प्रति, नियोगः = रामायणकथागायनरूपो वाल्मीकिगुरोरादेशः। किमिति=कुतो हेतो, उदास्यते=उपेक्ष्यते भवद्भ्यामिति शेष " इत्येवं व्याख्येयम्। अन्यथा—" इयतीं वेलाम् " इति द्वितीयाऽनन्विताऽनुपपन्ना च भवेत्।

वाल्मीकिनेति—वाल्मीकिना=एतन्नाम्ना मुनिवरेण = महामुनिना, महारथस्य महान् रथो यस्य तस्य धौरेयस्य पुराणपुरुषस्य–पुराणश्चासौ पुरुष पुराणपुरुषोऽनादिनिधनो विष्णुः तस्य विष्णोः अर्थात् तदवतारभूतस्य श्रीरामस्य या कथा=रामायणाभिधाना, निबद्धा=" मा निषाद! प्रतिष्ठाम् "-इत्येवं महाकाव्यरूपतया प्रथिता, सा=लोकोत्तरचमत्कारिणी राघवश्रुतिपथातिथिताम्=राघवस्य रघोरन्ववायजस्य रामस्य ( महान्तपतेः ) श्रुतिपथस्य=कर्णमार्गस्य अतिथितामतिथेर्भावम्, नेया=प्रापणीया अर्थात् तस्य महापुरुषस्य कर्णगोचरीकरणीया, मध्यसवनस्य = मध्याह्नसन्ध्याकालस्य, कालश्च=समयोऽपि, न=नैव लङ्घनीयः=अतिक्रमणीयः। अकाले कृतं कर्म न सुरम्यम्भवति " कालः पिबति तद्रसम् " इत्युक्तेः। एतेन "राघवा यज्ञाना भावन् " इत्यपि न विस्मरणीयम्। वसन्ततिलकावृत्तम् ॥१६॥

श्रोतुमिच्छामि । सन्निधीयन्तां सभासदः, प्रेष्यतामस्मदन्तिकं सौमित्रिः अहमप्येतयोश्चिरासनपरिखेदं पादविहरणेनोपहरामि ।

( इति निष्क्रान्ताः सर्वे )

पञ्चमोऽङ्कः



क्रियन्ताम् । सभासदः = पारिषद्याः । प्रेष्यताम् = प्रहीयताम् । अस्मदन्तिकम् = मत्सन्निधिम् । सौमित्रिः = सुमित्रासुतो लक्ष्मणः । चिरासनपरिखेदम् = चिरपर्यन्तं स्थितिजनितं कष्टम् । पादविहरणेन=चङ्क्रमणेन भ्रमणेनेति यावत् । अपहरामि=दूरीकरोमि ।

इति श्रीपण्डितदेवीदाससनुजनुषा सारस्वतवंशावतंसेन सती-विष्णुदेवीगर्भजेन स्यालकोटवास्तव्य-जैनन्यायविशारद-कवितार्किक [ तन्त्रचक्रवर्ति ] दर्शनाचार्य-नृसिंहदेवशास्त्रिविरचितायां "सौरभोल्लासिनी" इत्यपराख्याया "सौभाग्यवती" नाम-कुन्दमालाव्याख्याया पञ्चमोऽङ्कः ।

( ततः प्रविशति कुशलवाभ्यामनुगम्यमानो रामभद्रो लक्ष्मणश्च )

सर्वे—( परिक्रामन्ति )

क—( उपसृत्य ) जयत्वार्यः, एतत्सज्जमास्थानमण्डपम्, एतदासनं च। ( सर्वे उपविशन्ति )

क—इतस्तावदवलोकयतु देवः, एते राघवाः पौरजानपदाश्च देवं सम्भावयन्ति।

रा—( दृष्ट्वा ) किमिदमपरमस्मदन्तिकाद्यवनिकया तिरोधीयते?

क—एता स्थिता महादेव्यः कौसल्याद्या महीपतेः।
एतद्भरतशत्रुघ्नलक्ष्मणानां वधूत्रयम् ॥ २ ॥

---

सद्वृत्ते" इति च विश्वः। "साकं सत्रा समं सह। सार्धम्" "यशः सर्वेऽस्त्रियौ य ग" इत्यमरः।

अत्र—उपमानोपमेयसाधारणधर्मोपमावाचकानां चतुर्णामप्युपादानात् पूर्णोपमालङ्कारः। "परिष्कृतत्वं" साधारणो धर्मः। तत्र नियमवत्त्वमुभयत्रापीत्यनुसन्धेयम्। अनुष्टुभि—"वक्त्रं" नामच्छन्दः। "वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम्" इति तल्लक्षणात्। गुणादिकं पूर्ववच्चिन्तनीयम् ॥ १ ॥

अनुगम्यमानः=अनुस्रियमाणः। सज्जम्=प्रस्तुतं तत्कालव्यवहारोपयोगीति यावत्। आस्थानमण्डपम्=सभामण्डपम्। एतत्=पुरोवर्ति। आसनम्=सिंहासनं यदुपवेशने राज्ञ एवाधिकारः। राघवाः=लक्ष्मणाद्याः, पौरजानपदाः=पौराश्च जानपदाश्च ते। तत्र—पौराः अयोध्याराजधानीनिवासिनः, जानपदाः=राष्ट्रान्तर्गतदेशदेशान्तरादायाताः। सम्भावयन्ति=सत्काराय प्रतिपालयन्तीत्यर्थः। दृष्ट्वा=सर्वत्र दृष्टिं पातयित्वा। रामः पृच्छति—**किमिदमितीति**—अस्मदन्तिकात्=अस्मत्सामीप्यात्, यवनिकया=जवनिकया तिरस्करिण्येति यावत्। "प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा" इत्यमरः। "यवनिका, जमनिका" इत्यपि च पाठान्तरम्। "यवनिका" इति युधातोर्ल्युटि, स्वार्थे कनि, आपि, इत्वे च सिद्धम्। यौत्यस्यामिति व्युत्पत्तिः। तिरोधीयते=आच्छाद्यते।

लक्ष्मण—( कञ्चुकिनमुद्दिश्य ) आर्य ! वैदेही च न देवीषु संख्यायते, न वधूषु च ।

राम—( निश्वस्य ) कञ्चुकिन् ! गच्छ त्वं स्वभूमिमध्यास्व ।

कञ्चुकी—यदाह ( निष्क्रान्तः )

राम—आर्यौ ! प्रस्तूयताम् ।

कुशलवौ—

उपयेमे ततस्तिस्रो धर्मपत्नीर्महीपतिः ।
कौसल्यामथ कैकेयीं सुमित्रां च सुमध्यमाम् ॥ ३ ॥

---

"एताः" इति । एताः तिस्रः कौसल्याद्याः=कौसल्या आद्या यासु ताः महीपतेः=राज्ञो दशरथस्य, महादेव्यः=महिष्यः ( राज्ञ्यः ) सन्तीति शेषः । एतद् भरतशत्रुघ्नलक्ष्मणानां त्रयाणामेव भ्रातॄणाम्, वधूत्रयम्=जायात्रयं वर्तत इत्यर्थः ।

यद्यपि लक्ष्मणशत्रुघ्नौ सुमित्रासुतावित्येष ज्येष्ठानुगः क्रमः तथापि शत्रुघ्नस्य भरतेन सह विशेषसम्बन्धं बोधयितुमसौ नादृतः । "एतद्भरतसौमित्रिशत्रुघ्नानां वधूत्रयम्" इत्येवमपि वक्तुं शक्यत्वात्, परमत्रेऽपि 'शत्रुघ्नलक्ष्मणौ' इत्युक्तेः वृत्तपाठस्वारस्यानुरोध एव तथापाठे हेतुर्मन्तव्यः । केवलं छन्दोऽनुरोधस्तु निर्हेतुकः । देवीषु=राज्ञीषु । वधूषु=जायासु । संख्यायते=गण्यते; न गण्यते इति पृष्ठा लक्ष्मणस्य ।

स्वभूमिम्=स्वाधीकारस्थानम्, अध्यास्व=आश्रयस्व, तत्रोपविशेत्यर्थः । "स्वभूमि" मित्यत्र "अधिशीङ्स्थासां कर्म ।१।४।४६। इत्यनेनाधारस्य कर्मसंज्ञा । रामः कुशलवौ प्रत्याह—"प्रस्तूयताम्" इति । उपक्रम्यतां गीतिरित्यर्थः ।

"उपयेमे" इति । ततो महीपतिः=उदवोढ । ता धर्मपत्नीर्दर्शयति—कौसल्यामित्यादिना । कौसल्यां, कैकेयीं, सुमध्यमां सुमित्रां च । सुष्ठु मध्ये भागोऽवयवः ( कटिभागः ) यस्याः सा तां कृशोदरीमित्यर्थः । "उपयेमे" इत्यत्र "उपाद्यमः स्वकरणे" ( १ । ३ । ५६ ) इति सूत्रेण स्वकरणेऽर्थे आत्मनेपदम् ।

रामलक्ष्मणौ—( सहर्षम् ) तात एव कथानायकतामुपनीतः कविना ( उभौ नमस्कृत्यासनादवतरतः )

कुशलवौ—कौसल्या सुषुवे रामं—

लक्ष्मणः—( प्रणमति )

कुशलवौ—कैकेयी भरतं ततः ।
सुमित्रा जनयामास यमौ शत्रुघ्नलक्ष्मणौ ॥ ४ ॥

रा—( लक्ष्मणमालिङ्गति )

कुशलवौ—उपयेमे ततः सीतां रामः सौमित्रिरूर्मिलाम् ।
तथा भरतशत्रुघ्नौ कुशध्वजसुते उभे ॥ ५ ॥

---

तात=पिता दशरथः । कथानायकताम्=कथायाः नायकः कथानायकः तस्य भावस्तत्ता ताम्, कथायाः प्रधानभावम् । उपनीतः=उपनिबद्धः । कविना=रामायणप्रणेत्रा वाल्मीकिमुनिनेत्यर्थः । नमस्कृत्य=प्रणम्य ।

अत्र—स्वपितुर्नामश्रवणकाल एव नमस्काराचारपालनेन मरणोत्तरमपि पुत्रेण सह पितृणां सम्बन्धः शास्त्रसम्मत एवेत्ययमर्थो मर्यादापुरुषाचारद्वारा कविना प्रदर्शितः, तदमुं सम्बन्धं निह्नुवाना श्राद्धाद्यास्तिककर्मपरएङ्मुखा अपहस्तयितव्या एव । आसनादवतरणेन परा पितृभक्तिरवतारिता ।

"कौसल्या" इति—कौसल्या=कोशलदेशाधिपस्य राज्ञः पुत्री, रामम्=सर्वाग्रजम्, सुषुवे=उत्पादयामास । ततः कैकेयी भरतं सुषुवे इत्यन्वेतव्यम् । सुमित्रा तन्नाम्नी दशरथस्य महिषी यमौ=यमजौ, शत्रुघ्नलक्ष्मणौ एतन्नामानौ द्वौ पुत्रौ जनयामास=प्रसूतवती ॥ ४ ॥

ततः=धनुर्भङ्गोत्तरं ( स्वयंवरे ) रामः सीतां नाम ( धर्मपत्नीम् ) उपयेमे, सौमित्रिः=लक्ष्मणः ऊर्मिलाम्, तथा=तद्वत् भरतशत्रुघ्नौ उभे=द्वे कुशध्वजसुते=कुशध्वजस्य जनकभ्रातुः सुते पुत्र्यौ माण्डवी-श्रुतकीर्त्यौ नाम यथाक्रममुपयेमाते इति वचनव्यत्ययेनान्वयः ॥ ५ ॥

बाल्ययौवनयोर्मध्ये वर्तमाना नृपात्मजाः ।
नवयोत्कण्ठया चैव कलत्रे दुःस्थितां(तिं)ययुः ? ॥६॥

लक्ष्म—रमणीयः ।

रा—अलं कालातिपातेन, गीयताम् ।

जरसा पलितस्तातः काकपक्षधरा वयम् ।
जानुदघ्नास्तदा तेऽपि साकेतोद्यानपादपाः ॥ ७ ॥

कुशलवौ—अथाभिषेकसम्भारे रामस्य समुपस्थिते ।
भरते मातुलं द्रष्टुं मातामहपुरं गते ॥ ८ ॥

---

बाल्येति—बाल्ययौवनयोः=बाल्यं शैशवं, यौवनं तारुण्यं तयोर्द्वयोर्वयसोः, मध्ये=सन्धौ, वर्तमानाः=विद्यमानाः, नृपात्मजाः=नृपस्य आत्मजाः पुत्राः रामभरतलक्ष्मणशत्रुघ्नाः, कलत्रे=स्वस्वदारेषु, नवया=नूतनया, उत्कण्ठया=उत्कण्ठिकया रतिरूपेण मानसोद्गारेणत्यर्थः स्त्रीसान्निध्येन दुःस्थि (ताम्) तिम्=दुःखेन कष्टेन स्थितिः दुःस्थितिः मनोविकारः तां, ययुः=प्रापुः । अर्थात् कामोन्मथिता बभूवुः । "दुःस्थिताम्" इत्यपपाठः ॥ ६ ॥

एतच्छ्रुत्वा पूर्वानुभूतामवस्थां स्मरन् लक्ष्मण आह—"रमणीय" इति । "रमणीय"मिति युक्तं भाति । भावार्थस्य विवक्षितत्वात् ।

अग्रे किं भविष्यतीति उत्कण्ठिकया व्याप्तो राम तदादशां स्मरन्नाह—"अल"मिति । जरसेति । तातः=पिता, जरसा=जरया वार्द्धक्येनेति यावत्, पलितः=जराकृतं केशादौ शौक्ल्यं प्राप्तः, वयम्=वयं चत्वारोऽपि सहोदराः काकपक्षधराः=शिखण्डकधारिणो बाला एवाभूमेत्यर्थः । तेऽपि=पूर्वानुभूताः, साकेतोद्यानपादपाः=साकेतस्यायोध्याया उद्यानेषु उपवनेषु वर्तमानाः पादपा वृक्षाः, तदा=तस्मिन् काले, जानुदघ्नाः=जानुपरिमाणा आसन्, तत्कालसम्बन्धिनस्तरवोऽपि तदानीमल्पवयस्का बाला एवाभूवन्नित्यर्थः । जरसेति—"जराया जरसन्यतरस्याम्" ( ७।२।१०१ ) इति सूत्रेण पक्षे जरसादेशः । "पलितं जरसा शौक्ल्यं केशादौ" इति, "विस्रसा जरा" इति चामरः । पलितमस्यास्तीति "पलितः" ॥ ७ ॥

अथाभिषेकेति—अथ विवाहसमनन्तरं किञ्चिद्दिनानन्तरम्, रामस्य=राम-

रा—(आत्मगतम्) नियतं मध्यमाम्बा निन्द्यते। (प्रकाशम्) तमुद्देशमुल्लङ्घ्य सीतापहरणात्प्रभृति गीयताम्।

कुशलवौ—कालेन रूपसौन्दर्यं श्रुत्वा शूर्पणखामुखात्।
जहार देहं सीताया न चारित्रं दशाननः ॥ ९ ॥

लक्ष्म—( राममवलोकयति )

कुशलवौ—ततो बद्ध्वार्णवे सेतुं निहत्य युधि रावणम्।
सीतामादाय रामोऽपि साकेतं पुनरागतः ॥ १० ॥

---

नाम्ना ज्येष्ठस्य दाशरथे, अभिषेकसम्भारे = अभिषेकस्य यौवराज्यसम्बन्धिनोऽभिषवस्य सम्भारे उपकरणकलापे, समुपस्थिते = एकत्रतां नीते सति मातुलम् = मामकम्, द्रष्टुम् = सङ्गन्तुम्, भरते मातामहपुरम् = मातामहस्य मातुःपितुरश्वपतिनामकस्य पुरं नगरम्, गते=याते सति—"मातुर्माता महाद्येवम्" इत्यमरः। अर्थात्—"मातुः पितरि डामहच्" (वा० ४। २। ३६) इति वार्तिकेन मातृशब्दोत्तरं डामहचि, टिलोपे "मातामह" पदं सिध्यति ॥ ८ ॥

मध्यमाऽम्बा=कैकेयी। निन्द्यते=गर्ह्यते। तम्=कैकेयीवृत्तसम्बन्धिनम्, उद्देशम्=प्रकरणम्, उल्लङ्घ्य=वर्जयित्वा, सीतापहरणात् = रावणकृतात्सीताबलात्कारात् प्रभृति = आरभ्य, गीयताम् = गानपूर्वकं श्राव्यताम्। कालेनेति—कालेन = यदा दण्डकारण्ये रामः सीतालक्ष्मणाभ्यां सहोवास तेन समयेन शूर्पणखामुखात् = शूर्पणखाद्वारा, रूपसौन्दर्यम् = रूपस्य लावण्यम्, श्रुत्वा= आकर्ण्य, दशाननः = रावणः, सीतायाः = जानक्याः, देहम्, जहार = रामलक्ष्मणयोः परोक्ष एव (मारीचद्वारा छलयित्वा) नष्टाम्प्रति—निन्ये, परं तस्याः चारित्र्यम् = सतीत्वं, पातिव्रत्यरूपमाचरणं न जहारेत्यर्थः ॥ ९ ॥

"ततः" इति। ततः = सीतापहरणानन्तरम्, अर्णवे = समुद्रे, सेतुम् = आलिम्, बद्ध्वा = विरच्य, युधि=समरे रावणं लङ्काधिपतिम् निहत्य = घातयित्वा, रामः = अयोध्याधिपतिः, सीताम् आदाय = गृहीत्वा पुनः साकेतम् = अयोध्याम् आगतः = प्राप्तः ॥ १० ॥

रा—अहो ! सङ्क्षेपः ।

कुशलवौ—प्राप्तराज्यस्ततो रामो जनवादेन चोदितः ।
आहूय लक्ष्मणं प्राह सीता निर्वास्यतामिति ॥ ११ ॥
बाष्पपर्याकुलमुखीमनाथां शोकविक्लवाम् ।
उद्वहन्तीं च गर्भेण पुण्यां राघवसन्ततिम् ॥ १२ ॥
सीतां निर्जनसम्पाते चण्डश्वापदसङ्कुले ।
परित्यज्य महारण्ये लक्ष्मणोऽपि न्यवर्तत ॥ १३ ॥

लक्ष्म—अहो ! अयशोभागी लक्ष्मणः ।

---

सङ्क्षेपः = महीयसोऽपि वृत्तान्तस्य सङ्क्षिप्य कथनमाश्चर्यकरमित्यर्थः । "प्राप्तराज्य" इति । ततः = साकेतप्राप्त्युत्तरकालम्, प्राप्तराज्यः = प्राप्तमधिगतं राज्यं येन सः राज्यधूर्वोढा सन् रामः, जनवादेन = जनापवादेन (लोककृतनिन्दया) चोदितः = प्रेरितः सन्, लक्ष्मणम् = सौमित्रिं स्वभ्रातरम्, आहूय = आकार्य "सीता निर्वास्यताम् = वनस्थानं नीयताम्" इति = एवम् प्राह = ऊचे ॥ ११ ॥

बाष्पेति—बाष्पे रस्रैःपर्याकुलं परित आकुलं विह्वलं मुखं यस्याः सा तां क्रन्दन्तीमित्यर्थः । अनाथाम् = नास्ति नाथः शरणं यस्याः तां दीनामित्यर्थः । शोकविक्लवाम्=शोकेन शुचा विह्वलां व्याकुलीभूताम्, गर्भेण च पुण्याम्=पवित्राम् साङ्कर्यादिदोषगन्धशून्याम्, राघवसन्ततिम् = रामापत्यम्, उद्वहन्तीम् = धारयन्तीं कठोरगर्भामित्यर्थः, एवम्भूतां सीताम्, निर्जनसम्पाते = निर्जनो जनशून्यः सम्पातो यत्र अर्थात् लोकसञ्चारविरहिते, तथा—चण्डश्वापदसङ्कुले= चण्डाः क्रूराश्च ते श्वापदाः हिंस्राः सिंहव्याघ्रादयः तैः सङ्कुले = व्याप्ते सिंहव्याघ्रादिहिंस्रजन्तुसङ्घपरिप्लुते इत्यर्थः । एतादृशे महारण्ये = अरण्यान्याम् (महति भयावहे जङ्गल इति यावत्) परित्यज्य = विहाय, लक्ष्मणः= (अत्यन्तं भ्रातृजाया भक्तोऽपि) सौमित्रिः न्यवर्तत = स्वगृहमग्र त्यावर्तितेति युग्मयोरन्वयः ॥ १२ ॥ १३

अयशोभागी = अपकीर्तिपात्रम् । अत्र = सीतानिर्वासनविषये । अन·

रा—कृतवाग्रापराधः, रामपराक्रमाः सर्वेऽपि गृह्यन्ते । ततः ।

कुशलवौ—एतावती गीतिः ।

रा—( सोद्वेगम् ) सौमित्रे ! कष्टमापतितम्—

उभौ—ततः प्रायैः परित्यक्ता निराशा जनकात्मजा ।
अप्रियाख्यानभीतेन कविना संहृता कथा ॥ १४ ॥

कुशः—(अपवार्य) महाभागावेतौ सीतासङ्कथायामत्यन्तविषादिनौ तस्मादनुयोक्ष्ये । ( लक्ष्मणमुद्दिश्य ) अपि भवन्तौ रामायणकथानायकौ रामलक्ष्मणौ ?

लक्ष्म—कौ ( तौ ) क्लेशभागिनौ ।

कुश—किं नीता त्वया सीता ?

लक्ष्म—( सलज्जम् ) मया मन्दभाग्येन ।

कुश—किं सीता रामस्य धर्मपत्नी ?

लक्ष्म—अथ किम् ।

कुश—अथ सीतायास्तद्गर्भस्य वा विदितः कश्चिद्वृत्तान्तः ?

---

राभ. = दाप. । रामपराक्रमाः = रामस्य पराक्रमाः = पराण्यवस्कन्दनानि यत्नात्कृत्यानीत्यर्थः । गृह्यन्ते = ग्रथ्यन्ते गीयन्तेऽस्मिन् महाकाव्ये महाकविने त्याशयः । अथवा—गृह्यन्ते = ज्ञानविषयीक्रियन्ते । एतावती = इयत्प्रमाणा-न्तेत्यर्थः । रामो लक्ष्मणं सम्बोधयति—"सौमित्रे !" इति । कष्टमापति-तम् = दुःखमापतितम् । इतोऽग्रे सन्दर्भविच्छेददर्शनात्सीता कथाशेषतां यातेदा भातीति कष्टमुक्तम् । ततः = तदनन्तरम्, निराशा = जीवनाशाशून्या जनका-त्मजा = जानकी, प्रायैः = जीवनार्थ रघूतेरसुभिः परित्यक्ता = मृतेत्यर्थः । ( एवम् ) अप्रियाख्यानभीतेन = न प्रियमप्रियमनिष्टमित्यर्थः तस्याख्यानं कथनं तेन भीतेन = त्रस्तेन, कविना = रामायणप्रणेत्रा महाकविना, कथा = रामा-यणी गाथा, उपसंहृता = अवसानं नीता ॥ १४ ।

महाभागौ = महाशयौ । अत्यन्तविषादिनौ = अतिमात्रं क्लेशभाजौ । अनु-योक्ष्ये = प्रक्ष्यामि । रामायणकथेति—रामायणस्य कथा रामायणकथा तस्याः नायकौ नेतारौ यथायोग्यं रामायणकथायामर्त्यैति भावः । किं निग

लक्ष्म—विदितो युष्मत्कीर्तेन ।

रा—किमितः पुनः कथयामावेदयति ? ( विचिन्त्य ) एवं तावदनुयोक्ष्ये । आर्यौ ! किमेव युवयोरागमावधिः, ?

कुश—न वयं जानीमः ।

रा—कण्वोऽनुयोक्तव्यः । सौमित्रे ! कण्वमाहूय ।

लक्ष्म—( निष्क्रम्य कण्वेन सह पुनः प्रविष्टः )

कण्व—( विलोक्य )

स एष रामो नयनाभिरामः
सीतासुताभ्यां समुपास्यमानः ।

---

दव्याख्यातम् । "विदित" इति । युष्मत्कीर्तेन = युवयोर्गीत्या सीतायाः तद्गर्भस्य च वृत्तान्तो विदितः अर्थाद्वनवासविपदि सगर्भैव सीता कथाशेषतागतेति वृत्तं ज्ञातमेव ।

एतेन—अमे विरमानाऽपि रामायणी कथा सीतावसानान्तैव कुशलवाभ्यामधीतेत्ययमेव पक्षो गरीयानाभाति ।

युवयोः=द्वयोः ( कुशलवयोः ) आगमावधिः=आगमस्य अध्ययनसम्प्रदायस्य अवधिः = सीमा, आहोस्वित् = अथवा । सन्दर्भावधिः = सन्दर्भस्य ग्रन्थस्य सीमा । किमतः परं कविना काव्यमेव न प्रणायीति भावः । आगमावधौ सन्दर्भशेषे सीताजीवनसम्भावना, सन्दर्भावधिपक्षे तु कथावस्तुभूतायाः सीताया अपि समाप्तिरेवेति रामहृदयम् । कुश उत्तरयति—"न वयमिति"।

"स एष" इति । स एषः = पूर्वमनेकवारं दृष्टः सम्प्रति पुरोवर्त्ती, सीतासुताभ्याम् = कुशलवाभ्यां समुपास्यमानः=सम्यगुपसेव्यमानः सन्निधिं नीयमान इत्यर्थः, यदृच्छया = अकाण्डत एव पार्श्वस्थिताभ्याम् = पार्श्वे समीपे स्थिताभ्यां स्थितिं कुर्वाणाभ्याम् , तिष्यपुनर्वसुभ्याम् = तन्नामकनक्षत्राभ्यां ( समुपास्यमानः ) शीतरश्मिः = चन्द्र इव, नयनाभिरामः = नयनोर्नेत्रयोः अभिरामः आसेचनकः अत्यन्तं प्रियः "वर्तते" इति शेषः ।

यदृच्छया तिष्यपुनर्वसुभ्यां
पार्श्वस्थिताभ्यामिव शीतरश्मिः ॥ १५ ॥

लक्ष्म—कण्वोऽयमार्य ! सम्प्राप्तः ।

रा—( प्रणम्य ) इदमासनमास्यताम् ।

कण्व—( उपविश्य ) यदि रामायणश्रवणकौतुकं कथ्यताम्, कुत्रावधिरभिहितः कुशलवाभ्यामिति ।

लक्ष्म—"सीता निर्जनसम्पाते" ( इति पठित्वा )
एष कुशलवयोर्गीतसीमा ।

कण्व—श्रूयतां ततः परम् ।

रा—का गतिः ?

कुशलवौ—रामदाराणां भद्रं गायति ।

कण्व—ततः श्रुत्वा स शिष्येभ्यो वाल्मीकिर्मुनिसत्तमः ।
स्वयं सीतां समाश्वास्य निनाय स्वं तपोधनम् ॥१६॥

---

इदमालोच्यम्—कथं "तिष्यपुनर्वसुभ्याम्" इति पदं कविना प्रयुक्तम् ? यावता पुनर्वसू द्वे नक्षत्रे इति । नच—द्वयोः पुनर्वस्वोरेकीभावमाश्रित्य तयोर्द्विर्नास्माधीयसीति गदनीयम् "छन्दसि पुनर्वस्वोरेकवचनम्" (१।२।६१) इति पाणिनिना छन्दस्येव द्वयोरेकवचनमिवैकल्पिकस्यानुशासनात् । "लोके तु द्विवचनमेव" इति स्पष्टं दीक्षितैरपि व्याख्यातत्वाच्च । तस्माद्व्याकरणलक्षणहीनतया च्युतसंस्कृतिदोषः । यदि तिष्यस्थानी लक्ष्मणः, पुनर्वसू कुशलवावित्युच्येत तदापि एकीभावस्याऽसम्भवाद् द्विवचनानुशासितेव । अमी पठितरूपाः प्रमाणम् । उपमालङ्कारः । वृत्तमुपजातिः ॥ १५ ॥

रामायणश्रवणकौतुकम् = रामायणकथायाः आकर्णनस्य कुतूहलम् । कुत्र = कस्मिन् प्रकरणे, अवधिः = सीमा अभिहितः = कथितः कियत्पर्यन्तं कुशलवाभ्यां कथितमित्यर्थः । का गतिरिति—अवश्यं भवताऽहं श्रोतव्यामित्यर्थः । भद्रं गायति = कल्याणं गायति कण्व इति शेषः ।

"ततः" इति । ततः = लक्ष्मणेन वने सीतात्यागः कृतः तदनन्तरम्, शिष्येभ्यः = स्नानसन्ध्यादिकं कृत्वा सायमभ्यति निवृत्तेभ्यः अधीयानेभ्य-

रा—अनुगृहीतं भगवता रघुकुलम्, अभ्युद्धृतोऽस्मि भगवता ।

कुशलवौ—दिष्ट्या कुशलिनो रामदाराः ( सर्वे हर्षं नाटयन्ति )

कुश—अपि ( रे ! ) वत्स ! लव ! कासौ वाल्मीकितपोवने सीता नाम ?

लव—न काचित्, केवलं गीतिनिबन्धनान्येतानि सीता सीतेत्यक्षराणि ।

रा—ततस्ततः ।

कण्व—परिपूर्णे ततः काले द्यौरिवेन्दुदिवाकरौ ।
सीतापि जनयामास सा यमौ तनयावुभौ ॥

लक्ष्म—जयत्वार्यः, दिष्ट्या वर्धतां राघवकुलम् ।

कुशलवौ—जयतु महाराजः पुत्रजन्मना ।

रा—( स्वगतम् ) अपि नाम कुशलवौ स्याताम् ।

---

शिष्यः, श्रुत्वा = समाकर्ण्य, सः—प्रसिद्धः, वाल्मीकिर्नाम, उत्तमः = सर्वमुनिषु श्रेष्ठः मुनिः = महामुनिरित्यर्थः, सीतां समाश्वास्य = धीरयित्वा, स्वयम् = स्वयमेव, स्वम् = स्वकीयम्, तपोवनम् = आश्रमम्, निनाय = प्रापयामास ।

अनुगृहीतम् = अनुकम्पितम्, भगवता = दयानिधिना मुनिना, रघुकुलम् = रघुवंशः सगर्भायाः सीतायाः परित्राणादिति भावः । अतएव—अभ्युद्धृतोऽस्मि = विपदः सकाशादुद्धारं गमितोऽस्मीति । कुशलिनः = मङ्गलभाजः, रामदाराः सीतेत्यर्थः । न काचिदिति—एतेन कुशलवौ तदापि स्वमातृनामाभिज्ञानशून्याविति विज्ञेयम् । गीतिनिबन्धनानि = गीताश्रितान्येव, परमार्थतः तद्वाच्यभूता काचित्सीता नास्त्येवेति लवाशयः ।

"परिपूर्णे" इति । ततः = काले = गर्भसमये परिपूर्णे = पूर्तिं प्राप्ते अर्थात् दशमाख्ये समये समतिक्रान्ते सति, सा सीता उभौ यमौ = यमलौ, तनयौ = पुत्रौ, द्यौः = द्युलोकः इन्दुदिवाकराविव = इन्दुश्च दिवाकरश्च इन्दुदिवाकरौ सूर्याचन्द्रमसाविवेत्यर्थः जनयामास = प्रसूतवती । सूर्योपमः कुशः, इन्दुसमो लवश्चेति विभावनीयम् । उपमा ॥ १७ ॥

अपि नामेति सम्भावनायाम् ।

जातापत्योचितमिति—जातापत्यायां जन्मकाले यदुचितं जातकर्म

कण्व--ज्ञातावस्थोचितं कर्म विदधानो यथाक्रमम् ।
स चकार तयोर्नाम मुनिः कुशलवाविति ॥१८॥

रा--कथमेतावेव सीतातनयौ ? हा ! पुत्र ! कुश ! हा ! पुत्र ! लव !

लक्ष्म--इयं सा देवीसंभवा आर्यस्यात्मसङ्क्रान्तिः ।

कुशलवौ--कथमयं सः हा ! तात ! त्रायस्व । ( सर्वे परस्परमालिङ्ग्य मोहं गच्छन्ति )

कण्व--( सविषादम् ) किमेतत् कष्टमापतितम् ।
मया तु मन्दभाग्येन भद्रं तु किल गायता ।
रघुवीराश्चत्वारो हितेनैकेन पातिताः ॥ १९ ॥

( निर्वर्ण्य ) दिष्ट्या श्वासोद्गम इव । अहमेतं वृत्तान्तं भगवते देव्यै च निवेदयामि । ( इति निष्क्रान्तः )

( ततः प्रविशति वाल्मीकिः, ससम्भ्रमं सीता च )

वाल्मी--वत्से ! त्वरस्व, मा परिलम्बिष्ठाः अप्रतिक्रियमाणा मूर्छा निष्क्रान्तिमापद्यते ।

---

संस्कारादि तत् कर्म यथाक्रमम् = क्रमपूर्वकम् विदधानः = कुर्वाणः सः मुनिः = वाल्मीकिः तयोः = द्वयोः सीतातनययोः कुशलवाविति प्रसिद्धं नाम चकार = व्यधात् । अर्थात् ज्येष्ठस्य "कुश" इति नाम कनिष्ठस्य "लव" इति नामाकरोत् ॥

देवीसम्भवा = देवी सीता सम्भवः उत्पत्तिस्थानं यस्याः सा, अथवा—देव्याः सम्भवः उत्पत्तिर्यस्याः सा । आर्यस्य = राज्ञः, आत्मसङ्क्रान्तिः = आत्मनः स्वस्वरूपस्य सङ्क्रान्तिः सङ्क्रमः प्रतिबिम्बनमिति यावत् । "आत्मा वै जायते पुत्र" इति श्रुतेः । मोहम् = मूर्च्छाम् ।

मयाऽत्वति—मन्दभाग्येन = मन्दं भाग्यं यस्य तेन अल्पपुण्यवता, भद्रन्तु = कल्याणं हितमिष्टमपि गायता = गानं कुर्वता, हितेन = हितेनापि सता एकेनैव चत्वारो रघुवीराः = वीर्यवन्तो राघवाः रामलक्ष्मणौ कुशलवौ चैतच्चर्यः, विनिपातिताः = पृथिवीतले मूर्च्छया शायिताः ॥ १९ ॥

श्वासोद्गम इव = श्वाससञ्चार इव लक्ष्यत इत्यर्थः । भगवते = वाल्मीकये । देव्यै = सीतायै । त्वरस्व = त्वरां कुरु । मा परिलम्बिष्ठाः = विलम्बं मा विधेहि । माङ्योगेऽड्भावो निषेधः ।

सीता—(१) कहेहि कहेहि परमत्थं, अवि धरन्ति राहवा ?

वाल्मी—समाश्वसिहि, ध्रियन्ते राघवाः। किमेतान्न पश्यसि भवत्युच्छ्वसितान् ?

सीता—(२) दिढं पच्चाइदह्मि तादेण ।

वाल्मी—( अन्वेषणमभिनीय ) ,

मैथिलि ! प्रहिणु लोचने ततः ( पुनः )
साधु धैर्यमवलम्ब्य यत्नतः ( वर्तते )
त्वत्कथाप्रलयमातरिश्वना
साधु (पश्य) राघवकुलं निपातितम् ॥ २० ॥

सीता—( सजलम् ) भअवं अणणुण्णादंसणा अहं अज्जउत्तेण।

वाल्मी—( सावष्टम्भम् ) मयि स्थिते को वा अभ्यनुज्ञायाः प्रतिषेधस्य वा। गच्छ, अभ्यनुज्ञातासि वाल्मीकिना मयैतद्दर्शने, उपसर्प निःशङ्कमुपयन्तारम्।

---

(१) कथय कथय परमार्थम्, अपि ध्रियन्ते राघवाः ?

(२) दृढं प्रत्यायितास्मि तातेन ।

(३) भगवन्! अननुज्ञातदर्शनाहमार्यपुत्रेण ।

---

परमार्थम् = वस्तुतत्त्वम् । "अपि" प्रश्ने । ध्रियन्ते=जीवन्ति । उच्छ्वसितान् = श्वासान् । प्राणानां गतागताभ्यां जीवनमनुमीयत इति भावः । प्रत्यायितास्मि = राघवानां जीवनविषये विश्वासमापादितास्मि ।

"मैथिलि" इति । मैथिलि ! = हे ! जानकि ! यत्नतः = प्रयत्नेन धैर्यम् = धीरताम्, अवलम्ब्य = आश्रित्य, ततः लोचने = नयने साधु यथा तथा प्रहिणु = सञ्चारय । त्वत्कथेति—त्वत्कथा = त्वदीयो वृत्तान्त एव मातरिश्वा पवनः तेन, राघवकुलम् = चत्वारोऽपि राघवाः, साधु = अत्यन्तम्, निपातितम् = भूम्यां शायितम् । "पश्य" इतिपाठे वाक्यार्थस्य कर्मता ॥२०॥

अननुज्ञातेति—न अनुज्ञातमाज्ञप्तं दर्शनं यस्याः सा तादृशी आर्यपुत्रेण निषिद्धदर्शनास्मीत्यर्थः । सावष्टम्भम् = साभिमानम् । अभ्यनुज्ञायाः

सीता—(३) (विलोक्य) किं एव्वं वट्टदि, सव्वहा हदम्हि मन्दभाआ। ( पतित्वा रोदिति )

वाल्मी—उत्तिष्ठ, समाश्वासय, अहमपि रामलक्ष्मणावभ्युपपत्स्ये। वत्स ! राम ! वत्स ! लक्ष्मण ! समाश्वसिहि।

सीता—(४) जाद कुस ! जाद लव ! समस्सस समस्सस।

( एवं सलिलसेकं नाटयति )

राम—( प्रत्यागम्य ) आर्य ! कण्व ! अपि ध्रियते वैदेही ?

वाल्मी—पुरत एव वर्तते।

रा—( विलोक्य ) कथं भगवान् सम्प्राप्तः। ( लज्जां नाटयति )

वाल्मी—अलं लज्जया, कलत्रविषया खल्वनुकम्पा।

लक्ष्म—( आश्वस्य ) अपि प्रत्यागतसञ्ज्ञ आर्यः स्यात्।

रा—प्रत्यागतोऽस्मि मन्दभाग्यः।

---

(३) किमेवं वर्तते, सर्वथा हतास्मि मन्दभाग्या।

(४) जात कुश ! जात लव ! समाश्वसिहि समाश्वसिहि।

---

प्रतिपक्षस्य वा स्वामीति शेषः। ब्राह्मणत्वात् तपस्वित्वान्महामुनित्वाच्च राजतोऽपि ममाज्ञाया एव प्राधान्यमिति भावः। नि शङ्कम् = शङ्काशून्यं यथा तथेति क्रियाविशेषणम्। उपयन्तारम् = पाणिग्रहीतारम्। किमवमिति—किम्वत्वारो ऽपि राघवा निश्चेष्टा भूतले पतिताः सन्ति ? ( यद्येवमेव तदा ) मन्दभाग्या= दुरदृष्टाऽहं हतास्मि = मृतास्मि सर्वस्वनाशादिति भावः। अभ्युपपत्स्ये = रामलक्ष्मणयो र्मूर्च्छामपनेतुं प्राप्तो भविष्यामि। अपीति प्रश्ने। ध्रियते = जीवति। वैदेही = सीता। पुरतः = तवाग्रतः। अलमिति—लज्जा न कार्येत्यर्थः। किन्तु—कलत्रविषया = स्त्रीविषया, अनुकम्पा = दया कर्त्तव्येति शेषः।

प्रत्यागतसञ्ज्ञः = प्रत्यागता पुनः प्राप्ता सञ्ज्ञा चैतन्यं यस्य सः प्रत्यागतचेतन इत्यर्थः। प्रत्यागतोऽस्मि = लब्धसञ्ज्ञोऽस्मि।

कुशलवौ—( समाश्वस्य ) हा, तात ! परित्रायस्व । ( इति पादयोः पतित्वा रुदतः )

रामलक्ष्मणौ—( परिष्वज्य समाश्वासयतः ) वत्सौ ! अलमावेगेन ।

वाल्मीकिः—हा ! तातदर्शनदुर्ललितौ ! कस्य क रुद्यते, प्रमृज्यतामश्रु ।

कुशलवौ—( बाष्पं प्रमृज्य राममवलोकयन्तौ स्थितौ )

सीता—(१) ( अपवार्य ) को एसो, जो सुदेहिं एव्वं पेक्खिदो ?

राम—अहो ! औदासीन्यं वैदेह्याः, यदियं ( यं ) चिरकालोपनतमस्मत्सन्निधानं मुखविकासेनापि न सम्भावयति ।

वाल्मीकिः—( सकोपम् ) हे राजन् ! धृतसौहार्द ! महाकुलीन ! समीक्ष्यकारिन् ! किं युक्तं तव प्रतिपादितां जनकेन, गृहीतां दशरथेन, कृत

(१) क एषः, यो सुताभ्यामेवं प्रेक्षितः ?

तातदर्शनेति—तातस्य स्वपितुःरामस्य दर्शनेन दुर्ललितौ दुःसम्प्राप्तौ । "अयमेवावयोर्जनको यद्दुलालनसुखमावाभ्यां नोपलब्धं, यत् सम्प्रति लब्धं तदप्राप्तयैवेति स्मारं स्मारं कठोरतरां दशां प्राप्ताविराशयः । कस्य केति—कस्य कृते क = कुत्र रुद्यते = विलप्यते भवद्भ्यामिति । येन निर्दयेन गर्भावस्थायामेव परित्यक्तौ तत्कृते व्यर्थमेव रोदनमिति भावः । क एष इति । सुताभ्यामेष कः प्रेक्षितः । अर्थादयं भवता न कोऽपि बन्धुरस्तीति खिन्नमनस्कायाः सीताया उक्तिरियम् । औदासीन्यम् = विमनस्कता । चिरकालोपनतमिति—चिरकालेन दीर्घसमयेन उपनतम् = प्राप्तम्, अस्मत्सन्निधानम् = ममैव रामस्य समीपतामित्यर्थः । मुखविकासेन = मुखस्य आननस्य विकासेन प्रसादेनापि, न सम्भावयति = नैव मानयतीत्यर्थः ।

धृतसौहार्द ! = धृतं धारितं मनस्येव कृतं सौहार्दं सुहृद्भावो येन तत्सम्बुद्धौ । महाकुलीन ! = महच्च तत्कुलं महाकुलम्, तत्र भवस्तत्सम्बोधनम् । महाकुलशब्दात्—"महाकुलादञ्खञौ" ( ४ । १ । १४१ ) इत्यत्र अन्यतरस्यामित्यस्यानुवृत्तौ परे खः । खञि तु वृद्धौ सत्यां "माहाकुलीन" इति भवति । "महाकुलकुलीनार्यसभ्यसज्जनसाधवः" इत्यमरः । समीक्ष्यकारिन् !

मङ्गलमहन्धत्या, विशुद्धचारित्रां वाल्मीकिना, भावितशुद्धिं विभावसुना, मातरं कुशलवयोः, दुहितरं भगवत्या विश्वम्भरायाः, देवीं सीतां जनापवादमात्रश्रवणेन निराकर्तुम् ?

**राम**—( वैक्लव्यं नाटयति. )

**वाल्मी**—सौमित्रे ! युक्तमिदम् ? अथ वा कस्तवोपालम्भः, नियोज्यस्त्वं कनीयान् । ( राममुद्दिश्य ) अथ दशग्रीववीरवध्यावसाने सीताप्रतिग्रहं प्रति कः प्रमाणीकृतो देवः प्रमाणेन ?

**राम**—भगवान् वैश्वानरः ।

**वाल्मी**—भोः ! प्रत्ययनिवृत्तेः किं कारणम् ?

---

= विरुद्धलक्षणया "असमीक्ष्यकारिन्" इत्यर्थः । विभावसुना = वह्निना । विश्वम्भरायाः = पृथिव्याः । जनापवादमात्रश्रवणेन = केवलमविचारितलोककृतेनापवादेन । शिष्टं स्पष्टम् । वैक्लव्यम् = उत्तरास्फूर्तिरूपां व्याकुलताम्, मुनिवचनस्तब्धत्वात् । नियोज्यः = आज्ञावशः परतन्त्र इति यावत् ।

दशग्रीवेति —दशग्रीवस्य रावणस्य ये वीराः अथवा—दशग्रीवश्चासौ वीरः, तेषां तस्य वा ( वध्यायाः ) वधस्य अवसाने अन्ते सदा ससैन्यो रावणो मृतस्तदनन्तरमित्यर्थः । "वध्यावसाने" इति पाठो युक्तो भाति । सीताप्रतिग्रहम्प्रति = सीताया अङ्गीकरणम्प्रति । प्रमाणीकृतः = "परपुरुषगृहवासो सत्यपि 'सीता शुद्धाऽशुद्धा वे'त्यत्र निर्णये" साक्षिभावेन स्वीकृतः । प्रमाणेन = प्रमाणभूतेन आर्येण भवतेत्यर्थः । वैश्वानरः = हुताशनः ।

उक्तञ्च रामायणे—

चितां मे कुरु सौमित्रे ! व्यसनस्यास्य भेषजम् ।
मिथ्यापवादोपहता, नाहं जीवितुमुत्सहे ॥
एवमुक्ता तु वैदेही परिक्रम्य हुताशनम् ।
विवेश ज्वलनं दीप्तं निःशङ्केनान्तरात्मना ॥ इति ।

प्रत्ययनिवृत्तेः = विश्वासविनाशस्य । अधिक्षिप्यते = तिरस्क्रियते ।

सीता—हद्धि हद्धि मम अधण्णाए किदे एव्वं अदिक्खिप्पदि अज्जउत्तो।

( कर्णौ पिदधाति )

वाल्मी—कुशलवजननीविशुद्धिसाक्ष्ये
पवनसखा यदि देवता नियुक्ता।
कथमिव भवतो निरङ्कुशोऽयं
हृदि निहितो नु पृथग्जनापवादः॥ २१॥

राम—आयुज्यमानमिव।

वाल्मी—कथं चीरहस्तेन मामतिवाहयसि।

(२) हा धिक् हा धिक् ममाधन्यायाः कृते एवमधिक्षिप्यते आर्यपुत्रः।

कुशलवजननीति—कुशलवयोर्जननी माता सीता तस्या विशुद्धिः विशेषेण शुद्धिः = कायेन वाचा मनसा च परपुरुषचिन्तनादिराहित्येन परः सतीस्वभावः, तस्या, साक्ष्ये = साक्षिभावे, यदि ( नाम ) पवनसखा = पवनः समीरणः सखा सहायो यस्य सः पवनसखा = अनलः, देवता = देवः नियुक्ता = प्रमाणत्वेन स्वीकृतः ( तर्हि ) अयं निरङ्कुशः = निरवच्छिन्नोऽप्रतिहतप्रसरः, पृथग्जनापवादः = पृथग्जनानां प्राकृतानां ( अप्रामाणिकानां ) जनानामपवादः जानकीनिन्दापरो वादः, कथमिव = केन हेतुना, भवतः = तव हृदि = अन्तःकरणे, नु = निश्चयेन निहितः = संलग्नः। अग्निशुद्धायां प्रामाणिकैः प्रमाणीकृतायां तवैवंविधोऽनादरो निष्प्रमाणक एवेति भावः। एतेन दिव्यपरीक्षायामविश्वासी भवानेव सापराध इति वस्तु व्यज्यते। पुष्पिताग्राभिधावृत्तम् ॥ २१॥

आयुज्यमानमिवेति। "आ" ईषदर्थे। किञ्चिन्मुनिं स्पृश्यमानमिव यथा स्यात्तथाऽभूदिति शेषः। धर्मधरोऽहं सर्वसमक्षे मुनिनाऽपि सता भवतैवं न वाच्य इत्याशयो रामस्य। चीरहस्तेन = वल्कलहस्तेन, माम् = मुनिमपि, अतिवाहयति = पराकरोति। अहो प्रभुताया अभिमान इति भावः।

अनुकृतिसरले पृथग्जनानां
निवसति चेतसि संश्रितोऽनुरागः ।
नरपतिहृदये न जातमाल्यं (?)
न हि पुलिनेषु तिलस्य सम्भवोऽस्ति ॥ २२ ॥

वत्स ! किमनेन कण्डूयनेन, गृहाण कुशलवौ, गच्छामः स्वमाश्रमपदम् ( इति परिक्रामति ) ।

रामलक्ष्मणौ—प्रसीदतु गच्छतु भगवान् ।

वाल्मीकिः—( प्रतिनिवृत्य ) वैदेहि !
तपोवनगतानामपि दण्डं समाज्ञापयति, तत्परिक्षोभ्यतामात्मा । /

---

अनुकृतीति—पृथग्जनानाम् = प्रकृतपुरुषाणाम्, (साधारणमहिम्नाम्) अनुकृतिसरले = अनुकृत्या अनुकारेण सरले अर्थात् प्राकृतव्यवहारे कौटिल्यरहिते चेतसि = अन्तःकरणे, संश्रितः = सम्यक्स्थितः, अनुरागः = प्रीतिः, निवसति = नितरां वासं धत्ते न कामनापि विकृतिं प्राप्नोतीत्यर्थः । नरपतिहृदये = राज्ञो मनसि (तु) जातमाल्यम् = मलस्य भावो माल्यम्, जातं माल्यं मलभावः क्रिया यस्य तद् यथा तथा संश्रितः = स्थितोऽनुरागः न निवसति, अपितु मलभावं प्राप्तः सन्नेव निवसतीति काकु । राज्ञो हृद्यनुरागो नैकरसस्तिष्ठतीति भाव । एतदेवाह—नहीति । हीति योऽयमर्थो यत्—( सद्यो नि हतेषु ) सिकतातटेषु, तिलस्य = तैलस्य सम्भवः = उत्पत्तिः, न, अस्ति = नैव विद्यते । यथा सिकतायां तैलस्याऽसम्भवः तथा राजमनसि एकरूपेणाऽनुरागस्थितेरप्यसम्भव एवेति भावः ।

अत्र—"गोभिः श्रीणीत मत्सरम्" इतिवदौपचारिकः तैलरूपे कार्ये कारणशब्दप्रयोगः ।

कण्डूयनेन = गात्रविघर्षणेन । लज्जाकुलस्य निरुत्तरस्य गात्रविघर्षणं स्वभावः । वृथासमययापनस्य किं फलम्, कुशलवौ ते पुत्रौ, तौ गृहाण, वयं यामः । पुत्रयोर्मध्ये सीतामहणमर्थसिद्धमिति मन्यते मुनिः । "गच्छतु भगवान्" इत्यु श्रीरामस्य गर्वं व्यनक्ति । "दण्डं समाज्ञापयति" इति । एवंमुनाऽपेक्षा दण्ड एव प्रकारान्तरेण, अथवा इतोऽप्याधिकं स्यात्स्याज्यावलेपादिति ।

**सीता**—(१) अहं किं परिबोधेमि ।

**वाल्मीकिः**—अपापा भवसि ।

**सीता**—( सलज्जम् ) जणमज्झगदा एव्वं भणामि-मन्दभाइणी विदेहराअतणआ अहिण्णचारित्तेत्ति ।

**वाल्मीकिः**—समुद्घुष्यतां विकारानुरूपः प्रतिकार इति ।

**सीता**—पहवदि गुरुणिओओ । ( अञ्जलिं बध्वा दिशो विलोक्य ) सुणन्तु भवन्तो लोअपाला गअणमज्झचारिणो देवदाओ गन्धव्वसिद्धविज्जाधरा जे अ प्पहावपच्चक्खीकिदसव्वलोअरहस्या तुम्मीइविरसामित्तवसि-

---

(१) अहं किं परि....धयामि ।

(२) जनमध्यगता एवं भणामि मन्दभागिनी विदेहराजतनया अभिन्नचारित्रेति ।

( ३ ) ( प्रभवति गुरुनियोगः । (-) शृण्वन्तु भवन्तो लोकपाला गगनमध्यचारिणो देवता गन्धर्वसिद्धविद्याधरा ये च प्रभावप्रत्यक्षीकृतसर्वलोकर-

---

हृदि निधाय मुनिराह—"तत्परिशोध्यताम्" इति । "किं" परिशोधयामि-पुरा शोधित एव मयात्मा तत्राप्यनास्थैवार्यपुत्रस्य सम्प्रति शोधितेऽपि किं फलिष्यतीत्याशयः सीतायाः । मुनिस्तत्फलं निर्दिशति — 'अपापा भवसि" इति । एवमवस्थायां भीनायां त्वयि सर्वो लोक पापं सम्भावयेत्, तस्माच्छोधनमेवात्मनो गरीय इति भावः ।

विदेहराजतनया = जनकपुत्री । जनकस्य महाकुलीनस्य सदाचारवतः पुत्र्याः नैसर्गिक्येव शुद्धिरिति, तत्र संशयश्चिच्छ्रीकरोति सीताम् । अभिन्नचारित्रा = न भिन्नं चारित्रं यस्याः सा अखण्डितपातिव्रत्येत्यर्थः । पतिसन्निधौ तद्विरहे च सदैव शुद्धास्मीति हार्दं सीतायाः । समुद्घुष्यताम् = सम्यगुच्चैरुच्चार्यतामित्यर्थः । विकारानुरूपः = रामहृद्युपस्थितलोकापवादरूपो यो विकारः तद्योग्यः यक्षानुरूपो बलिरिति न्यायादिति भावः । प्रतिकारः = शपथरूप उपाय इत्यर्थः ।

प्रभवति=समर्थोभवति, गुरुनियोगः = गुरोराज्ञा । लोकपालाः = अष्टौ लोकपाला इन्द्राद्याः । गगनमध्यचारिणः = अन्तरिक्षचराः । देवताः = देवरूपाः । गन्धर्वेति—देवयोनिविशेषाः । प्रभावेति—प्रभावेण = आज्ञानासे-

छुप्पमुद्दा महेसिणो एसो सअललोअसुहासुहकम्मसक्खी भअवं राहव-उलपिदामहो सहस्सरस्सि अ सीदा चारित्तसुद्धिं अन्तरेण एव्वं सच्चावयदि।

व.स्मीं—परयन्तु भवन्तः महाप्रभावाकृष्टमपि ? सीतामाहात्म्यसं-भृतमाश्चर्यम्

सर्वे—( सविस्मयम् ) आश्चर्यमाश्चर्यम् ! एष हि देवीवचनस्य समन-न्तर दत्तावधान इव निःशब्दप्रशान्तो निवृत्तसर्वारम्भः कृत्स्न एव स्थावर-जङ्गमो लोकः संप्रवृत्तः। तथा हि—

---

हस्या वाल्मीकिविश्वामित्रवसिष्ठप्रमुखा महर्षय एष सकललोकशुभाशुभकर्म-साक्षी भगवान् राघवकुलपितामहः सहस्ररश्मिश्च सीता चारित्रशुद्धिमन्तरेण एव सत्यापयति )

---

येन ऐश्वर्येण भ वेन प्रत्यक्षीकृतानि = ( करामलकवत् )साक्षात्कृतानि लोकानां भुवनवर्तिनां चराचराणा रहस्यानि वृत्तविशेषा यैस्ते । एष = गवानमध्यचारी सर्वप्रत्यक्षः इत्यर्थः । सकलेति —सकलानां विश्वेषां लोकाना लोकवर्तिनां प्राणिनां यानि शुभाशुभानि सिताऽसितानि पुण्यपापरूपाणि कर्माणि तेषा साक्षी = साक्षाद्द्रष्टा भगवान् = भगवन्मूर्तिः, राघवकुलपितामहः = रघुकुल-प्रवर्तकः, सहस्ररश्मिः = सूर्यः । चारित्रेति —चारित्रशुद्धिं विनेत्यर्थः ।....

एवम् = वक्ष्यमाणरीत्या, सत्यापयति = सत्येन शपथीकरोतीत्यर्थः । महाप्रभावेति—आकृष्टमाकर्षणं भावे क्तः, महाप्रभावाणां महैश्वर्याणा मपि देवादीनामाकृष्टं यस्मात् तत्, सीतेति—सीताया माहात्म्येन सतीत्वेन सम्भृतं परिपूर्णम्, आश्चर्यम् = अद्भुतम् । दत्तावधानः = दत्तमवधानं श्रव-णार्थं चित्तकाग्र्यं येन सः । निःशब्दप्रशान्तः = निःशब्दः अवाक्, प्रशान्तः स्तिमितश्च । निवृत्तसर्वारम्भः = निवृत्तः शान्तः सर्वारम्भः सर्वाणि कार्याणि अन्यदर्शनश्रवणादीनि यस्य सः, आरम्भः=कार्यम् । कृत्स्न =सर्वः । स्था-वरजङ्गमः=चराचरात्मकः, सम्प्रवृत्तः = भूतः ।

उदन्वन्तः शान्ताः स्तिमिततरकल्लोलवलया
निरारम्भो व्योम्नि प्रकृतिचपलोऽप्येष पवनः ।
प्रवृत्ता एतस्मिन्निभृततरकर्णा गजघटा
जगत् कृत्स्नं जातं जनकतनयोक्ताववहितम् ॥२३॥

सीता—(१) जदि मए सअललोअमहत्थप्पच्चआपूरिदगुरुसासणं उम्मु-

(१) यदि मया सकललोकमहार्थप्रत्ययापूरितगुरुशासनम् उन्मूलि-

उक्तं वर्णयति—"उदन्वन्त" इति । उदन्वन्तः = समुद्राः, शान्ताः = परित्यक्तजलोच्छलनाः, हेतुगर्भं विशेषणमाह—कीदृशाः उदन्वन्तः—स्तिमिततराः अतिशयेन स्तब्धतां गताः कल्लोलानां महतां तरङ्गाणां वलयाः जाताः ( समूहाः ) येषां ते । प्रकृतिचपलः = प्रकृत्या निसर्गेण चपलः चञ्चलः सदागतित्वात्, अपि = एवम्भूतोऽपि पवनः = समीरणः, व्योम्नि=गगने, निरारम्भः=निर्गत आरम्भः स्यन्दनात्मिका क्रिया यस्मात् स तथाजातः पवनोपि निस्पन्दो जात इत्यर्थः । एतस्मिन् = देव्याः सत्यापनसमये ( एषा ) गजघटा = गजानां करिणां घटा समूहः; निभृततरकर्णा = निभृततरम् अत्यन्तं स्तब्धीभावं प्राप्ता कर्णाः श्रोत्राणि यस्याः सा तादृशी, प्रवृत्ता = जाता । तात्कालिकमुक्ताऽनुक्तं सर्वं वृत्तान्तं पिण्डीकृत्याह—जगदिति । ( किं बहुना ) जनकतनयोक्तौ = जनक तनयायाः सीताया देव्या उक्तौ वचने ( प्रवृत्ते सति ) कृत्स्नम् = सर्वम्, जगत् = प्राणिप्राणि जातम्, अवहितम् = सावधानम्; जातम् = भूतम् । सीता देवी किं वक्ष्यतीति श्रवणकुतूहलितया अन्याः सर्वाश्चेष्टाः परित्यज्य तदभिमुखीभूय शान्तं वर्तत इत्यर्थः । शिखरिणी वृत्तम् ॥ २३ ॥

सकललोकेति—सकललोके = सर्वस्मिन् भुवने महार्थप्रत्ययेन = अर्थे प्रत्ययोऽर्थप्रत्ययः महाश्चासावर्थप्रत्ययो महार्थप्रत्ययस्तेन, अर्थात् परया श्रद्धया आपूरितमनुष्ठितं गुरुशासनं गुरोः पितुः शासनं राज्यं परित्यज्य चतुर्दशवर्षपर्यन्तादण्डकारण्यनिवासार्थमाज्ञा येन स तम्,

धणद्धरं राहवकुलणंदणं तुमं उज्झिअ पइव्वदाविरुद्धेण भावेण अवरो को वि मए वेहिं णिव्वण्णिदो, वअणेण आलविदो, हिअएण वा चिंतिदो, एदिणा सच्चवअणेण सअललोअपच्चक्खदीसमाणदिव्वरूपधारिणी भअवदी महप्पहावा चित्तशुद्धिं मे लोअस्स पआसीकरोदु ( पअडीकरोदु ) हिअमहामहीहरसहस्सविरइदसेदुबन्धविभत्तमहासमुद्दम् सुरासुरभुवणेक्क-

( सर्वे संभ्रमं नाटयन्ति )

तमहामहीधरसहस्रविरचितसेतुबन्धविभक्तमहासमुद्रं सुरासुरभुवनैकधनुर्धरं राघवकुलनन्दनं त्वामुज्झित्वा पतिव्रताविरुद्धेन भावेनान्यः कोपि नयनाभ्यां निर्वर्णितः, वचनेनालपितः, हृदयेन वा चिन्तितः, एतेन सत्यवचनेन सकललोकप्रत्यक्षदृश्यमानदिव्यरूपधारिणी भगवती महाप्रभावा चित्तशुद्धिं मे लोकस्य प्रकाशीकरोतु ।

---

उन्मूलितेति—उन्मूलितानामुत्थापितानां महतां महीधराणां पर्वतानां सहस्रेण विरचितो निर्मितो यः सेतुबन्धः तेन विभक्तः = द्वैधीभावं प्रापितः महासमुद्रो येन स तम्, सुरासुरभुवनैकधनुर्धरम् = सुरासुराणां देवासुराणां भुवने अर्थात् स्वर्गे पाताले च एकमद्वितीयं धनुर्धरं धानुष्कम्, अस्मादृशस्त्रिलोक्यां कोऽपि धनुर्धरो नास्ति त्वमिति भावः । एतादृशम् —राघवकुलनन्दनम् = रघुवंशकेतुमित्यर्थः । त्वाम् = स्वपतिं रामम्, उज्झित्वा = त्यक्त्वा पतिव्रताविरुद्धेन = सतीभावविपरीतेन, भावेन = सङ्कल्पेन, निर्वर्णितः = दृष्टः, वचनेन = वाचा, आलपितः = वार्तीकृतः, वा = अथवा हृदयेन = मनसा, चिन्तितः = ध्यातः । तदा—एतेन = मदुच्चारितेन, सत्यवचनेन = ऋतवाक्येन । सकलेति—सकले समग्रे लोकैर्जनैर्दृश्यमानं नेत्रगोचरीक्रियमाणं दिव्यं यद् रूपं, तस्य धारिणी अर्थात् दिव्यं रूपं धारयित्वा, भगवती = पूजनीया सकलस्याराध्यत्वात्, महाप्रभावा = दिव्यशक्तिः विघ्नध्वंसनात्मना, मम चित्तशुद्धिम् = मानसीं पवित्रताम्, प्रकाशीकरोतु = सर्वसमक्षे प्रकटयतु ।

सम्भ्रमम् = विस्मयतत् ।

धा—किमेतदव्यक्तभीषणं लोकस्य रसान्तरमाविर्भूतम् ।

नादः पातालमूलात्प्रभवति ककुभः
( तुमुलं ) पूरयन् व्योमरन्ध्रं,
पात (?) क्लिष्टा इवैते दिशि दिशि
गिरयो मन्दमन्दाश्चरन्ति ।
बद्धानन्दाः समन्ताल्लवणजलधयो मथ्यमाना इवासन्
सीमामुल्लङ्घ्य वेगादुदनिधिसलिलैः स्वानि वेलावनानि ॥२४॥

---

अव्यक्तभीषणम् = अव्यक्तञ्च तद्भीषणम्, स्फुटं द्रष्टुमशक्यत्वादव्यक्तम्, पूर्वमदृष्टचरत्वादलौकिकत्वान्महाप्रतापत्वाच्च भीषणम् । रसान्तरम् = रसा पृथिवी, अन्या रसा रसान्तरम् । दृश्यमानजडपृथिवीतो विलक्षणं एतदधिष्ठातृदेवस्वरूपमित्यर्थः ।

तत्तदभिमानिदेवानां विग्रहवत्त्वं निसर्गसिद्धदिव्यैश्वर्यवत्त्वञ्च उत्तरमीमांसायां—प्रतिपादितं तत एव द्रष्टव्यम्

"**नाद**" इति—ककुभः = दिशः, पूरयन् = पूर्णीकुर्वन् टङ्कारयन्नित्यर्थः, तथा व्योमरन्ध्रम् = व्योम आकाशमेव रन्ध्रं आकाशात्मकं महाच्छिद्रञ्च पूरयन्, पातालमूलात् = रसातलात्, नादः = ध्वानः प्रभवति = उत्पन्नो भवति । सर्वदिगन्तव्यापी नादः प्रादुर्भवतीत्यर्थः । एते = पुरो वर्तमानाः, गिरयः = पर्वताः, पातक्लिष्टा इव = पातेन पतनेन क्लेशाक्रान्ता इव दिशि दिशि = सर्वासु दिशासु, मन्दमन्दाः = शनैः शनैरित्यर्थः चरन्ति = ध्वानेन ध्वानेन परितष्टङ्कारं कुर्वन्तश्चलन्त इव भवन्तीत्यर्थः । लवणजलधयः = क्षारोदाः सागराः बद्धानन्दाः = बद्धः प्राप्त आनन्दो यैः आनन्दभरिताः सन्तः वेगात् = रंहसः सीमाम् = ( स्वीयां ) मर्यादाम्, उल्लङ्घ्य = अतिक्रम्य, उदनिधिसलिलैः = समुद्रजलैःअर्थात् स्वीयैरेव पानीयैः, स्वानि = स्वकीयानि, वेलावनानि = तीरवनानि तटोद्यानवर्तिनोभूभागान्ः मथ्यमानाः = विलोड्यमाना इव, आसन् = अभूवन् ।

सीतायाः सत्यापने कृते सति भूदेव्यामाविर्भवन्त्यां पृथिव्या अभ्यन्तरे महान्नादोऽभूत्, पर्वताश्च चकम्पिरे, समुद्राः स्वां मर्यादामतिचक्रमुश्चेत्यर्थः । स्रग्धरावृत्तम् ॥ २४ ॥

सीते ! त्वामुद्दिश्य प्रादुर्भूतानि सर्वलक्षणानि पुनरप्यावर्ततां सत्यम्।

सं —( "जइ मए सअललोअ" इत्यादि पठति )

( नेपथ्ये )

स्वस्ति गोभ्यः, स्वस्ति ब्राह्मणेभ्यः, स्वस्ति राघवकुलाय ।

आकृष्टा मिथिलाधिराजतनयासत्येन पातालत-
स्तोयान्मज्जनलीलया तनुमिमां हित्वात्मनः स्थावराम् ।
साक्षाल्लक्षितदिव्यमूर्तिमहिमा योगेन विश्वम्भरा
लोकं मध्यममम्बुराशिरशना देवी समारोहति ॥ २१ ॥

सर्वे—( आकर्ण्य विस्मयं नाटयन्ति )

---

सीतामुद्दिश्य=सीताम्प्रतीत्यर्थः । सर्वलक्षणानि=सर्वाणि सीतासतीत्वानुमोदनकराणि चिह्नानि । पुनरपि=भूयोऽपि, सत्यम्=तदेवसत्यापनवाक्यम्, आवर्तताम्=आवृत्त्या पठनं भवतीति शेषः ।

आकृष्टेति—"विश्वम्भरा देवी मध्यमं लोकं समारोहति" इति क्रियाकारकसम्बन्धः । ( इयम् ) अम्बुराशिरशना=अम्बुराशिः सागर एव रशना काञ्ची यस्याः सा विश्वम्भरा=पृथिवी, देवी = दिव्यशक्तियुता, मिथिलाधिराजतनयासत्येन = मिथिलाधिराज = मिथिलादेशाधीश्वरो जनकः, तस्य तनया पुत्री जानकी, तस्याः सत्येन स्वसतीत्वप्रतिज्ञाबोधकेन सत्यवचनेन पातालतः = रसातलात् आकृष्टा = आकर्षं नीता सती, इमाम् = सर्वलोकप्रत्यक्षाम्, आत्मनः = स्वस्य, स्थावराम् = आधिभौतिकीं जडाम्, तनुम् = नानानदनदीप्रभृत्यनेकपदार्थजातसङ्कुलां मूर्तिम्, मज्जनलीलया = स्नानलीलया अभिषेकव्याजेन तोयात् = जलादिव हित्वा = त्यक्त्वा, साक्षादिति—साक्षात् सर्वप्रत्यक्षं लक्षिता = प्रतीता या दिव्या मूर्तिः तस्याः महिमा महत्त्वं यस्याः सा, योगेन सामर्थ्यविशेषेण, मध्यमम् = मध्ये भवं भूलोकम्, समारोहति = आरूढा भवति । भूर्भुलोके दिव्यं रूपं प्रकटीकरोतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ २१ ॥

वा—कथमदृष्टपूर्वा अश्रुतपूर्वा इयमाश्चर्यपरम्परा वृत्तिः ।
एतज्ज्योतिरुदेति नागभवनात्संवासयन्तोऽम्बरं-
माल्यैः शीतलपद्मगन्धिसुभगाः पातलवाता दिशः ।
एषाविर्भवति क्रमेण वसुधा राजन् ! दधानाञ्जलिं
सौमित्रे ! प्रणमादरात् कुशलवौ ! पुष्पाञ्जलिः कीर्यताम् २६

सर्वे—( यथोक्तं नाटयन्ति )

( ततः प्रविशति पातालोद्भेदं नाटयन्ती पुष्पवर्षाभिर्नारीभिः सह समामोदात्तोज्ज्वलवेषाभिश्च पृथ्वी )

सर्वे—( कृताञ्जलयः )

---

अदृष्टपूर्वेति—पूर्वं न दृष्टा, नच पूर्वं श्रुता । वृत्तिः = अवस्थितिः एतादृशो वृत्तान्त इत्यर्थः ।

एतज्ज्योतिरिति—नागभवनात् = नागानां सर्पाणां भवनात् पातालात्, एतत् = पुरश्चक्षुर्विषयः, ज्योतिः = दिव्यं महः, उदेति = उदीतं भवति । पातालवाता = नागभवनात्प्रचालिताः पवनाः, माल्यैः = पुष्पदामाभिः चिरात् = चिरकालाय दिशः = काष्ठाः संवासयन्तः = सुरभयन्तः "प्रवान्ति" इति शेषः । कथम्भूताः पातालवाताः—शीतलपद्मगन्धसुभगाः—शीतलो हृदयशान्तिकृत्, पद्मानां कमलानां गन्धः सौरभं येषु ते शीतलपद्मगन्धाः तैश्च सुभगाः प्रिया इति । मन्दाः सुगन्धाः शीतलाश्चेत्यर्थः । हे ! राजन् ! राम ! एषा वसुधा = धरा, अञ्जलिम् = करपुटम्, दधाना = कुर्वाणा क्रमेण=क्रमशः, आविर्भवति=प्रकटी भवति, पृथिव्याः पतीरामेति युक्तं भूदेव्या रामपुरोऽञ्जलिधारणम् । हे ! सौमित्रे ! लक्ष्मण ! आदरात् = सत्कारपूर्वकम् प्रणम = प्रह्वीभव । हे ! कुशलवौ ! पुष्पाञ्जलिः = कुसुमानामञ्जलिः, कीर्यताम् = प्रक्षिप्यताम् । धरां देवीं प्रति पुष्पवर्षणं विधीयता मित्यर्थः । वृत्तं पूर्वमुक्तम् ॥ २६ ॥

पातालोद्भेदम् = पातालस्फोटम् । पुष्पवर्षाभिः = कुसुमवृष्टिभिः, तथा नारीभिः = अन्याभिर्देवीभिः सह । कीदृशीभिर्नारीभिरित्याह—समानेति समानस्तुल्यः उदात्तः उद्भटः सम्यतासूचकः उज्ज्वलः शुद्धो भासुरो वेषो नेपथ्यं यासां ताभिः ।

त्वं बिभर्षि जगत्कृत्स्नं शेषमूर्ध्ना त्वमुह्यसे ।
काम्यानभिमतान् देवास्त्वामेव दुदुहुः पुरा ॥ २७ ॥
उन्नतौ विन्ध्यकैलासौ तव देवि ! पयोधरौ ।
जाह्नवी हारयष्टिस्ते समुद्रा रत्नमेखलाः ॥ २८ ॥
यज्ञाङ्गानां समुत्पत्त्यै वासवस्त्वां प्रवर्षति ।
रत्नानामोषधीनां च त्वां प्रसूतिं प्रचक्षते ॥ २९ ॥
नमो भगवत्यै विश्वम्भरायै । ( *प्रणमन्ति* )

पृथ्वी—( दिशो विलोक्य ) अहो ! अनतिक्रमणीयं शासनं प्रतिनिवृत्तानां पतिव्रतानाम् ।

---

त्वमिति । ( हे ! पृथिवि ! देवि ! ) त्वं कृत्स्नम् = समग्रम्, जगत् = नदनदीमहीधरकलापोपेतां संसारम्, बिभर्षि = धारयसि, त्वम् = त्वमेव शेषमूर्ध्ना = शेषस्यानन्तभोगिनो भगवतो मूर्ध्ना शिरसा, उह्यसे = धार्यसे । पुरा = पृथोरवतारकाले, देवाः = इन्द्राद्याः सुराः अभिमतान् = इष्टान् काम्यान् = भोगान् त्वामेव दुदुहुः = दुग्धवन्तः । इदमाख्यानमूलं श्रीभागवतादिपुराणेषु सम्यगुपबृंहितम् ।

हे ! देवि ! उन्नतौ = उच्छ्रायवन्तौ, विन्ध्यकैलासौ तव पयोधरौ = स्तनौ "स्तः" इति शेषः । जाह्नवी = जह्नोः कन्या भागीरथी गङ्गा, ते = तव, हारयष्टिः = माला ( अस्ति ) । ( एवम् ) समुद्राः=सर्वेऽपि सागराः रत्नमेखलाः=रत्नजटिताः काञ्च्यः ( सन्ति ) ।

यज्ञाङ्गानामिति—वासवः=इन्द्रः यज्ञानामिष्टिसत्रसोमादीनां यागानां यानि अङ्गानि साधनानि बीजपशुप्रभृतीनि तेषाम्, समुत्पत्त्यै=सम्यग् आविर्भावेन प्रवृत्त्यै त्वम् प्रवर्षति=सिञ्चति । रत्नानाम्=हीरकादीनां मणीनाम् ओषधीनाम्=गुडूच्यादीनां त्वाम्=त्वामेव, प्रसूतिम्=उत्पत्तिस्थानं देशम् प्रचक्षते=कथयन्ति वेदविदो मुनय इति शेषः ॥ २७,२८,२९ ॥

अनतिक्रमणीयम्=अनुल्लङ्घनीयम् । शासनम्=आज्ञा । प्रतिनिवृत्तानाम्=पतिगृहमायातानाम् ।

व्याप्य द्यावापृथिव्यौ प्रतिहतगतयो यत्र भानोर्मयूखाः-
गाम्भीर्यादक्षीणवेगो नियमयति गतिं यच्च वोढुं गरुत्मान् ।
यत् स्थानं विप्रकर्षात् परिमिततपसां योगिनामप्यगम्यं
तस्मादाकृष्य साहं जनकतनयया दूरमारोपितास्मि ॥ ३० ॥

तामेवाभिभाषिष्ये । वत्से ! मैथिलि ! कर्तव्यतां केनार्थयसि ?

सीता—( सविस्मयं विलोक्य ) भअवदि, का तुमं ? (१)

पृथ्वी—किं न मां वेत्ति भवती ?

---

(१) ( भगवति का त्वम् )

---

व्याप्येति—द्यावापृथिव्यौ=द्यौश्च पृथिवी च द्यावापृथिव्यौ रोदसी व्याप्तिं नीत्वा भानोः=सूर्यस्य मयूखाः=गभस्तयः ( किरणाः ) यत्र=यस्मिन् प्रदेशे प्रतिहतगतयः=प्रतिहता निरुद्धाः गतिर्येषां ते निरुद्ध ( गति ) वेगाः "भवन्ति" इति शेषः, यं प्रदेशं प्रति सूर्यकिरणा अपि गन्तुं न प्रभवन्ति तत्सत्यलोकाख्यं धामेत्यर्थः । गाम्भीर्यादक्षीणवेगः=गाम्भीर्येण अक्षीणो न क्षीणः क्षयं न प्राप्तो वेगो रंहो यस्य सः गरुत्मान्=गरुडः यत्=स्थानम्, गतिम्=गमनम्, वोढुम्=धारयितुम्ः नियमयति=नियतीकरोति अर्थात् यत्स्थानम्प्रति गन्तुं गरुडोऽपि न प्रभवति, परिमिततपसाम्=परिमितं तपो येषां तेषामपक्वयोगानाम् योगिनाम्=समाधिभाजामपि विप्रकर्षात्=दूरात्वहेतोः अगम्यम्=गन्तुमयोग्यमप्राप्यम् धूममार्गेण गतानां चन्द्रलोकादेव परावृत्तिश्रुतेरितरेषां तपोरहितानान्तु कैव कथा । तस्मात्=स्थानात्सत्यलोकाख्यात् आकृष्य=आकर्षणं नीत्वा जनकतनयया=सतीमूर्धाभिषिक्तया जानक्या साऽहम्=वेदशास्त्रप्रसिद्धमाहाभाग्या ( महानुभावा ) दूरम् आरोपितास्मि=इहानीतास्मि । महान् वाचामगोचरोऽस्याः पतिव्रताधुरीणायाः प्रभव इति भावः । स्रग्धरा ३०

तामेव=सीतामेव । अभिभाषिष्ये=आकारयिष्ये । केन=निमित्तेन, कर्तव्यताम्=कार्यताम्, अर्थयसि=प्रार्थयसे किन्ते कार्यमस्तीत्यर्थः । वेत्ति=जानाति ।

मामामनन्ति मुनयः प्रणवद्वितीयां
मत्तः प्रसूतिरखिलस्य चराचरस्य।
मय्येव सिध्यति तपोऽवनिदेवतां त्वं
जानीहि जानकि! तवान्तिकमागतां माम्॥३१॥

अपि च, वत्से, श्रूयतामिदमपि।

अभ्युद्धृतिश्च सहसा ममैवेयमनुष्ठिता।
पुरा महावराहेण त्वत्प्रभावेन साम्प्रतम्॥ ३२॥

---

मामिति—मुनयः=वेदान्तरहस्यमननशीलाः महर्षयः प्रणवद्वितीयाम्= प्रणव ओङ्कारो द्वितीयः सार्थो यस्याः सा ताम्, मम शक्तिरूपत्वात् प्रणवस्य च शिवरूपत्वात् शक्तिशक्तिरभेदाच्च अविभागेन वर्तमानत्वादिति भावः स्फटिकमिव शिवार्कमणिदीपिकादिग्रन्थेषु। अखिलस्य=समस्तस्य चराचरस्य= स्थावरजङ्गमात्मकस्यास्य संसारस्य मत्त=मत्सकाशादेव प्रसूतिः=उत्पत्तिः, पुरुषस्य (प्रणवस्य) बीजरूपत्वात् क्षेत्ररूपत्वाच्च ममेतिभावः। मय्येव= सकलाधारभूतायाम् तपः=योगादि सिद्ध्यति=फलितं भवति निराश्रयाणा- मासनादिधारणानुत्पत्ते। हे! जानकि! सीते! तव अन्तिकम्=समीपम्, आगताम्=आयाताम्, अवनिदेवताम्=देवरूपां पृथिवीम्. त्वं जानीहि= अवगच्छ, नान्यं कमपिसाधारणं जनमिति भावः। वसन्ततिलकावृत्तम्॥३१॥

अभ्युद्धृतिरिति—इयं मम अभ्युद्धृतिः=समुद्धारः, पुरा=वाराहे कल्पे यदा हिरण्याक्षः सकलां मही रसातलम्प्रति निनाय, साम्प्रतम्= इदानीम्, त्वत्प्रभावेन=त्वदीयेन पातिव्रत्यप्रतापेन सहसा=झटित्येव, अनुष्ठिता= सम्पादिता, अनुकम्पाम्=दयाम्, अभ्यास्य=कृत्वा। चारित्र्याविकलत्वेन=चरित्रमेव चारित्रम्, अविकलस्य अखण्डितस्य भावोऽविकलत्वम्, चारित्रस्याऽवि- कलत्वं चारित्राऽविकलत्वं तेन अखण्डितव्रतेनेत्यर्थः। अभिलषिता= प्रार्थिता आसीदित्यर्थः॥ ३२॥

**सीता**—( अञ्जलिं बध्वा ) भअवदि, अणुकम्पं अब्भासिम जह तुए एव्वं चारित्ताविकलत्तणेण अहिलसिदा तह लोअस्स पआसीअदु।

**पृथ्वी**—तथास्तु । ( समन्तादवलोक्य )

ऋषयो दानवाः सिद्धा यक्षगन्धर्वकिन्नराः ।
मानवा लोकपालाश्च भवन्त्ववहिताः क्षणम् ॥ ३३ ॥
रामं दाशरथिं मुक्त्वा न जातु पुरुषान्तरम् ।
मनसापि गता सीतेत्येवं विदितमस्तु वः ॥ ३४ ॥

( आकाशात् पुष्पवृष्टिः दुन्दुभिध्वनयश्च )

**सर्वे**—( सहर्षम् ) अहो ! विस्मयः । वसुन्धरासम्पादितशुद्धिमनुवर्तयन्ति बहुविधान्येतानि प्रादुर्भवन्ति—

---

( १ ) भगवति, अनुकम्पां अभ्यास्य यथा त्वयैवं चारित्राविकलत्वेनाभिलषिता तथा लोकस्य प्रकाश्यताम् ।

---

तथा=तेनैवरूपेण । लोकस्य=जनस्य "पुरत" इति शेषः प्रकाश्यताम्=स्पष्टीक्रियताम् ।

"ऋषय" इति । ऋषयः=वसिष्ठवाल्मीकिप्रभृतयः दानवाः=इन्द्रादयो बलिप्रमुखाः, सिद्धाः=देवयोनिविशेषाः.........यक्षगन्धर्वकिन्नराः=तत्र यक्षाः कुबेराद्याः, गन्धर्वाः तुम्बुरुप्रभृतयः, किन्नराः देवगायकविशेषाः एतेऽपिसर्वे देवयोनिभेदा एव, मानवाः=मनुष्याः लोकपालाः=अष्टाविन्द्राद्याः सर्वे चैते क्षणम्=क्षणमात्रम् अवहिताः=दत्तावधानाः, भवन्तु ॥ ३३,३४ ॥

रामभिति—दाशरथिम्=दशरथस्य प्रमुखं पुत्रं रामम्=रामनामानम्, मुक्त्वा = विहाय, जातु = कदाचित् मनसाऽपि = सङ्कल्पेनापि किमुत वाचा कायेन वा, पुरुषान्तरम् = अन्यो रामभिन्नः पुरुषः पुरुषान्तरम् = रावणादिकमित्यर्थः न गता = नैव प्राप्ता, इति = अमुना प्रकारेण एवम् = सिद्धान्तरूपतया वः = युष्माकम्, विदितम् = ज्ञातम्, अस्तु = भवतु ॥

वसुन्धरेति—वसुन्धरया पृथिव्या सम्पादितां साधिता शुद्धिर्नैर्मल्यं यस्याः सा तां सीतामित्यर्थः । अनुवर्तयन्ति = अनुमोदयन्ति एतानि प्रादुर्भवन्ति = प्रकटयन्ते अनुवर्तयन्तीति शब्दान्वयः । एतदेव दर्श-

आशामुखे त्रिदशदुन्दुभयो ध्वनन्ति
व्योम्नः पतन्ति कुसुमानि निरन्तराणि ।
आकस्मिकोऽप्युपरि धार्यत एव देव्याः
केनाप्यवध्यवितते गगने वितानः ॥ ३५ ॥

( नेपथ्ये )

जयति दशरथः स सत्यसन्धो
जयति तथैकधनुर्धरश्च रामः ।
जयति रघुकुलं कलङ्कमुक्तं
जयति चरित्रगुणोषता च देवी ॥ ३६ ॥

---

यति—"आशामुखे" इति । आशानां दिशां मुखे त्रिदशदुन्दुभयः = त्रिदशानां देवानां दुन्दुभयः वाद्यविशेषाः ध्वनन्ति = शब्दायन्ते, व्योम्नः = आकाशात् निरन्तराणि = निरवच्छिन्नानि उत्तरोत्तरमविरतप्रपातरूपाणि कुसुमानि = पुष्पाणि पतन्ति आकाशादनारतं पुष्पवृष्टिर्जायते इत्यर्थः । अव-ध्यविततं = अनन्यमण्डलं तद् विततं व्यापकं तस्मिन् गगने = व्योमनि, आकस्मिकः = अकस्मादुत्पन्नः अज्ञातकारणक इत्यर्थः वितानः = उल्लोचः केनापि = अनिर्दिष्टेन अदृष्टेन च ( अलौकिकमाहात्म्यशालिना ) देव्याः = सीतायाः, उपर्यपि धार्यते = सन्तान्यते एवेत्यहो महाश्चर्यमयं देवी सती-त्वमिति भावः । वसन्ततिलका वृत्तम् ॥ ३५ ॥

जयतीति—सः = प्रसिद्ध पुराणपुरुषः सत्यसन्धः = सत्यप्रतिज्ञः कैकेय्यै प्रतिज्ञातवरप्रदानात्, दशरथः = नाम राजा, जयति = सर्वोत्कर्षेण वर्तते । यस्य कुले एतादृशी कुलवधूः सतीप्रमुखेति भावः । तथा एकधनुर्धरः = अद्वितीयो धानुष्कः रामः जयति, कलङ्कमुक्तम् = जनापवाददोषरहितम्, रघुकुलम् = रघुवंशः जयति, चरित्रगुणोपेता = चरित्रगुणैः सती धर्मादिरक्षक-सदाचारादिगुणैः उपेता देवी = सीता च = अपि जयति सर्वोत्कर्षेण भाति, अदमङ्गलमिदं सर्वमित्यर्थः । पुष्पिताग्रा ॥ ३६ ॥

पृथ्वी—अपि शुद्धिमती वैदेही ?

सर्वे—( कृताञ्जलयः )

या स्वयं प्रकृतिनिर्मला सती
छाद्यतेऽन्यजनवादवारिदैः ।
जानकी भगवति ! त्वयाद्य सा
चन्द्रिकेव शरदा विशोधिता ॥ ३७ ॥

( प्रणमन्ति ) अपि नाम आश्रमं मिथुनं भूयः संयुज्यते ।

वाल्मीकिः—भो ! भोः ! कौसल्यामात्यः ! संभाव्यतां सीता परिशुद्धिपरिग्रहेण ।

---

यास्वयमिति—या स्वयम् = स्वयमेव प्रकृतिनिर्मला = प्रकृत्या निसर्गेणैव निर्मला मलशून्या शुद्धा, सती=अव्यभिचारिणी सत्यपि, अन्यैरिति-अन्ये च ते जना अन्यजनाः = प्राकृताः पुरुषाः तेषां वादाः तत्कृता अपवादा एव वारिदाः मेघाः तैः साधारणजनकृतापवादरूपैर्मेघैरित्यर्थः छाद्यते = आच्छिद्यते, हे ! भगवति = महामहिमशालिनि ! पृथिवि ! देवते ! सा जानकी अद्य त्वया शरदा = शरदृतुना चन्द्रिका = कौमुदीव विशोधिता = नैर्मल्यं प्रकाशिता ।

यथा—स्वभावशुद्धाऽपि चन्द्रिका मेघाद्यावरणदोषेण अशुद्धेव भाति शरदा च मेघाद्यावरणनिरस्या निर्मलीक्रियते तथा निसर्गनिर्मलाऽपि जानकी प्राकृतपुरुषकृतापवादरूपेण दोषेणाऽनिर्मलेवाभात् गेदानीं त्वया तद्दूरीकरणेन शुद्धिं नीतेति फलितार्थः । उपमालङ्कारः ।

राम—यदाज्ञापयन्ति गुरवः । वत्स ! लक्ष्मण ! क्रियतां पादप्रणाम ।

सीता—( अञ्जलिं बध्वा सहर्षम् ) जेदु अज्जउत्तो ।

वाल्मी—अहो ! उदात्तशालीनः प्रतिग्रहप्रकार ।

लक्ष्म—(सहर्षं सलज्जं च) आर्ये ! वध्यः पातकी लक्ष्मणः प्रणमति ।

सीता—कीस तुए अप्पा णिन्दियदि, एव्वं अप्पगुरुणियोअवट्टी चिरं जीव ।

वाल्मी—वत्स ! राम ! अनेन गृहीता वैदेही, स्वयमाभाष्य पाणिना पाणौ संगृह्य नियुज्यतां यज्ञाधिकारे ।

राम—( लज्जां नाटयति )

वाल्मी—अलं लज्जया, यज्ञाङ्गं विना किं वा अपूर्वं दाशरथे सर्वसाक्षिकं पाणिग्रहणमिति ?

राम—समाचारोऽयं गुरुनियोगश्च ( सीतां पाणौ गृहीत्वा ) भद्रे ! वैदेहि !

अपत्यमिष्टं च वदन्ति देवाः
फलद्वयं दारपरिग्रहस्य ।

---

(१) जयत्वार्यपुत्रः )
(२) कुतस्त्वया आत्मा निन्द्यते, एवमात्मगुरुनियोगवर्ती चिरं जीव ।

---

उदात्तशालीन =उद्भटः सदाचारपूर्वकश्च । प्रतिग्रहप्रकारः = परित्यक्तायाः सीतायाः पुनः स्वीकरणम् ।
वध्यः = वधमर्हति, हन्तुं योग्य इत्यर्थः । कुतः कस्माद्धेतोः किमर्थमित्यर्थः ।
एवमिति—एवरूपेण, आत्मनो यो गुरुर्ज्येष्ठो भ्राता, तस्य नियोगवर्ती आज्ञाकर सन् । चिरंजीव = आयुष्मान् भवेत्याशी ।

स्वयमाभाष्येत्यनेन स्त्रियः सम्भाषणीया इति सूचयति । अपूर्वमिति लोकोत्तरगतीत्वाद्व्यापकत्वात् । समाचार = सद्व्यवहार । गुरुनियोग = गुरोर्नियोग आज्ञा, किंवा—गुरुर्महान् प्रशस्यो नियोगः ।

अपत्यमिति—देवाः = विद्वांसो गृहस्थानिप्रभृतयः दारपरिग्रहस्य = दाराणां परिग्रहस्य स्वीकरणस्य अर्थात् पाणिग्रहणस्य फलद्वयम् = द्वे फले

पूर्वं तयोस्त्वय्युदपादि हृद्यं
वहस्व वासे भवने द्वितीयम् ॥ ३८ ॥ (१)

**सीता**—जं अज्जउत्तो आणवेदि। उच्छ्वसिओ मे अप्पा। पच्चागदा मे पाणा।

**पृथ्वी**—अविघ्नमस्तु यज्ञानां काले वर्षतु वासवः।
निरातङ्काः प्रजाः सन्तु सीतारामसमागमात् ॥३९॥

( अन्तर्धानं नाटयन्ती निष्क्रान्ता )

**राम**—कथमन्तर्भूता वसुमती !

**वाल्मीकि**—अनतिदीर्घसन्निधाना हि देवताः।

---

(१) यदार्यपुत्र आज्ञापयति। उच्छ्वसितो मे आत्मा। प्रत्यागता मे प्राणाः।

---

वदन्ति = कथयन्ति। किन्तत्—अपत्यम् = सन्ततिः। इदम् = यागादिकं पारलौकिकं कर्म, स्त्रीरहितस्य गृहस्थाश्रमविहितयागादिकर्मस्वनधिकारादिति भावः।

तयोः = द्वयोः फलयोर्मध्ये पूर्वम् = आद्यम् फलम्, हृद्यम् = हृदयहारि कुशलवरूपम्, त्वयि उदपादि = उत्पन्नम्, भवने = ( सद्मनि ) गृहे वासे = निवासे सति, द्वितीयम् = इष्टाख्यं फलं वहस्व = सम्पादय (प्राप्नुहि)। उपजातिः ॥ ३८ ॥

आत्मा = अन्तःकरणम् उच्छ्वसितः = सजीवः सम्पन्नः। प्रत्यागताः = पुनरायाताः। भवद्विरहे मृतकल्पैवासमिति भावः।

अविघ्नमिति—यज्ञानाम् = अग्निष्टोमादीनाम्, अविघ्नम् = विघ्नाभावः अस्तु निर्विघ्नं यज्ञा अनुष्ठिता भवन्त्वित्यर्थः। वासवः = इन्द्रः काले = समये वर्षतु = वर्षेण भूमिं सिञ्चतु येन यज्ञानुकूलव्रीह्यादिधान्यानां निरन्तराया प्रवृत्तिः स्यादिति भावः। सीतारामसमागमात् = सीतारामयोः समागमात् सम्मिलनाद्धेतोः, प्रजाः = निरातङ्काः = निरामयाः निर्भयाश्च सन्तु ॥ ३९ ॥

अन्तर्धानम् = अन्तर्हितिम्। अन्तर्भूता = तिरोधानं प्राप्ता। प्रणयम् = प्रत्युदिनम्।

राम—भगवताहमप्यनुज्ञातो लक्ष्मणमभिषेक्तुमिच्छामि ।

लक्ष्म—( अञ्जलिं बध्वा ) यदि प्रसन्नमार्येण, तेन तनयसङ्क्रामिणा युवराजशब्देन विभज्यतां चिरकालानुचरः सौमित्रिः ।

वाल्मी—इक्ष्वाकुकुलसदृशमभिहितम् ।

राम—का गतिः, अनतिक्रान्तैव रामेण लक्ष्मणप्रार्थना । अवश्यं चेदिदं कर्म वत्सस्य, तदहमेव तत्प्रतिपत्स्ये । सौमित्रे ! आनीयतामभिषेकसम्भारः ।

लक्ष्म—आर्य ! सम्पादितं सर्वमभिषेकसमयोचितं व्यग्रहस्ताभिर्देवताभिः । पश्य—

एष च्छत्रं वहति भगवान् वासवश्चन्द्रगौरं
देवी वालव्यजनयुगलं जह्नुकन्या शची च ।
अम्भोगर्भान् कनककलशान् धारयन्ति प्रजौघा-
श्चित्रं नैतत् प्रणयसुलभाः सम्पदस्त्वद्विधानाम् ॥४०॥

---

तनयसङ्क्रामिणा = तनये पुत्रादौ सङ्क्रमभाजा युवराजशब्देन, चिरकालानुचरः = चिराय दास्यमाचरन् सौमित्रिः = लक्ष्मणोऽपीदहमेव निभज्यताम् = वण्ड्यताम् । अर्थात् योऽय मयि चिराय राज्यभारो धारित स इदानीं पुनर्न्योऽर्पणीय । इक्ष्वाकुकुलसदृशम् = इक्ष्वाकुवंशानुरूपम् । एवमेवेक्ष्वाकूणां समुदाचारो यद्योग्ये पुत्रे राज्यभारमर्पयित्वा स्वयं स्वस्था भवन्तीति । अनतिक्रान्ता = नोल्लङ्घिता । वत्सस्य = लक्ष्मणस्य । प्रतिपत्स्ये = विधास्ये । लक्ष्मणकार्यमहमेव करिष्ये । आनीयताम् = उपस्थाप्यताम् । अभिषेकसम्भारः = राज्यदार्पणकालीनस्नानाद्युपकरणकलाप. । व्यग्रहस्ताभिः—कार्यकुशलाभिरित्यर्थः ।

तदेव दर्शयति—"एष" इति । एष भगवान् वासवः = इन्द्रः चन्द्रगौरम् = शशिधवलम्, छत्रम् = आतपत्रम्, वहति = धारयतेऽयुवयोरभिषेकार्थमित्यर्थः । देवी = दिव्यशक्तिमनी जह्नुकन्या = जाह्नवी गङ्गा, शची = इन्द्राणी च वालव्यजनयुगलम् = चामरद्वन्द्वम्, वहत इति विभक्तिव्यत्ययेनान्वयः । प्रजौघाः = प्रजानामोघा. प्रजाजनसङ्घाः

**राम**—आवयोस्तर्हि वेत्राधिकारः ।

**लक्ष्म**—अनुगृहीताभियोगः संविभागः ।

**राम**—लक्ष्मण ! वेत्रं धारय । ( वाल्मीकिमुद्दिश्य ) भगवन्नभिषिच्यतां नप्ता ।

**वाल्मी**—( कलशमादायोपसर्पन् ) भो भोः साकेतनिवासिनः पौराः ! नानादिगन्तवासिनो राजानः ! विभीषणसुग्रीवहनुमत्प्रभृतयो महारथाः ! शृण्वन्तु भवन्तः—

**मैथिलीतनयः श्रेष्ठः कुशो नाम महारथः ।**
**अभिषिक्तोऽद्य साम्राज्ये मान्यतामस्य शासनम् ॥४१॥**

---

अनेके प्रजाजना इत्यर्थः, अम्भोगर्भान् = अम्भांसि जलानि गर्भे मध्ये येषां तान्, कनककलशान् = कनकस्य = सुवर्णस्य कलशान् घटान् सौवर्णकुम्भान् धारयन्ति = वहन्ति । ननु—कथं मनुष्याणां कृते देवताः स्वयं व्यग्रा भवेयुरित्याशङ्क्याह—एतत् देवताकर्तृकमभिषेकसामग्रीसङ्कलनं चित्रम् = आश्चर्यरूपं न, नादृश्येव तद्विधानाम् = तादृशालौकिकपुण्यभाजां कुशलवसदृशानाम् । सम्पदः = सम्पत्तयः, प्रणयसुलभाः = प्रणयेन प्रेम्णा सुलभा अनायासलभ्या भवन्तीतिशेषः । अदृष्टचेष्टितमेवज्ञातीयकं यत्प्रेम्णा वशीभूय देवा अपि स्वयं मनुष्यकार्याणि साधयन्तीति भावः । एतच्च बहुधा पुराणोपाख्यानादिषु दृश्यते । मन्दाक्रान्ता ॥४०॥

आवयोः = द्वयोः रामलक्ष्मणयोः । वेत्राधिकारः = वेत्राऽधिकारः आवां द्वारपालौ भवेवेत्यर्थः । अनुगृहीताभियोगः = अनुगृहीतोऽनुकम्पितोऽभियोगोऽनुष्ठानं यस्य स तादृशः । संविभागः = कार्यवण्टनं नाम । मया सह मदीयकर्तव्यं विभज्यानुष्ठानेनाहमनुकम्पित एवेति लक्ष्मणाशयः । अभिषिच्यताम्.........................नप्ता = दुहितुः सुतः । वाल्मीकिः सीताया पितेवेति भावः ।

मैथिलीति—मैथिलीतनयः = सीतासुतः श्रेष्ठः = गुणैर्योग्यः महारथः कुशो नाम अद्य साम्राज्ये = चक्रवर्तित्वे अभिषिक्तः = कृताभिषेकः, अस्य = कुशस्य शासनम् = आज्ञा नियोगो वा मान्यताम् = प्रमाणीक्रियताम् ॥ ४१ ॥

पुरन्दरस्य यत् स्वर्गे पाताले यच्च वासुकेः ।
पृथिव्यां यच्च मान्धातुस्तदस्तु तव मङ्गलम् ॥ ४२ ॥

( अभिषेकं नाटयति )

( नेपथ्ये कलकलः )

जय जय महाराज !

सीता—पिअं मे दिट्ठिआ संवुत्तं ।

रामः—पूर्णास्ते लक्ष्मणस्य मनोरथाः ।

सर्वे—( हर्षं नाटयन्ति )

राम—( कुशमुद्दिश्य ) राजन् ! त्वयाहमभ्यनुज्ञातो यौवराज्ये लव-मभिषेक्तुमिच्छामि ।

कुश—यदाज्ञापयति देवस्तातः ।

राम—प्रकाशम् ( कलशमानीय )

महाराजकुशस्यायं लवो नाम प्रियानुजः ।
मया तद्वचनादेव यौवराज्येऽभिषिच्यते ॥ ४३ ॥

सर्वे—( यथोचितं हर्षं नाटयन्ति )

---

(१) प्रियं मे दिष्ट्या संवृत्तम् ।

---

कुशमभिमुखीभूयाह—पुरन्दरस्येति = पुरन्दरस्य = इन्द्रस्य यत् स्वर्गे = नाकलोके, यच्च वासुकेः = नागाधिपस्य पाताले, यच्च पृथिव्यां मान्धातुः = कृतयुगालङ्कारभूतस्य सूर्यवंशीयस्य एतन्नाम्नो भूपालस्य मङ्गलं वर्तते, प्रावर्तिष्ट वा तत् = तदेव मङ्गलम् = कल्याणम्, तव अस्तु = भूयादित्यर्थः ॥ ४२ ॥

"त्वयाहमभ्यनुज्ञातः" इति कुशस्य साम्राज्याधिकारित्वात् रामस्य तत्प्र-त्युक्तिः । कुश० तमेव पितृभावं मानयन्नाह—"यदाज्ञापयति" इति ।

महाराजेति—महाराजकुशस्य अयं प्रियानुजः = प्रियो भ्राता लवो नामास्तीतिशेषः । मया = रामेण तद्वचनादेव = तदाज्ञयैव, यौवराज्ये = युव-राजत्वे अभिषिच्यते = अभिषिक्तः क्रियते ।

वाल्मी—किं ते भूयः प्रियमुपहरामि ।

रामः—त्वद्दर्शनेन विधिना परिशुद्धवृत्ति-
जाता महाध्वरसखी मम सैव पत्नी ।
न्यस्तं च सूनुयुगलं भुवनाधिकारे
किं स्यादतः प्रियतमं गुरुणाभिधेयम् ॥ ४४ ॥

वाल्मी—तथापीदमस्तु—

स्थाणुर्वेधास्त्रिधामा मकरवसतयः पावको मातरिश्वा
पातालं भूर्भुवस्स्वश्चतुरुदधिसमाः साममन्त्राश्च वेदाः ।

---

भूयः = अन्यत्, प्रियम् = इष्टम्, उपहरामि = सम्पादयामि ।

त्वद्दर्शनेनेति । विधिना = दैवेन त्वद्दर्शनेन = भवदालोकेन परिशुद्धवृत्तिः = परितः शुद्धा वृत्तिर्यस्याः सा सर्वथाऽव्यभिचारिणी, सैव = पूर्वपरिचिता पत्नी = पाणिगृहीता मम महाध्वरसखी = महांश्चासावध्वरो यशोऽश्वमेधाख्यो नाम तस्य सहधर्मचारिणी फलभोक्त्री जाता, सूनुयुगलम् = पुत्रद्वयम् भुवनाधिकारे = भुवनस्याधिकारः प्रजापालनं तत्र न्यस्तम् = अभिषिक्तम् । अतः प्रियतमम् = अत्यन्तमिष्टं किं गुरुणाऽभिधेयम् = प्रतिपाद्यं स्यात् । अत्रैव सर्वमागतमिति भावः । वसन्ततिलका ॥ ४४ ॥

स्थाणुरिति । स्थाणुः = सदाशिवः, वेधाः = प्रजापतिर्ब्रह्मा, त्रिधामा—त्रीणि धामानि यस्य स त्रिधामा विष्णुः, मकरवसतयः = मकराणां नक्राणां वसतयो वासभूताः सप्त सागराः, पावकः = वह्निः, मातरिश्वा = पवनः, पातालम् = नागलोकः, भूर्भुवःस्वः = भूरादिलोकत्रयम् अर्थात् भूर्लोकः, भुवर्लोकः, स्वर्लोकश्च, चतुरुदधिसमाः = चतुःसमुद्रतुल्याः गम्भीरार्थप्रतिपादकत्वात् ब्रह्मणो निश्वासरूपत्वाच्च, साममन्त्राः = गीतिप्रधानमन्त्रसहिताः वेदाः = चत्वारोऽपि ऋगाद्या वेदाः, बहुवचनान्त वेदपदेनैव चतुर्णां वेदानां ग्रहणे साम्नामपि गृहीतत्वात् पृथक्साममन्त्रपदोपादानमृचा सम्मितत्वात्साम्नां प्राधान्यं

सम्यक्संसिद्धिविद्यापरिणततपसः पीठिनस्तापसाश्च
श्रेयांस्यस्मिन्नरेन्द्रे विदधतु सकलं वर्धतां गोकुलं च ॥४५॥

( इति निष्क्रान्ताः सर्वे )

षष्ठोऽङ्कः

कुन्दमाला समाप्ता ।

---

ख्यापयितुम् । सम्यगिति—सम्यक् समीचीनतया संसिद्धया अणिमाद्यैश्वर्यलाभेन विद्यया शास्त्राभ्यासेन, अथवा-विद्यया=ब्रह्मविद्यया ताभ्यां परिणतं परिपक्वं तपो येषा ते ब्रह्मश्रोत्रिया ब्रह्मनिष्ठाश्चेति फलितम्, एतादृशाः—पीठिनः=कुलपतयः ( वर्तमानकाले महन्तपदवाच्याः )

तापसाः=तपस्विनः ( एते सर्वे ) अस्मिन् नरेन्द्रे=सम्प्रत्येव प्राप्तराज्याधिकारे कुशरूपे राजनि, श्रेयांसि=भद्राणि मङ्गलानि, विदधतु=कुर्वन्तु, सकलम्=भुवनवर्त्ति गोकुलम्=गवां व्रजः वर्धताम्=समेधिता वृद्धिं प्राप्नोतु, गवां वृद्धयैव सकलराष्ट्रसम्पत्तिवृद्धेरिति भाव. । स्रग्धरा ॥४५॥

रसवस्वङ्कचन्द्रेऽब्दे ( १९८६ ) वैक्रमे वृषसञ्ज्ञके ।
भाद्रे मासे दले शुभ्रे सिंहार्के शनिवासरे ॥ १ ॥
षष्ठ्यां तिथौ तथा योगे वैधृते विदुषां वरः ! ।
पञ्चमे जार्जभूपेन्द्रे भारते सति शासति ॥ २ ॥
"सौरमोक्षप्रसविनी" नाम "सौभाग्य" हृदयङ्गमा ।
टीकेयं कुन्दमालायाः पूर्त्तिं नीता शुभावहा ॥ ३ ॥
साहित्यरसविद्वद्भिर्याः गुणं वाऽगुणमेव वा ।
कथयेयुर्महान्हर्षस्ते हि नः प्रभवो यत. ॥ ४ ॥
किन्तु सारसुधानन्दकन्दास्वादपराङ्मुखाः ।
ये कदाचिद् गुणाख्यानप्रवृत्ता स्तन्मनो व्यथा ॥ ५ ॥

उमेशे रमेशे न मे भेदभाव-
स्तयोः कण्ठयो रर्पिता कुन्दमाला ।
सटीका मुदं धारयेद्दर्शकाना-
मियं भावना मे फलेद्भव्यदात्री ॥ ६ ॥

इति श्रीपण्डितदेवीदासतनुजनुषा सारस्वतवंशावतंसेन सती विष्णुदेवीगर्भजेन स्यालकोटवास्तव्य-जैनन्यायविशारद कवितार्किक [ तन्त्रचक्रवर्ति ] दर्शनाचार्य नृसिंहदेवशास्त्रिविरचितायां "सौरभोल्लासिनी" इत्यपराख्याया "सौभाग्यवती" नाम कुन्दमालाव्याख्याया षष्ठोऽङ्कः ।

समाप्ता चेयं सौरभोल्लासिनी "सौभाग्यवती" टीका ।



# पंजाब यूनिवर्सिटी

की

प्राज्ञ, विशारद और शास्त्री

तथा

हिन्दीरत्न, भूषण और प्रभाकर

एवं

अन्य सर्व संस्कृत तथा हिन्दी पुस्तकों का

प्राप्तिस्थान—

## मेहरचन्द्र लक्ष्मण दास

अध्यक्ष—संस्कृत पुस्तकालय, सैदमिट्ठा बाज़ार

लाहौर ।